Old Series Vol. XVII. New Series Vol. V.

# THE Sanskrit Journal

OR

# ॥ सहृदया ॥

EDITED BY

R KRISHNAMACHARIAR, M.A.,
VIDYANIDHI

Chaitra to Phalguna

OF

Paridhavi year.



PRINTED AT THE
SRI VANI VILAS PRESS
SRIRANGAM.

॥ श्रीः ॥

# ॥ विषयसूचिका ॥



॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष चैत्रमासः । [संचि. १.

## सुभाषितानि ॥



भूयसीरपि कलाः कलङ्किताः
प्राप्य कश्चिदपचीयते शनैः ।
एकयापि कलया विशुद्धया
योऽपि कोऽपि भजते गिरीशताम् ॥ १ ॥

विधिमन्तरेण विहगेन कुतः
पयसोरशिक्ष्यत विवेकविधिः ।
कति वा दिनानि वद पर्यचिनोत्
कलशीसुतः कबलयन् जलधिम् ॥ २ ॥

पश्यति परेषु दोषान्
असतोऽपि खलः सतोऽपि नैव गुणान् ।
विपरीतमिदं स्वस्मिन्
महिमा मोहाञ्जनस्यैष: ॥ ३ ॥

॥ श्रीः ॥

# ॥ वेदानामानन्त्यम् ॥

—*—

पुरा कदाचिद्भरद्वाजो नाम विप्रः त्रिभिरायुर्भिर्ब्रह्मचर्यं चरित्वा वेदाध्ययनेनैव कालमखिलं यापयामास। तृतीये ह्यायुषि असौ जराजर्जरितावयवः स्थविरो भूत्वा करणापाटवेन दुर्बलः पदात्पदमपि चलितुमशक्तः मृत्युं प्रियमिवातिथिं प्रतीक्षमाणः शयनगतः आसीत् ॥

तदानीमिन्द्रः तत्सविधमेत्याब्रवीत् 'भो भरद्वाज, अवेहि मां त्रिलोकाधिपमिन्द्रम्। त्वया हि नाम त्रिष्वपि आयुःषु वेदाध्ययनेनैव केवलमात्मा आयासितः। यद्यहमद्य ते चतुर्थमप्यायुर्दद्यां तर्हि किं कर्तुमभिलषसि' इति ॥

भरद्वाजः 'यदि तावत्प्रसन्नो भगवांस्तर्हि पुनरपि चतुर्थेनायुषा ब्रह्मचर्यमेव चरेयम्। समग्रो वेदो नाद्यावधि मया अधीत आसीत्। समग्राध्ययने एव प्रवणमिदं मे हृदयम्' इति प्रत्यवादीत् ॥

तदाकर्ण्येन्द्रः तस्य दिव्यं चक्षुर्दत्त्वा त्रीन् गिरीन् दर्शयित्वा प्रत्येकमेकैकस्माद्गिरेरेकैकां मुष्टिमादाय 'भरद्वाज, एते गिरिरूपाः पुरतस्ते दृश्यमाना एव वेदाः। अनन्ताश्चेमे। एतन्मुष्टित्रयपरिमित एव छन्दसो भागस्त्वया त्रिभिरायुर्भिरधीतः। तस्माद्यत्सारतमं शाखासु तदेव सम्यगधीत्यामर्त्यो भूत्वा आदित्यस्य सायुज्यमाप्नुहीत्युपदिश्यान्तरधात् ॥

॥ श्रीः ॥

# ॥ गैर्वाणी ॥



**रामशास्त्री**— भोः पण्डितवर्य, कुतश्चन कालात्किमिति न दृश्यसेऽस्मिन्ग्रामे ? विगलितप्रायमिव ते जन्मभूमिवात्सल्यम् ।

**कृष्णशास्त्री**— उदरनिमित्तं बहुकृतवेषः यत्र कुत्रापि देहयात्रां करोमि । किं तत्रानेन जीवता मृतेन वा ?

**रामशास्त्री**— मा तावत् । वाराणस्यां कृतव्याकरणाध्ययनः नवद्वीपे समधिगतगौतमीयशास्त्रनैपुण्यः सुगृहीतनामा भवानखिलजनवन्दनीयः कथमेवमतिनिर्विण्णमात्मानमुपालभते ?

**कृष्णशास्त्री**— धिङ्मे शास्त्रज्ञानम् । कः शृणोति व्याकरणं गौतमीयं वा ? शास्त्रद्वयेऽनितरसाधारणं पाण्डित्यमधिगन्तुं सुबहु परिश्राम्यन् व्यर्थं वीक्ष्य गतं वयः आत्मानमद्यानुशोचामि । वरं कृषिकर्म । श्लाघ्या शिल्पिवृत्तिः । हृद्यं रथकारजीवनम् । रमणीयं क्षौरकर्मनैपुण्यम् । आवर्जकः संवाहकव्यापारः । प्रशस्या कायस्थदशा प्रशस्यतमा पाचकवृत्तिः । देवदत्तः पचतीत्याद्यक्षरराशेरर्थवर्णनायासादपि पचधात्वर्थानुष्ठानमेव द्रविणार्जनायालम् । सूक्ष्ममेतदविज्ञाय शास्त्रपरिचयायासेन सुदूरं मूढमात्मानं नावागच्छमिति नितरां संतप्यते मे हृदयम् ।

**राम**— विद्वन्, न समीचीना ते मतिरस्मिन्विषये । कृषीवलादयः कर्मकराः परःसहस्रमुपलभ्यन्ते वसुधायाम् । शास्त्रपारगस्तु

सहस्रेष्वेक एव । किमित्यात्मानं शास्त्रगौरवं चास्थाने अपवदसे ?

**कृष्ण—** दक्षिणापि न दीयते शास्त्रिणाम् । तत्र हि शुकवन्मुखस्थीकृतवेदाक्षराः पुरोहिता एवार्हाः । राजकुलेऽपि परित्यक्तसमयाचाराणां अनधिगतशास्त्रगन्धानामेव महद्गौरवं प्रदर्श्यते ।

**राम—** अलमलमावेगेन । कथय कां वृत्तिमद्योपजीवसि ?

**कृष्ण—** कस्मिंश्चित्संस्कृतविद्यालये भृतकाध्यापकपदमधितिष्ठन्नात्मानं निरयपातोन्मुखं कुर्वाणः कालं यापयन्वर्ते ।

**राम—** अहो ! विपरीता ते मतिः । अध्यापनं नाम विप्राणां वेदविहिता सात्विकी वृत्तिः । यच्च विद्याशालाधिपैः प्रतिमासं दीयते द्रविणं तत्तु गुरुदक्षिणा भवति ।

**कृष्ण—** प्रतिमासं पट्टिकायामियद्वेतनं गृहीतमिति साक्षित्वेन स्वनामाक्षराणि मयैव संयोजितव्यानि वर्तन्ते । किमतोऽपि शोचनीयतरमन्यद्विद्यते ? केनाप्यतर्कितोपनतेन कारणेन विद्याशालां गन्तुं न पार्यते चेत् तेषां दिवसानां (भवन्निर्दिष्टा) दक्षिणा न दीयते । यदि नामाक्षरसंयोजनमुपेक्ष्येत तर्हि मनागिवाश्वासो भवेत् । अत्र बहु प्रयतितं मया । शालाधिकारिणस्तु नामाक्षरासंयोजने राजकीयसाहाय्यं न लभ्येतेति सनिर्बन्धमिदमकार्यं कारयन्ति । क इमे राजकीयाः अस्मत्संप्रदायानभिज्ञाः ? सर्वोऽप्ययं कलेरेव महिमा ।

**राम—** सत्यम् । न स्फुटानि भवन्ति श्रोत्रियाक्षराणीत्युक्तरीत्या लेखनव्यवहारानभिज्ञाः किल शास्त्रिणः ।

**कृष्ण—** (सक्रोधम्) मूर्ख, सम्यक् जानामि लिखितुम् । गदा-

धरीयग्रन्थाः सर्वेऽपि तालपत्रे मयैव सुष्ठु लिखिताः प्रेक्षकाणामावर्जयन्ति मनांसि ।

**राम**— भो मर्षय । देशभाषायामाङ्गलवाण्यां वा नामाक्षराणि लिखितुं नास्ति किल नैपुण्यमस्मदीयपण्डितानाम् ।

**कृष्ण**— मित्र, मया हि नाम राजकीयभाषया स्वनाम केवलं लिखितुं पाण्डित्यं संपादितम् । तस्मान्नामाक्षरलेखने न कोऽपि श्रमः । परं तु निषिद्धमिदं कर्म कर्तव्यतयापतितमिति शोचामि ।

**राम**— प्रतिमासं द्रविणादाने न कापि क्षतिः । तथा गृहीतमिति लेखन एव प्रत्यवायः । कुत्रानुशिक्षितोऽयं हेतूपन्यासप्रकारः ?

**कृष्ण**— अनभिज्ञोऽस्यस्मत्समयाचाराणाम् । अध्यापनं हि नाम विप्रस्य स्वीया वृत्तिः । तन्निमित्तीकृत्य मासिकं वेतनं नादातव्यम् । नामाक्षरसंयोजनप्रस्तावस्तु भृतकाध्यापनं कीदृशमिति विशदीकर्तुमेवोपक्षिप्तः ।

**राम**— तर्हि वेतनं विनैव पाठ्यताम् ।

**कृष्ण**— तथैव करणीयं श्रोत्रियेणाभिजनवता । हन्त! दारिद्र्य पीडितोऽहम् 'अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः । वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे' ॥ इत्युक्तरीत्या क्लृप्तेषु समयेषु पाठशालां गत्वा शास्त्रप्रवचनं कुर्वन्वर्ते । 'तदेतत्कुत्सितं कर्म निन्दामि च करोमि च' । का गतिः ।

**राम**— पाठप्रवचनमेवास्माकं प्रधानतमा वृत्तिः । कुटुम्बभरणार्थं प्रतिमासं द्रविणादाने च न दोषः । कथमेवं वृथानुशोचसि । नामाक्षरसंयोजने व्यथा चेत्पाठशालापरिशोधकस्यानुमतिर्गृह्य-

ताम् । सोऽप्यास्तिकः राजकीयैरधिकृतोऽप्यसत्प्राचीनसंस्कारादिकं जानात्येवेति श्रूयते ॥

**कृष्ण**— परिशोधकः किं कथ्यते? स हि स्वयं पण्डितकुले जातोऽपि नवीनपरिष्काराभिलाषी देशान्तरीयसंसर्गादधिगतसंस्कार इव न केवलं त्रैवर्णिकानन्यानप्यवरजातिसमुत्पन्नान् देववाणीं पाठयेति निर्बध्नाति । कष्टात्कष्टतरमभूच्छ्रोत्रियाणां कर्मेदानीम् ।

**राम**— मयाप्येतच्छ्रुतम् । काव्यानि सामान्यशास्त्राणि च शूद्रादिभिर्न पठनीयानीति कुत्रानुशिष्टं स्मृतिकारैः? वेदे वेदान्ते च केवलमवरजातिसमुत्पन्नानामनधिकार इति चिरप्ररूढा मे वासना ।

**कृष्ण**— व्याकरणं हि वेदाङ्गेषु परिगणितं माहेश्वरसूत्रमूलकं श्रुतिवदत्यन्तपावनं भवति । तदध्ययने शूद्राणामधिकारो नास्तीत्यापाततो ज्ञायते । मन्मते तु भूसुराणामेव देववाणी नान्येषाम् ।

**राम**— कुत्र तादृशा भूसुराः? अद्यतना विप्राः प्रायो भुवं कर्षन्ति सुरां पिबन्ति च। सर्वेऽपि त्रैवर्णिका बालकाः द्रविणार्जनावर्जितस्वान्ताः भाषान्तराध्ययननिरताः गैर्वाणीं निर्जीवां तनुमिव दूरतः परिहरन्ति । सा हि तपस्विनी भाषाणां मातृभूता नितरां मलिना कृच्छ्रात्प्राणान्धारयन्ती एकोच्छ्वासावशेषितजीविता वर्तते । ये केचन भवादृशास्तां सेवन्ते तेऽपि निर्विण्णाः आत्मानमेवमनुशोचन्ति । एवं स्थिते यया कयापि विधया गैर्वाण्याः प्रत्युज्जीवनप्रचारोत्कर्षादयः संपादनीयाः इति कृत्वा तत्पठनाभिलाषिणः सर्वानपि प्रोत्साहयत्यसौ तपस्वी परिशोधकः । तादृशमतिपावनं तस्योद्यमं आस्तिकाः पण्डिता एव दूषयन्ति

चेज्जितं सर्वथा कलिना! पाठशालानामभावे कथं भवादृशानां वृत्तिः? पठितॄणामभावे कथं पाठशालानामभ्युदयः?

**कृष्ण—** नाहं परिशोधकस्योपरि दूषणमुद्भावयामि। कालस्य वैपरीत्येनौदासीन्यमालम्बन्ते विप्रा इति यत्सत्यम्। परं तु अवरजातिसमुत्पन्नैर्गैर्वाणीपठनम् तदध्यापनेन पण्डितानां जीवनम् इत्यादि विगीतं कर्म साम्प्रतं सेव्यतयापतितमिति दूयते मे मनः॥

**राम—** कति शूद्राः पठन्ति युष्मन्निकटे।

**कृष्ण—** दिष्ट्यास्मत्पाठशालायामवरजातिसमुद्भवानां प्रवेशो न दीयते। केरलेषु कस्मिंश्चित्प्रसिद्धे विद्यालये माहम्मदाः क्रैस्तवाश्च गैर्वाणीमध्याप्यन्ते इति कर्णाकर्णिकया श्रूयते। वरं मृता गैर्वाणी न तु म्लेच्छाश्रयेण जीवन्ती।

**राम—** अतिभूमिं गतस्ते प्राचीनः संस्कारः। कोऽयं देशः कालो वा? कथं वर्तते जीवलोकः? इत्यादिकथैव ते स्मृतिपथाद्विगलिता। मया हि नामावरजातिसमुद्भवानां गैर्वाणीपठनं कुत्र निषिद्धमिति पृष्टम्। तस्योत्तरं दातुमपारयन् किमेवं शाखाचंक्रमणं करोषि?

**कृष्ण—** (सासूयम्) कुत्र तेषां गैर्वाणीपठनं विहितमिति प्रथमं कथय।

**राम—** वितण्डावादोऽयम्। आस्ताम्। लोके गैर्वाणीपदानां प्रयोग एवम्। वेदे त्वित्थम्। भाषायामेवम्। छन्दसि त्वित्थम्— इत्यनुशासनं कुर्वन्पाणिनिरेव देवभाषायाः सार्वजनीनत्वमभ्युपगच्छति।

**कृष्ण—** वैदिकसंस्कारेणाहं नाभिनन्दामि गैर्वाण्याः सार्वजनीनतामिति न किञ्चिदेतत् । केचनाङ्गलभाषापारगाः कलहोपजीविनश्चैवमभिप्रयन्ति ।

**राम—** क इमे कलहोपजीविनो नाम ?

**कृष्ण—** वादिनां प्रतिवादिनां वानुकूलान् हेतून् निपुणं न्यायस्थले ये उपन्यस्य द्रविणमार्जयन्ति त एव कलहोपजीविन इत्युच्यन्ते ।

**राम—** तर्हि न्यायवादिन इति वक्तव्यम् ।

**कृष्ण—** नेमे सर्वथा न्यायवादिनः । कदाचिदन्याय्यमपि वादं वाग्विभवेनानृतभाषणेन च न्याय्यमिव व्यवहरन्ति । वादिनो व्यवहारः न्याय्यश्चेदन्याय्य एव प्रतिवादिनः । उभयोरपि प्रातिभाव्यमङ्गीकुर्वाणा इमे कथं न्यायवादिव्यपदेशमर्हन्ति । सर्वथा जनानां मिथः कलहेनैवैतेषामुपजीवनमित्यत्र न कोऽपि संशयः ॥

**राम—** कलहशमनमेवैतेषां प्रधानतमा वृत्तिरित्यभिज्ञाः कथयन्ति ।

**कृष्ण—** सर्वत्र कलहः शान्तश्चेदेतेषां कुटुम्बमवसीदेत्किल । अतः कलहमुपर्युपरि निपुणमुत्तेजयन्त इमे स्वार्थं घटयन्ति ।

**राम—** तेषां वृत्तिर्न सात्विकी । एते हि समयोचितभाषणाभिज्ञाः यत्किञ्चित्कथयेयुः । संस्कृतभाषाया अभ्युदयविषये नैतेषां वचनं प्रमाणीभवितुमर्हति । आस्तामियं कथा । कथय किमर्थमिमे अवरजातिसमुत्पन्नाः गैर्वाणीपठनमभिलषन्ति ?

**कृष्ण—** सर्वमपि समयाचारमधरोत्तरीकर्तुम् ।

**राम**— कीदृशः स समयाचारः यो हि गैर्वाणीपठनेनैतैरधरोत्तरी-
कर्तुं शक्यते ?

**कृष्ण**— गैर्वाण्यां व्युत्पत्तिं संपाद्य मन्त्रान्पठित्वा विप्रकृत्यमनुष्ठा-
तुमेवैतेषां प्रयत्नः ।

**राम**— यदि शूद्राः सात्विकीं वृत्तिमालम्बन्ते तर्हि किमस्माकं परि-
हीयते ।

**कृष्ण**—शूद्राणां तपश्चरणे अनधिकार इति हेतोरेव पुरा रामभद्रेण
निरपराधी शम्बुकः प्राणैर्वियोजितः ।

**राम**— अन्यैर्यत्फलं चिराल्लभ्यंत तत्तेनाल्पायासेनैव लब्धं किल ।

**कृष्ण**— कथं विप्रतीपं वदसि ? तपःसमाप्तेः पूर्वमेव हतः खल्व-
सौ ब्राह्मणधर्ममनुतिष्ठन् शूद्रः ।

**राम**— अप्यत्र भवभूतेर्मतं जानासि ?

**कृष्ण**— कोऽयं भवभूतिः ? भवस्य भूतिरिति व्युत्पत्त्या शंकरस्य
महिमा इत्यस्य पदस्य फलितोऽर्थः ।

**राम**— (साश्चर्यम्) भवभूतिरिति कश्चन सुप्रसिद्धः कविः । तेन
च नाटकत्रयं प्रणीतम् । तेषु उत्तररामचरितमिति अतिरमणीयं
रूपकरत्नमासेतुहिमाचलं विद्वद्भिः पठ्यतेऽभिनन्द्यते च । नामा-
प्यस्य न जानासि त्वमिति महदिदमाश्चर्यम् ।

**कृष्ण**— वयं शास्त्रज्ञाः स्फोटवादपरायणाः अनुमानैकरसिकाः ।
नास्माकं शृङ्गारादिरसप्रधानेषु ग्रन्थेष्वतीव गौरवम् । स्त्रीपुं-
सयोश्चित्तवृत्तिनिरूपणेन केवलं कालो वृथा याप्यते । काव्या-
लापांश्च वर्जयेदिति वाक्यं प्रमाणयन्तो वयं नाटकानि श्मशान-

कुसुमानीव दूरतः परिहरामः ॥

**राम**— काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये इत्याद्यभियुक्ता वदन्ति । भवांस्तु काव्यादींस्तृणाय मन्यसे ।

**कृष्ण**— कानिचन काव्यान्यनध्यायदिवसेषु मया स्वयमेवावलोकितानि । गुरुमुखादधिगन्तुं न कोऽपि महान्विषयस्तत्रोपलभ्यते ।

**राम**— ननु काव्यान्यधिकृत्येदृशं तेऽभिप्रायं शृण्वतो मे नीलकण्ठदीक्षितस्य भाषितं स्मृतिपथमारोहति ।

**कृष्ण**— कथमिव ?

**राम**— श्रूयताम्

'वाचं कवीनामुपलालयन्यां
भुङ्क्ते रसज्ञो युवतिं युवेव ।
तामेव भुङ्क्ते ननु तार्किकोऽपि
प्राणान्हरन्भूत इव प्रविष्टः ॥'

इति वदति दीक्षितः ।

**कृष्ण**— (सक्रोधम्) आः कोऽयं दीक्षिताधमः । येन वयं तार्किका भूतगणेषु परिगणिताः । मदीया सहधर्मचारिणी मां रसिकाग्रेसरं मन्यते ॥

**राम**— रसिकश्चेत्काव्यादिष्वनुरज्येत् । कलहपरिजिहीर्षया सैषा भवन्तमेवं स्तवीतीति मन्ये ।

**कृष्ण**— मूर्ख, अतिक्रामति मर्यादामावयोः प्रसङ्गः । मया हि नाम शास्त्राणि परम्परया ब्रह्मस्वरूपप्रतिपादकानि अध्यात्मरहस्यनिरूपणपराणि अवश्यं परिशीलनीयान्यात्मज्ञेन । काव्यानि तु

केवलं भाषाज्ञानसंपादनायात्यन्तमावश्यकानि । तत्पठनेन व्युत्पत्तिमात्रं संपाद्य शास्त्रपरिशीलनेनात्मा कृतार्थयितव्य इति अभिज्ञानां मतमेव मयोपन्यस्तम् । अलं प्रसक्तानुप्रसक्तयानया कथया । कथय किमुक्तं भवभूतिनेति ।

**राम**-- शम्बूकवधप्रकरणे भवभूतिर्वैदिकाग्रेसर एवं ब्रवीति ।

'राम:--- तदनुभूयतामुग्रस्य तपसः परिपाकः ।

शंबूकः--- अथवा, महदुपकृतं तपसा । तथा हि--

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसः संप्रसादोऽन्यथा चे-
त्कायोध्यायाः पुनरुपगमो दण्डकायां वने वः ॥'

इति ।

**कृष्ण**— एतेन किमुक्तं भवति? शंबुकस्य मतमिहानुवदति कविः न तु स्वाशयम् । एवमेव नवीनाः केचन विमर्शकंमन्याः कवेरनभिमतान्विषयानपि तदीयत्वेन वर्णयन्ति ।

**राम**— कवेरप्येतदेव मतं त्वद्गतं किमिति न स्यात्?

**कृष्ण**— वैदिकाग्रेसरो न कदाप्यात्मनः चिरसंस्कारसिद्धं मतं परित्यज्य नवीनानामभिमतमाश्रयेत् ।

**राम**-- एवं ब्रुवन्भवान् कथमृतुमतीविवाह एव शास्त्रीयः इति सभायामुपन्यास्थत्?

**कृष्ण**-- किं क्रियताम्? अशास्त्रीयमपीदं मतमतथात्वेन वक्तव्यमासीन्मया कैश्चित्कारणैः ।

**राम**— प्रबलेन कारणेन भवितव्यम् ।

**कृष्ण**— यथातथा वा भवतु । तथा समर्थने एव देशस्य सौभाग्याभिवृद्धिर्भवेदिति केचनाप्ताः सुहृदो मां निरबध्नन् । दाक्षिण्येनैवमुक्तम् ।

**राम**— भवतां वाक्यं प्रमाणीभविष्यति खल्वस्माकम् । भवतापि स्वजनेषु ऋतुमतीविवाह एव कारयितव्यः ।

**कृष्ण**— दिष्ट्या पूर्वमेव मदीयाः सर्वा अपि कन्यकाः अष्टवर्षा एव यथाशास्त्रं श्रोत्रियपुत्रेभ्यो दत्ताः । छन्दोगानां पङ्क्तिपावनानां कुले जातेन मया नवीनपरिष्कारो न कदाप्यनुष्ठानविषयीकर्तुं शक्यते ।

**राम**— तर्हि अन्येषां विप्राणां कथमेवमुपदिश्यते ? युष्मद्वाक्येनाशास्त्रीयं कर्माचरतां पापानि त्वय्येव संक्रामेयुः ।

(क्रमशः)

॥ श्रीः ॥

# ॥ कालिदासश्च भवभूतिश्च ॥



इह खलु जगति प्रायेण परिदृश्यते स्थावरस्य जंगमस्य वा भावस्य नियतमेकान्तविध्वंसि परिणामविगुणमेव किमपि किमपि दशान्तरम् । न किल तादृशं किमप्यभूद्भवति भविष्यति वा, यदुत जातं सदनन्तरमखिलेष्वपि कालेष्वनश्वरमजरमविचलितमवतिष्ठते । हा कुटिला किल कालकला, निर्दया खलु नियतिः, अस्खलितप्रसरः किल संसारः । कति कति नाम कबलीचकार नूनमयमलंभावमनधि-

गच्छन्नालोच्यमानभीषणः कृतान्तहतकः । सत्यप्येवं सर्वतो विसंष्ठुले विचित्रेऽस्मिन्प्रपञ्चे, अकलिताः कालेन, अदृष्टा अनित्यतया, अनवगता अभावेन अतन्त्रिता नियतियन्त्रणया अरूषिताः संसारदोषेण, पुण्यजन्मानः कतिपये पुरुषधौरेयास्तदा तदा भूमण्डलमिदमात्मना मण्डयन्तीति नूनमतिचिरतप्तानामस्माकमतिशयनीयोऽयममृतवर्षसमुत्कर्षः ॥

ते किल महात्मानः स्वतन्त्रा मनसीव वचसि, कलितमतयः कवितविलासे कमनीयकीर्तिभासे च रक्ता यशोमये काये विरक्ताश्च भूतनिकाये, सततसमुज्ज्वलेन स्नेहैकसारेण सर्वातिशायिना निर्बाधेन नित्येन शब्दाह्वयेन ज्योतिषा भुवनमिदमन्धतमसादभिरक्षन्तः परेषामपि मार्गदर्शिनो महर्षयो महाकवयश्च सन्तो महीतलमिदं महयांबभूवुः ॥

एतादृशेष्वेव महात्मसु महनीयतमौ महामुनी भगवन्तावेकतो वाल्मीकिवेदव्यासौ, अपरतश्च महाकवी श्रीमन्तौ कालिदासभवभूती, याभ्यां चायं मण्डितश्च पण्डितश्च संवृत्तः संसारः ॥

यथा च कालिदासः सर्वात्मना भगवत्यादिकवौ श्रीमत्यादिकाव्ये च सुमहान्तमात्मनो बहुमानमाविष्कुर्वन्नसकृदात्मकाव्येषु तदुपदर्शितमेव सुभाषितसर्वस्वमनुपालयति, तथैव भट्टभवभूतिरपि स्वकीयमादरमनन्तरकवौ[1] भगवति पाराशर्ये तदीयकृतिषु च प्रदर्शयन्नात्मनो मनोगमनिकामाबध्नाति वाग्विसर्ग इति सुस्पष्टमिदमुभयमपि भूयः परिशीलियतां सुमेधसाम् ॥

---

1. "वसुधाश्रोत्रजे तस्मिन्व्यासे च हृदयस्थिते ।
अन्येऽपि कवयः काम बभूवुरनपत्रपाः ॥" इति यादवाभ्युदये ।

इदं चात्र प्रकृतोपयोगि प्रस्तावमर्हति किमप्यैतिह्यम्, यच्चिराय विलसति विदुषां वदनेषु--

पुरा किल कदाचिदयं कालिदासः सारस्वतं सारं सर्वतोऽप्यालोडयन्नानन्दनिमीलिताक्षो विगलितवेद्यान्तरसाद्वैतमनुभवन्नतिचिरमासांचक्रे। तथा च सुचिरमवस्थितस्य महात्मनः कालिदासस्य दयमानौ विशेषतो विस्मयमानौ स्मयमानमुखाम्बुजौ वामतो दक्षिणतश्च व्यासवाल्मीकी प्रादुर्भूय सुधामयेन स्वीयाङ्गस्पर्शेन विश्लथसमाधिं विरचयामासतुः कवीश्वरमेनम्। ततश्च प्रतिबुद्धः कालिदासः 'सारकुक्षये नमः' इति श्रीमन्तमादिकविम्, 'चकारकुक्षये नमः' इति श्रीव्यासं च प्रणनाम। श्रुत्वा चैतन्महर्षी तस्य सारवेदिताम्, निर्भयवादितां च प्रशंसन्तावन्तर्हितावभूताम्-- इति॥

प्रियपाठकाः, यथा तथा वा भवत्विदमैतिह्यम्; भगवान्पाराशर्यो भूयसा चकारं स्वकृतिषु प्रयुङ्क्त इति तु निर्गलितोऽर्थः सत्यश्च सहृदयहृदयसंवादी च॥

अयमपि भट्टभवभूतिर्बहुल पादपूरणमात्रफलकानि क्वचित्क्वचिच्च सप्रयोजनानि चकारघटनानि करोतीति विमृशतामापतत एव सुवेदमिदम्। सार्थकानामपि भूयो भूयश्चकारयोजनानां नातीव श्रव्यता हृद्यता वा भवतीति ननु स्वानुभव एव परमं प्रमाणं सचेतसाम्। इदं च मालतीमाधवीयमेकं पद्यं प्राप्तकालमिति प्रकटयामः--आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं संजातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात्। निर्वृत्तश्च फलैर्महिर्द्रुमवरो दग्धश्च दावाग्निना त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम्॥"

1. अत्र चकारौ प्रतिपादं योजितौ समानकालिकत्वमुभयोरर्थयोः प्रतिपादयतः।

प्रियपाठकाः, अहो महती कापि वेला विवक्षितस्य विषयस्य। अन्यदेव विवक्षवो वयमन्येनैव सुदूरमाकृष्टाः स्मः । वाचकमहाशयाः, मन्यामहे, 'कालिदासश्च भवभूतिश्च' इत्युपन्यासशीर्षावलोकनेन श्रीमतां मनसीदं तावत्प्रतिभास्यति, यदयमुपन्यासो नियतं निरूपयति निपुणमुभयोरपि महाकव्योः कविताविलासतारतम्यमिति । सत्यमेवेदम्; अथाप्यनवसरहता वयं किं कुर्मः । कालान्तरभाविनमेनमर्थमगत्या प्राप्तमभिधातुमपि सत्यं वयं संकुचामः । इदमेव संप्रति निरूपयितुमभिलषामः, यदेनयोः कतरेण महाकविना जीवतैव स्वोत्कर्षमन्याभिमतमाबिभ्रता सफलतां नीतमात्मीयं जन्मेति। को हि नाम कवेरितोऽपि परमः कृतार्थभावः; यज्जीवन्नेव परैः प्रशस्यमानमात्मनः सुभाषितमात्मना शृणोतीति । न खलु देवभाषाकवेरेवेदं दुर्भिक्षम्, परं तु देशभाषाकवेर्देशान्तरभाषाकवेश्चेदमतिनिरूढमासीदिति चरितपरिशीलिनां मुखादनवरतमाकर्णयामः । किं हि नाम च्छिद्यते हन्त दुःशिक्षितस्य दग्धविधेरनेन व्यतिकरेण, यदयं स्वकीयं यशःकायं स्वेनैव भूमण्डलं विधाय कृतार्थेनान्तरात्मना महाकवीनन्तर्हितान्न सहते । इदमेव दुर्व्यवसितं हतविधेः, दुरवस्थितं च महाकवीनामनुशोचता सहृदयाग्रगण्येन महाकविना श्रीनीलकण्ठदीक्षितेन शिवलीलार्णवमहाकाव्ये विरचितं श्लोकद्वयमपि सचेतसां पुरस्तात्कुर्मः—"प्राचीनपद्यभ्रमतः प्रवृत्ताः स्तोतुं खलाः प्रेक्ष्य कविं पुरस्तात् । येनान्यथाकर्तुमिदं यतन्ते क्लेशेन तेषां हि स एव दण्डः ॥ दोषः क्वचित्कश्चिदिति प्रतीतः प्राचामलंकारविदां प्रवादः । सर्वप्रबन्धानुगतस्तु मन्ये कर्तुः कवेर्जीवनमेव दोषः ॥"

तदेवमतिदुर्लभा जीवनकाल एव प्रसिद्धिरासादिता महा-

कविना कालिदासेनेति, हन्तमामलभमानेन जीवितावध्यनुशोचतैव भट्टभवभूतिना परित्यक्तमिदं प्राकृतं मण्डलमिति च तयोर्नाटकत्रय-प्रस्तावनापरिशीलनायां स्पष्टमवगन्तुं शक्यत इति वदामः । इयमत्र विमर्शसरणिरस्माकम्—

महावीरचरिते हि नाटके प्रस्तावनायाम् **प्रसन्नकर्कशा यत्र विपुलार्था च भारती**' इति, '**वश्यवाचः कवेर्वाक्यम्**' इति 'प्राचेतसो मुनिवृषा प्रथमः कवीनां यत्पावनं रघुपतेः प्रणिनाय . वृत्तम् । भक्तस्य तत्र समरंसत मेऽपि वाचस्ताः सुप्रसन्नमनसः कृतिनो भजन्ताम्' इति, '**किं त्वपूर्वत्वात्प्रबन्धस्य कथाप्रदेशं** समारम्भे श्रोतुमिच्छामि' इति च परिदृश्यते । नाटकेषु प्राधान्या-र्हतया परिगणितयोर्वीरशृङ्गारयोरेकतरं वीरं परिगृह्य विरचितेऽस्मि-न्नाटके भट्टभवभूतिर्न खलु भूयसा स्वप्रशंसामन्याधिक्षेपं वा प्रक-टीकरोति । स्वकीयमिदमादिमं रूपकमेव सर्वतः कीर्तिं संपाद-यिष्यतीत्यभिमन्यमान एव भट्टभवभूतिरधिकतरमन्याधिक्षेपेनात्मा-नमायासितवानिति युज्यते संभावयितुम् । इयं च परिशील्यमाना प्रस्तावना प्रथमकृतिरिदं नाटकं महाकवेरस्येत्याहूय सहृदयानावेदय-यति । पश्चादनेन प्रचारितेनापि नाटकेन— यथायं विश्वसिति तथा— महाकविपताकामन्यादृशीमन्यैराचर्यमाणामात्मनः प्रशंसां वा अनुपलभमानो भटभवभूतिर्भग्नमनोरथ एव द्वितीयतया शृङ्गाररसप्र-धानं मालविकाग्निमित्रविक्रमोर्वशीयरूपकद्वयस्थानीयं दशाङ्कं मालती-माधवं नाम प्रकरणमारभमाणो लघुचेता हृदयगतं विषादं कथमपि नियन्तुमपारयन्प्राकृत इव तत्र परानधिक्षेप्तुं वा परिदेवितुं वा स्वयं प्राक्रमत प्रस्तावनायाम् ।

( क्रमशः )

# शंकराभ्युदयः ॥



स्मरवैरिशेखरसुधाकरेर्ष्यया
मकुटीभवन्तमिव भानुमण्डलम् ।
विहितं किरीटमरुणाश्मकन्दलै-
र्विदधानमस्तमशिरसा विभूषितम् ॥ ३ ॥

स्फुटदुत्पलोदरदलोपमाङ्कक-
स्फुरदंशुबृन्दमतिदायिकैशिकम् ।
मकुटारुणोपलमरीचिकातप-
च्छुरणानिशस्फुरितवक्त्रपङ्कजम् ॥ ४ ॥

चलचूर्णकुन्तलसुधानिशीथिनी-
सदृढोपगूढनिटिलार्धचन्द्रकम् ।
करुणाम्बुपूरितदृगब्धितीरभू-
वनमालिकायितमनोज्ञचिल्लिकम् ॥ ५ ॥

श्रवणावतंसितसितेतराम्बुज-
भ्रमदानशौण्डनिजलोचनाञ्चलम् ।
वदनारविन्दनिबिरीससौरभ-
ग्रहणोद्यत्कुतुकदीर्घनासिकम् ॥ ६ ॥

रसनाग्रजाग्रदरविन्दभूवधू-
नवमौक्तिकाभरणदन्तपङ्क्तिकम् ।
कलशाम्बुराशितनयोष्ठमाधुरी-
गरिमैकसाक्षिरसनाग्रवल्लभम ॥ ७ ॥

वदनारविन्दरमणीयतासुधा-
जलराशिविद्रुमलतायिताधरम् ।
रमणीयगण्डतलकान्तिवीचिका-
विहरन्मणीमकरकुण्डलोज्ज्वलम् ॥ ८ ॥

वदनाम्बुजातबिसवल्लरीभव-
द्गलमूललग्नमृगनाभिकर्दमम ।
उपलालयन्तमनिशं भुजान्तरे
कमलासहोदरतयैव कौस्तुभम् ॥ ९ ॥

जठरान्तरावसथविष्टपत्रयी-
प्रकटीक्रियापरवलित्रयाञ्चितम् ।
निजनाभिपङ्कजमधुव्रतावली-
मतिदायिरोमलतिकामनोहरम् ॥ १० ॥

विधिना जगत्त्रितयसृष्टये मृदं
हरता कृतेन सुषिरेण हारिणा ।
नवरोमराजिलतिकालवालभू-
वलयेन नाभिकुहरेण शोभितम् ॥ ११ ॥

दधतं पराक्रमजितैर्मृगाधिपै-
रुपदीकृतामिव वलग्नयष्टिकाम्।
जलदभ्रमोपगतविद्युदुज्ज्वल-
त्तपनीयचेलविलसत्कटीतटम्॥ १२॥

नवरत्नकोशगतनन्दकप्रभा-
शतमन्युचापशतचित्रिताम्बरम्।
असमानसारसनसारसावली
लसमानभङ्गलनितम्बसैकतम्॥ १३॥

जघनस्थलप्रतिहतद्विधाकृता-
मिव रामणीयकतरङ्गिणीझरीम्।
विदधानमूरुयुगलीं सुराङ्गना
कृतिमातृकाफलकमब्जजन्मनः॥ १४॥

मुनिकुञ्जरस्य ववृधेऽधिमानसं
प्रमदाम्बुराशिलहरीभरश्चिरम्।
मुमुदे च लोचनचकोरपालिणा
पुरतः स्फुरत्युरुतमोहरे विधौ॥ १५॥

अथ माधवं शुभतमालकाननं
महनीयगन्धवनमालिकोज्ज्वलम्।
उपलभ्य कोकिलयुवेव कन्दलं
मधुरस्वरः समजनिष्ट देशिकः॥ १६॥

श्रुतिमौलयोऽपि न विकुण्ठशक्तय:
　प्रभवन्ति यस्य महिमानुवर्णने ।
यदशेषनायक भवत्पदाम्बुजं
　कथय स्तवानि कथमल्पधीरहम् ॥ १७ ॥

स्तुतिरुच्यते गुणगणस्य कीर्तनं
　घटते न तद्भवति निर्गुणे विभौ ।
असतस्तु केवलममुष्य कीर्तनं
　न रसाय न: कथमिव स्तवोऽस्तु ते ॥ १८ ॥

शरणागतं चरणपद्मयोरमुं
　परिपालयेश कृपयैव केवलम् ।
समवेक्ष्य किंचिदुपकारमात्मन:
　कुरुते महान्न खलु दीनरक्षणम् ॥ १९ ॥

यदि चाथ दीनविषया भवद्दया
　तदपीप्सितं मम करस्थितं भवेत् ।
मदपेक्षया किमपरोऽस्ति दैन्यभा-
　ग्भुवनत्रयेऽपि ननु वेत्ति तद्भवान् ॥ २० ॥

सुकृतं त्वया न कृतमित्युपेक्षसे
　यदि मां गतैव तव दीनबन्धुता ।
अपि चैतदेव भवतो व्यतिक्रमो
　विपथान् पितैव ननु शास्ति बालकान् ॥ २१ ॥

त्रिजगज्जनिस्थितिविनाशकल्पना-
धृतनैपुणीकनयनाञ्चलस्य ते ।
कियदस्ति मत्कभरणं कृपानिधे
किमुपेक्षसेऽतिसुलभं महद्यशः ॥ २२ ॥

अथवा भरो भवतु मत्करक्षणं
करणीयमत्र तदपि त्वया विभो ।
महतां परोपकृतये परिश्रमः
कुरुते महोत्सव इवाधिकां मुदम् ॥ २३ ॥

अयि विश्वरक्षणविधानदीक्षिते
त्वयि नाथनं मम तु बालचापलम् ।
जनके दिशत्यपि फलादिकं क्रमा-
न्ननु रुद्यते मम ममेति बालकैः ॥ २४ ॥

बहुभिः किमत्र वचसां प्रपञ्चनै-
रहमर्थये त्वदभयं सकृन्नतः ।
अविता तथापि भविता न चेद्भवा-
न्भवतो व्रतक्षतिरये न किं भवेत् ॥ २५ ॥

इति देवदेवनुतिपावितानना
यतिशेखरो यतमना इतस्ततः ।
अतिपावनानि परितस्तपोवना-
न्यनघो नदीरभिययौ सरांसि च ॥ २६ ॥

जनता हि यत्र कृतमालिकापगा-
जलपानजातजडिमापनुत्तये ।
रसनाञ्चले मधुरसं क्षिपत्यसौ
मधुरामवापदथ तामनुत्तराम् ॥ २७ ॥

कृतमालिकाकृतजलावगाहनः
क्रमशः क्रियाः समुचिताः समाचरन् ।
शतशः प्रणम्य शशिखण्डमण्डनं
मुखरोऽजनिष्ट मुनिशेखरो मुदा ॥ २८ ॥

भगवन्नवाङ्मनसगोचरानहो
भणितुं भवद्गुणगणानशेषतः ।
चतुराननो न चतुराननोऽपि स
प्रभवेयुरीश कथमीदृशा जनाः ॥ २९ ॥

जगदीश तावकगुणानुकीर्तना-
दपि भाग्यभाग्भजति विश्ववन्द्यताम् ।
जलधेः कियन्त्यपि जलान्युपाददज्-
जलदो न किं व्रजति कीर्तनीयताम् ॥ ३० ॥

महिमाम्बुराशिलवमप्यजानतो
मम जायते तव गुणस्तुतिस्पृहा ।
मनसः प्रवृत्तिमयि मन्मथद्विष-
न्न हि कोऽपि वारयितुमीश्वरो भवेत् ॥ ३१ ॥

अथवा गिरीश मम वाग्जगन्मयं
न भवन्तमर्चयितुमक्षमा भवेत् ।
किमु मीलतापि विशिखः प्रचोदितो
धरणीशरव्यमपराधयत्ययं ॥ ३२ ॥

त्रिजगद्धुरन्धर कृपानिधे भवा-
नवतादमुं जनमनन्यजीवितम् ।
इति कन्दलत्प्रमदबाष्पगद्गदं
बहुधा निगद्य गिरिजालयं ययौ ॥ ३३ ॥

अथ तत्र संघफलकाधिरोहिणो
द्रविडप्रबन्धपरदेवतात्मनः ।
कलशीकुमारकृतसूत्रवर्त्मना
कवयन् व्यजेष्ट कतिचित्कवीश्वरान् ॥ ३४ ॥

अधिहेमपुष्करिणि क्लृप्तमज्जनो
भसितत्रिपुण्ड्रपरिदेवितालिकः ।
अभिवन्द्य मीननयनामसावभू-
त्कवितात्मना परिणतात्मभक्तिकः ॥ ३५ ॥

कर्णोपान्तमणीकृतैन्दवकलानिर्यत्ननिर्यत्सुधा-
कल्लोलावलिमेलनाद्द्विगुणितप्रत्यग्रशैत्योदयः ।
कारुण्यामृतवाहिनीनवपरीवाहप्रियंभावुको
मीनाक्ष्याः कुशलानि कोरकयतान्मुग्धः कटाक्षाङ्कुरः ॥

ताटङ्कस्य परिस्फुरत्परिसरे ताटक्षरत्नत्विषो
मार्ताण्डान्तिकखेलमानयमुनामाहात्म्यपाटच्चरः ।
शोणाश्माहितशाणकोणविवलन्माराशाशङ्काकरो
मीनाक्षि त्वदपाङ्ग एष भवतान्मोदाय खेदापहः ॥ ३७ ॥

प्रेमाधिक्यधृतद्विपाननरदप्रोत्कीर्णताटङ्कक-
प्रालेयद्युतिमण्डले प्रकटयन्प्रायः कलङ्कश्रियम् ।
व्यातन्वन्नपि चादरादभिसरद्दर्शत्रियामाभ्रमं
मीनाक्ष्याः करुणाकटाक्षमहिमा मोहापहो जायताम् ॥३८॥

बन्दीकृत्य बलाद्यदीयरुचिभिर्लीलावतंसच्छला-
न्नीलाम्भोरुहमञ्जरी विनिहिता कर्णाग्रदुर्गाञ्चले ।
वल्गल्लोचनखञ्जरीटयुगलीबालाङ्कुरश्रीकरः
पर्याप्तं नयनाञ्चलो दिशतु मे भाग्यं सुमीनाक्षि ते ॥ ३९ ॥

चिल्लीकैतवपुष्पसायकधनुर्वल्लीगुणः कामजि-
च्चेतःपेटकवर्तिधैर्यमणिसंमोषक्रियाकुञ्चिका ।
वक्त्राम्भोरुहरामणीयकसुधापाथोधिनारायणः
काङ्क्षापूर्तिकृदस्तु मीननयने कान्तः कटाक्षस्तव ॥ ४० ॥

हालाहालमरीचिकासहचरः कण्ठस्थले धूर्जटे-
र्मध्ये फालतलं दृगन्तरुदयद्धूम्याङ्कुरश्रीकरः ।
मौलौ दिव्यधुनीमिलत्तरणिजाकल्लोलशङ्कावहो
मुग्धे देवि दृगञ्चलस्तव गुहुमौरवर्यमाविष्क्रियात् ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष वैशाखमासः । [संचि. २.

## सुभाषितानि ॥

तत्तद्विचारोपनिषद्विमृष्टं
काव्यं कवेः पुष्यति निस्तुषत्वम् ।
न रत्नमायाति हि निर्मलत्वं
शाणोपलारोपणमन्तरेण ॥ १ ॥

बह्वर्थसिद्धा परिपाकभूमिः
कस्यापि वाणी रसवत्युदेति ।
आत्तप्रयत्नं बहवः पुनन्ति
मुखं यदुच्छिष्टलवोच्चयेन ॥ २ ॥

सूक्तौ शुचावेव परे कवीनां
सद्यः प्रमादस्खलितं लभन्ते ।
अधौतवस्त्रे चतुरं कथं वा
विभाव्यते कज्जलबिन्दुपातः ॥ ३ ॥

मङ्खकस्य ।

॥ श्रीः ॥

# ॥ कवषोपाख्यानम् ॥



पुरा कदाचिद्ब्रह्मनिष्ठा महर्षयः सरस्वत्याः पावने तीरे सत्रमासत। दीक्षितानां मध्ये इलूषायाः पुत्रः कवषो नाम कश्चिदासीत्। उदीक्ष्य तं क्रोधारुणनयनाः ऋत्विजः 'रे, दास्याः पुत्रः कितवः अब्राह्मणस्त्वं कथमेवं निर्भयं वेदानधीत्य दीक्षितोऽभवः। नैतद्युज्यते' इति भर्त्सयन्तस्तं यज्ञवाटान्निर्वासयामासुः। निर्दयमेवं निष्कासितः कवषः क्षुधा तृषा च परिद्यूनः सलिलं पातुं सरस्वतीनद्याः परिसरमगात्। तावताप्यशान्तकोपाः ऋषयः पुण्यनद्याः सलिलं त्वया शूद्रेण न स्प्रष्टव्यम् इति गलहस्तिकां दत्त्वा सुदूरं मरुप्रदेशे तं व्यद्रावयन्। सोऽपि प्राणितुमुपायमन्यमपश्यन् अपोनप्त्रीयेण मन्त्रेण दिव्यां सरस्वतीं नदीमस्तावीत्। सद्यः परितुष्टा सरस्वती स्वादुभिः स्वच्छैश्च सलिलप्रपातैरुपससार कवषस्य परिसरम्। तं च गच्छन्तमनुगच्छन्ती स्थितं च स्थिता नितरामात्मनः प्रसादमदर्शयत्। तद्दृष्ट्वा ते ऋषयः महानुभावोऽयं ब्रह्मर्षिकल्पः देवताभिरप्युपास्यते। अज्ञानादस्माभिरसावधिक्षिप्तोऽभिद्रुतश्चेत्यात्मनो दुश्चेष्टितमनुशोचन्तः सप्रश्रयं तमभ्येत्य 'दिव्यानुभावो भवानस्मदीयमागः क्षमताम्; पुनातु चास्मान् यज्ञं चात्मनः सांनिध्येन' इति प्रार्थयामासुः। सोऽपि तदीयमाह्वानमङ्गीकृत्य तैः सह सत्रे दीक्षितो भूत्वा तेभ्यः अपोनप्त्रीयानात्मोपज्ञान्मन्त्रानुपादिक्षत्। यांश्च विदित्वा अपामनुग्राह्यो भवति पुरुषः। येषां चानुध्यानेन पर्जन्यो वर्षति सन्ततधारम्। येषु चात्मनावगतेषु दिव्यान् लोकानभिजयति मानवः। ता एता ऋचः पञ्चदश कवषोपज्ञाः संहितायामद्याप्युपगीयन्ते॥

ऐतरेयब्राह्मणे।

(पूर्वतोऽनुवृत्तम्)

---

## अविमारकम् ।

'अत्र ह्यजानता परिजनेन मम परितोषनिमित्तं वकुलसरलसर्जार्जुनकदम्बनीपनिचुलप्रभृतीनि मेघकालवल्लभानि परमसुरभीण्यानीयमानानि मामुन्मादयन्ति' इति विरहिण्या कुरङ्ग्योक्तं वचः

'एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका'

इत्याद्याशयमेव सम्यग्विशदयति ॥

'व्योमार्णवोर्मिसदृशा निनदन्ति मेघा
मेघप्ररोहसदृशाः प्रभवन्ति धाराः ।
रक्षोङ्गनाभ्रुकुटिवत् तडितः स्फुरन्ति
प्राप्तोग्रयौवनघनस्तनमर्दकालः ॥

कुरङ्गी— अय्य उत्त! आरद्धो सम्पदि वरिसिदुं देवो ।

अविमारकः— प्रिये! एहि अभ्यन्तरमेव प्रविशावः ॥''

इति वाक्यपङ्क्तिमनुवाचयतामस्माकम्

'प्रिये, पश्य पश्य

विद्युज्जिह्वेनेदं महेन्द्रचापोच्छ्रितायतभुजेन ।
जलधरविवृद्धहनुना विजृम्भितमिवान्तरिक्षेण ॥

तदेहि । अभ्यन्तरमेव प्रविशावः''— इति चारुदत्तस्य वचनं स्मृतिपथमारोहति ॥

## बालचरितम् ।

इहाङ्कपञ्चकेन दामोदरस्यावतारमारभ्य कंसवधान्तं कथा-वस्तु प्रतिपादितं महाकविना भासेन ।

अत्रापि 'अहो बलवांश्चायमन्धकारः ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥

अहो तमसः प्रभुत्वम् ।

अप्रकाशा इव दिशो घनीभूता इव द्रुमाः ।
सुविनिष्टस्य लोकस्य कुतो रूपविपर्ययः ॥'

इति श्रूयमाणमन्धकारवर्णनम्, प्रकरणे

'अहो बलवानन्धकारः । तथाहि ।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना ।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥

अपि च

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥

इत्यनेन एकरूपतां अवगमयति ।

घोषे विलसतो गोपालदारकादात्मविनाशमाशङ्कमानः कंसः आर्यकनाम्नो गोपालवरादात्मनो भयमनुचिन्तयन्तं राजानं पालकमेव स्मरणपथमुपनयति ।

## मध्यमव्यायोगः ।

घटोत्कचेन गृहीतस्य ब्राह्मणपुत्रस्य भीमेनात्मसमर्पणेन रक्ष-णामिह प्रतिपाद्यं वस्तु । इह च,

'भो ब्राह्मण! तिष्ठ तिष्ठ ।

किं यासि मद्भयविनाशितधैर्यसारो

*　　*　　*　　*　　*

तार्क्ष्याग्रपक्षपवनोद्धतरोषवह्नि-

तीव्रः कलत्रसहितो भुजगो यथार्तः ॥'

इति विलसन्ती वाणी, प्रकरणे

'वसन्तसेने, तिष्ठ तिष्ठ ।

किं यासि बालकदलीव विकम्पमाना

व्यालीव यासि पतगेन्द्रभयाभिभूता'

इति प्रकारान्तरेण दर्शयति पुनरात्मानम् ॥

'सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः' इत्यत्राविष्कृता नीतिः पुनरपि प्रकरणे 'अयं हि पातकी विप्रो न वध्यो मुनिरब्रवीत्' इति अधिकरणिकमुखेनोपदिश्यते ॥

## दूतवाक्यम् ।

भगवतः श्रीवासुदेवस्य दुर्योधनसभां प्रति गमनम् पाण्डवेभ्यः अर्धराज्यदानमवश्यं करणीयमिति प्रतिबोधनं चेह प्रतिपाद्यं कथावस्तु । अत्रापि

'एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान् । एषा खलु द्रौपदी दुःशासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना'

इत्यादिवर्णयन्नसौ कविरिममेवाशयं पुनरपि प्रकरणे

'एशे हगे गेण्हिअ केशहत्थे

दुश्शाशणश्शाणुकिदिं कलेमि ।

केशविन्दे पलामिट्टा चाणक्केणेव्व दोवदी
किं दोवदी विअ पलायसे लामभीता--'

इति अजानान एवाविष्करोति ।

पाण्डुपुत्राणामापतितामतिकृपणां दशामेतेषु पञ्चरात्र दूतवाक्यादिषु खण्डरूपकेष्वसकृत्स्मारं स्मारमनुशोचन्नसौ महाकविः प्रकरणेऽपि अकालदुर्दिनवर्णनावसरे

'एतत्तद्धृतराष्ट्रवक्त्रसदृशं मेघान्धकारं नभो
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।
अक्षद्यूतजितो युधिष्टिर इवाध्वानं गतः कोकिलो
हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां गताः ॥'

इति तेषामवस्थां चेतसा स्मरति ॥

दुर्योधनस्य दौर्जन्यमसहमानः खमाक्रमितुं प्रवृत्तः केशव एव प्रकरणे

'आभाति संहतबलाकगृहीतशङ्खः
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ।
केशवगात्रश्यामः कुटिलबलाकावलीरचितशङ्खः ।
विद्युद्गुणकौशेयश्चक्रधर इवोन्नतो मेघः ॥'

इत्येवं पुनरनुस्मर्यते महाकविना ॥

## दूतघटोत्कचम् ।

अभिमन्युवधानन्तरं भगवतो वासुदेवस्याज्ञां वहन्दौत्येन दुर्योधनसकाशं गतस्य घटोत्कचस्य कृत्यमिह वर्ण्यते । इह मध्यमव्यायोगे कर्णभारे चासकृन्निर्दिष्टः कवेरस्यात्यन्तमभिमतो धार्मिकः पवनस्य पौत्रो घटोत्कचः प्रकरणेऽपि

अङ्गला अमुक्काए विअ शत्तीए
घड्डुक्को विअ घादिदो म्हि शत्तीए ॥' इति पुनरप्यनुस्मर्यते संवाहकमुखेन ।

'शान्तं शान्तं पापम् । राक्षसेभ्योऽपि भवन्त एव क्रूरतमाः । कुतः ?

न तु जतुगृहे सुप्तान्भ्रातॄन्दहन्ति निशाचराः न च सुतवधं संख्ये वृत्तं स्मरन्ति निशाचराः
निकृतवपुषोऽप्युग्राचारा घृणा न तु वर्जिता ॥'

इत्यादि घटोत्कचेनोदाहृतं वचः— प्रकरणे 'न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि । येऽभिभवन्ति साधुं ते पापास्ते च चण्डालाः' इति चाण्डालभाषितस्य स्मरणमुपजनयति ॥

## कर्णभारम् ।

अत्र विप्रवेषधारिणा इन्द्रेण कर्णात्कवचकुण्डलप्रतिग्रहो वर्ण्यते । इहापि 'धर्मो हि यत्नैः पुरुषेण साध्यः' इति कर्णमुखाच्छ्रूयमाणा सरस्वती पुनरपि प्रकरणे 'अज्जा, कलेध धम्मशंचअम्' इति भिक्षुमुखेन निःसरति ।

एवमेव 'भुजङ्गजिह्वाचपला नृपश्रियः' इत्ययमाशयः प्रकरणे 'श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्यापरिसर्पणानि' इति साध्वनूद्यते ॥

कर्णेन 'अश्वं ददामि' इत्युक्ते 'मुहुत्तअं आलुहामि—' इति 'अपर्याप्तं कनकं ददामि' इत्युक्ते 'गेह्णिअ गच्छामि' इत्यादि वदन् विप्रः शकारेण 'शोव्वण्णखण्डुआहं दइश्शम्' इत्युक्ते

'अहमपि पलिहिश्शम्' इति, शोव्वण्णं दे पीढके कालइश्शम्' 'अहं पि उपविश्शम्' इति, 'शव्वं दे उच्छिश्टअं दइश्शम्' इत्युक्ते 'अहं पि खाइश्शम्' इत्यादि प्रतिवदन्तं चेटमनुस्मारयति॥

## ऊरुभङ्गम्

इह भीमसेनेन गदायुद्धे दुर्योधनस्योरुभङ्गेन वधो वर्ण्यते । अत्र प्रारम्भ एव कविः

'भीष्मद्रोणतटां जयद्रथजलां गान्धारराजह्रदां
कर्णद्रौणिकृपोर्मिनक्रमकरां दुर्योधनस्रोतसम् ।
तीर्णः शत्रुनदीं शरासिकतां येन प्लवेनार्जुनः
शत्रूणां तरणेषु वः स भगवनस्तु प्लवः केशवः ॥'

इति मधुरं गायन् पुनः प्रकरणेऽपि

'चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुलं
पर्यन्तस्थितचारुनक्रमकरं नागाश्वहिंसाश्रयम् ।
नानावाशककङ्कपक्षिरचितं कायस्थसर्पास्पदं
नीतिक्षुण्णतटं च राजकरणं हिंस्रैः समुद्रायते ॥'

इति तामेव रीतिमनुसरति ।

पुत्रशतवधेन नितरां सन्तप्यमानहृदयाया गान्धार्याः कृपणामवस्थामिहानुशोचन्महाकविः प्रकरणे 'भूमी दढशंतत्ता हदपुत्तशदेव गन्धाली' इति वर्णयन् तां साध्वीमधिकृत्य समुत्पन्नो विषादः आत्मनो हृदयान्नापसरति इति अस्मान्प्रत्याययति ।

'यातोऽद्य सौप्तिकवधोद्यतबाणपाणिः' इति अस्य रूपकस्यावसाने निर्दिश्यमानेनाश्वत्थाम्ना अनुष्ठिता क्रूरचर्या कविना प्रकरणे

'मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना' इति पुनरपि स्मर्यते ।

एवं सुसूक्ष्ममनुविमृश्यमानेषु, एतेषां मृच्छकटिकनामकस्य निर्माता महाकविर्भास एवेति स्फुटमवगम्येत सहृदयैरितीदानीं विरामः ॥

इदमप्यस्माभिरस्मिन्नवसरे भवत्यवश्यवक्तव्यम् , यत् श्रीमदनन्तशयनराज्यस्य सर्वातिशायि सौभाग्यमभिवर्धत इति । यत्रैव महामहिमानः सर्वतन्त्रनिपुणाः पण्डिताः सरसकवयो बहुनिबन्धकर्तारो विश्वविख्यातवैभवाः सि-एस् ऐ. प्रभृतीनां बिरुदानामलंकारभूताः श्रीकेरलवर्मदेवा अवतीर्णाः । येषामश्रान्तपरिश्रमेण केरलेषु केरली, अखण्डेऽपि भारते गैर्वाणी च सुतरां समुल्लसति । यैरेव पूर्वं प्रक्रियासर्वस्वं नाम वैयाकरणनिबन्धरत्नमात्मना व्याख्याय सुबहुधनदानपूर्वकं मुद्रणाय दत्तमासीत् । येषामेव सारतरसरसोपदेशचमत्कृताः श्रीमत्स्यानन्दूरमहाराजाः साधुकर्मसततासक्तमनसः प्राचीनग्रन्थरत्नप्रकटनं नाम परमो धर्म इति मनसि कलयन्तः, नवीनामेनां ग्रन्थप्रकटनाधिकारशाखामुद्घाटयामासुः । किं बहुना — येषु किंचिदिवोदासीनेष्वपि, नियतं वदामः, न कदापि भवेत्प्रबन्धरत्नप्रकटनकथापि । इयं पुनः श्रीकेरलवर्मदेवानामतिप्रशंसार्हा समुचितकारिता, यदेते सर्वथा भारवहनक्षमेषु पण्डितेषु स्वान्तेवासिप्रधानभूतेषु श्रीगणपतिशास्त्रिमहाभागेषु सर्वात्मना विश्वसनीयेषु निक्षिप्येमं महान्तं ग्रन्थप्रकटनाधिकारभारमात्मना साक्षिभूता एव तत्तदवसरेषु परमात्मनः सौजन्यमभिदर्शयन्ति समुचितपरिष्कारविष्करणेनेति सर्वं शुभम् ॥

# कालिदासश्च भवभूतिश्च ॥



तत्र हि 'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः। उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' इत्युपक्रममाणः, 'यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च ज्ञानं तत्कथनेन किं न हि ततः कश्चिद्गुणो नाटके। यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः' इत्युपसंजहार पराधिक्षेपमात्मप्रशंसां च। आभ्यां हि किल मुहुर्मुहुर्भाव्यमानाभ्यां पद्याभ्यां भट्टभवभूतिरयं भग्नमनोरथः क्षुभितहृदयश्चासीदिति सुव्यक्तमवगम्यते। 'ये नाम केचित्'— इति पद्यं च मालतीमाधवात्पूर्वमेव कृतं किमपि काव्यं महाकविनानेन निवेदयत्, परिणतप्रज्ञस्य कवेर्वाणीमुत्तररामचरितमस्पृशत्, महावीरचरितमेव गोचरयति प्रथमकृतमिति समुन्नेतुं पार्यते सरसहृदयैः। शार्ङ्गधरपद्धतौ 'निरवद्यानि पद्यानि—' इत्येकम्, रसिकजीवने च 'अलिपटलैरनुयाताम्' 'किं चन्द्रमाः प्रत्युपकारलिप्सया—' इति द्वे च पद्यानि भवभूतिनाम्ना कामं सन्ति समुद्धृतानि। तानि चेमानि बन्धशिथिलानि अपुष्कलाभिधेयानि च पद्यानि, न रूपकत्रयकर्तुः, परस्य कस्यचिद्भवभूतेरेव पदघटनानि स्युरिति प्रतिभात्यस्माकम्। सन्ति खलु बहूनि नामधेयसादृश्यानि। [1]भोजचरितप्रबन्धस्येव नास्य

---

1. भोजचरितप्रबन्धे कालिदासबाणभवभूतीनामन्योन्यसंघर्ष आसीदिति प्रस्तावे कतिचनश्लोका भट्टभवभूतेरित्युपलभ्यन्ते। स प्रबन्धस्तु नातीव श्रद्धेयं प्रमाणं भवितुमर्हतीत्यन्यदा निरूपयिष्यामः।

सर्वात्मना प्रामाण्यं सहृदयसाक्षिकमिति पुनरुदारः कल्पः । सन्तु वा पद्यानीमानि त्रीणि मुक्तकानि प्रसिद्धस्यैव भवभूतेः, न खलु तावता 'ये नाम—' इति पद्यं द्वित्राणि मुक्तकानि विषयीकरोति विहाय किमपि रूपकमिति कश्चिदपि विमर्शकः कलयेत मतिम् । न वा कोऽप्यनुन्मत्तः कवियशः कतिपयैर्मुक्तकैरेव प्रार्थयमानस्तावता तद-सिद्धिमुपलभ्य भग्नाशमात्मानं समर्थयति; क्षुभितहृदयश्चैवं प्रक्रमेत परान् दूषयितुं भूषयितुं वा स्वयमेवात्मानम् । तदेष पिण्डितार्थः—महावीरचरितमादितः कृतम्, अनन्तरं चेदमुपनिबद्धं मालतीमाधवं नाम प्रकरणं महाकविना भवभूतिनेति । 'स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च ।' 'प्रभवति हि भगवान्विधिः' 'आत्मेच्छया न शक्यमुच्छ्वसितुमपि ।' 'सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम् ।' तदेतदवितथं सुभाषितम्, यदुच्यते— 'प्राज्ञस्यापि बहुश्रुतस्यापि विवेकिनोऽपि धीरस्यापि सत्त्ववतोऽप्यवश्यं दुःखातिपातेन विशुद्धमपि वर्षसलिलेन सर इव मानसं कलुषीक्रियते सर्वस्य' इति । यदयं बहुश्रुतोऽपि भवभूतिर्मालतीमाधवेनाप्यात्मनो मनोरथमसिद्धमभिवीक्ष्य पूर्वाधिकं कलुषितमनाः कविताविलासे परं परिणतप्रज्ञः सन्नेव स्वान्तिमकृतौ रसभावरमणीये उत्तररामचरितनाटके प्रस्तावनायां लघुप्रकृतिः कुपित इव प्रहत इव ग्रहाविष्ट इव नष्टबुद्धिरात्मगौरवमनभिरक्षन्नेव "सूत्रधारः— मारिष, सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता । यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ नटः— अतिदुर्जन इति वक्तव्यम्" इत्याबबन्ध सुभाषितेषु दुर्भाषितम् । अहो महाकुलीनस्य वैदिकाग्रेसरस्य पाङ्क्तिपावनस्य भट्टभवभूतेरन्तरमान्तमेव विषादपूरं बहिरुद्गमन्नयमप्रकृतानां

वाचामुपमानभावः, यत्सत्यम् 'शोकक्षोभे च हृदयं प्रलापैरेव धार्यते' इति तदुक्तावेव प्रविश्य निलीन इति मन्यामहे ॥

प्रियपाठकाः, अनया च गमनिकया मुहुश्चर्व्यमाणाभिः प्रस्तावनाभिराजीवनान्तमयं भूवभूतिरात्मनो मनोरथमननुभवन्नन्यापदेशविधया तत्र तत्र स्वाभिसंधिं प्रकटयन्नेव प्राकृतमिमं लोकं परिजहावित्यनुमातुमस्त्यवकाश इति प्रतिभाति ॥

अथ महाकविं कालिदासं परामृशामः— अपि नाम लब्धोऽनेन चरितार्थभावो जीवतैव स्वप्रसिद्धिश्रवणमहाभाग्यस्य पात्रभूतेनेति ॥

वयं तावदादित एव, कालिदासस्य तादृशं भागधेयमासीदिति प्रतिजानानास्तदुपोद्बलनाय प्रकृतेऽपि रूपकत्रयप्रस्तावनामेव परिशीलयामः सह सचेतोभिः ॥

इत्थं हि मालविकाग्निमित्रे प्रस्तवनाफक्किका— 'पारिपार्श्विकः— मा तावत् । प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य **वर्तमानकवेः** कालिदासस्य कृतौ किंकृतो बहुमानः । सूत्रधारः—अये विवेकविश्रान्तमभिहितम् । पश्य— पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् । सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः । पारिपार्श्विकः— अयमिश्राः प्रमाणम् ।" इति । अत्र हि कालिदासो वर्तमानकवौ न भवत्यादरः परेषामिति व्यञ्जयन्, स्वस्य प्रसिद्ध्यभावेन नाटकमिदं नाभिनन्देयुरन्य इत्यालोच्य नवीनमपीदं मदीयं नाटकं गुणभूयिष्ठमेव । परीक्ष्यताम् । मा च भूदविमर्शेन भवतामस्मिन्ननादरः । मा स्म च भवद्गड्डलिकाप्रवाहन-

येन[1] भवतां प्राचीनेषु पक्षपात इति संरब्ध इव सशपथमिव साधिक्षेपमिव च विलिखति । द्वितीये च विक्रमोर्वशीये, "सूत्रधारः - यावदिदानीमार्यमिश्रान्विज्ञापयामि । प्रणयिषु वा दाक्षिण्यादथ वा सद्वस्तुपुरुषबहुमानात् । शृणुत मनोभिरवहितैः क्रियामिमां कालिदासस्य' इति प्रस्तावनां प्रवर्तयन्, निरुध्येव चेलाञ्चले भावुकान्सशपथमिवाभिहितस्य 'पुराणम्....' इति स्वकीयपद्यस्य क्रियया किंचिदिव सार्थकतामभिवीक्ष्य तुष्टमनसमिवात्मानमभिदर्शयन्, विशेषज्ञताविजृम्भितेन विनयातिशयेन विशोभमान एव, स्वनामश्रवणमात्रेणापि किंचिदिव स्वकाव्याकर्णनसोत्कण्ठानार्यमिश्राननुयाचते परमवधानं मनसः सरसकविः कालिदासः । उभाभ्यामप्याभ्यामुत्तमाभ्यां रूपकरत्नाभ्यां सर्वतोऽपि निरङ्कुशं प्रसृताभ्यामन्यैरपि सारविद्भिरादृताभ्यामतितरां चारितार्थ्यमधिगच्छतो महितयशसो महाकवेः कालिदासस्य, स्वनामाङ्कनमेव पर्याप्तं सहृदयावर्जनाय भविष्यतीति यदि नाम मतिरुदेष्यति, मन्यामहे, नेदमाश्चर्यकरमस्वाभाविकं वा भविष्यति । तदेतन्मनसि निधायैव महामतिरसौ "सूत्रधारः— आर्ये अभिरूपभूयिष्ठा परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुनाभिज्ञानशाकुन्तलनामधेयेन नवेन नाटकेनोपस्थातव्यमस्माभिः" इति शाकुन्तले प्रस्तावनायां प्रस्तौति । सुसूक्ष्ममिदं वाक्यरत्नं मुहुर्भावयतां रसिकविमर्शकानामस्माभिरुक्तपूर्वो विषयो न खलु दुरवगाहो भविष्यति ॥

---

1. "गड्डुलिका मेषी— काचिदेका केनचिद्धेतुना पुरो गच्छति । इतरास्तु विनैव हेतुविचारं तामनुगच्छन्ति । गड्डुलिका अज्ञातप्रवाहागमस्थानो नदीविशेष इति केचित् । मेषयूथैरनुगम्यमाना मेषीत्यन्ये । तन्न्यायः भ्रान्तिपरंपरा ।

तदयमुपन्यासस्सारः— यदुत महाकविरुदात्तप्रकृतिः कालिदासो जीवन्नेव कीर्तिभाजनं भूत्वा सुप्रसन्नेनान्तरात्मना चरितार्थेन च जन्मना प्रत्यपद्यत परमं ज्योतिरिति ॥

इदमपि प्रस्तावनात्रयं सावहिति समालोचयतो भावुकमणेर्नियतमेव स्फुरिष्यति — मालविकाग्निमित्रं प्रथमकृतिः, विक्रमोर्वशीयं मध्यमकृतिः, अन्तिमा च कृतिरभिज्ञानशाकुन्तलमित्यपि प्राप्तकालं प्रतिपादयामः ॥

**जानन्ति चेन्मां जानन्तु ।**

॥ श्रीः ॥

## ॥ दांपत्ये कालिदासाशयः ॥



अयं खल्वनधिगतसंप्रदायरहस्यानामपरापरसंस्काररूषितचेतसामर्भकप्रायाणामनेकेषामाधुनिकानां संघसंस्काराभिलाषमभिनयतामाननादनवरतमागच्छन्नभिव्याप्तश्च रोदसी कोऽपि कोलाहलः, आहोस्विद्दुरुक्तहालाहलः; यदेते समुन्नतमानिनः स्वयमन्यथा चान्यथा च वर्तमाना अपि सभासु परं ससंभ्रमं साडम्बरं च स्वपूर्वपुरुषानेव पुण्यजन्मनो महात्मनः संस्कृतमतीनेव अपरिष्कृतात्मान इति, निखिलभुवनकुशलैकतानानेव देशाभिमानविहीना इति चोच्चैःस्वरमुद्घुष्यन्ति ।

एष किलैतेषां वाचोयुक्तिसारः— भारतीयाः किल पुमांसः स्त्रीषु क्रूरकर्माणः, 'न स्त्री स्वातन्त्र्यमर्हति' इत्येवंजातीयकानि हन्त स्मर्यमाणदुःखानि बहूनि वचनान्यात्मनैव कल्पयन्तः कामं कदर्थ-

यन्ति कल्याणीरपि कान्ताः । हन्त भोः कष्टात्कष्टतरं खल्विदम्, यदेते भारतीया मनुष्यधर्माणो नाम भूत्वापि न हि प्रदर्शयन्ति स्नेहं दयां दाक्षिण्यं वा महिलासु; न कदापि मानयन्ति मान्या अपि ताः । न सभासु ताः प्रवेशयन्ति; न वा संभाषणं तासामनुमन्यन्ते । केवलमिमाः पुंसां परमुपकारायैव भगवता सृष्टा इति बत बत मनसि कलयन्तो भारतीयाः पूर्वे तदनुगुणतया कतिचिदक्षराण्यपि प्रमाणग्रन्थेषु प्रक्षिपन्तः पामरान्मोहयन्तो हन्त हन्त भृत्या इव बन्दीरिवास्निग्धेन चक्षुषा वीक्षन्ते; अदयेन च मनसा व्यवहरन्ति । न खलु स्त्रीपुंसावेकरूपेण सृजतः कदाचिदप्यभिमतमिदं भगवतो भविष्यति, यन्मनुष्यजातीयेषु पुमांस एवार्हन्ति सर्वत्रापि स्वातन्त्र्यम्, एताभिः पुनः सर्वदापि परतन्त्राभिरेव सतीभिः कालो यापयितव्य इति । सर्वत्र समबुद्धिना हि भगवता, मन्यामहे, न हि तादृशान्यतिनृशंसान्यक्षराण्यासां ललाटतटे विलिखितानि स्युः । मानुष्यकनियमं तु न वयमाद्रियामहे; यतस्तादृशो नियमः स्वार्थैकपरैर्निर्घृणैः कैश्चिदभिलिखितः, कदाचिन्निष्कामकर्मभिर्महात्मभिर्जगतः क्षेमाय अन्यथा विपर्यासयितुमर्हश्च । देशान्तरीयाणां पुरुषाणां कीदृशः समयाचार इति किंचिदवहितेन मनसा विमृश्यतां भारतवासिभिः । ते किल प्रथमत एव सुनिपुणं चिरं परीक्ष्य परस्परानुरागं विज्ञायैव दांपत्याय प्रयतन्ते । व्यूढाश्च ता असंकोचमेव परिषदः प्रवेशयन्ति । संमन्यन्ते च तासां तत्रोपन्यासादिकम् । न निरुन्धन्ति च तासामद्वितीयानामेव विहाराय स्वैरगमनम् । प्रथमतस्तासामासनदानेन च सभासु सभाजयन्ति । कदाचित्स्वयं तिष्ठन्त एव तासामासनप्रदानेन सुबहु बहुमानं प्रदर्शयन्ति । सममेव स्त्रीपुंसयोः स्वातन्त्र्यमि-

ति मनसि कलयन्तः, किं बहुना, क्रियया तमेनमाशयं प्रकाशयन्ति। भारतीयाः खलु 'स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम्' इति पद्यखण्डं श्रुतिमिव प्रतिदिनमसकृदावर्तयन्तः कालं यापयन्तीति लज्जाकरमिदम्—— इति ॥

हन्त वयमप्येतेषामर्धमुग्धानामकाण्डताण्डवमनुशोचामः। न खल्वेते नव्यपरिष्कारबद्धपरिकराः प्राचीं स्थितिं भारतवर्षस्य भारतीयानांवार्यपुरुषाणामतिप्रशस्तमाशयविशेषमवगन्तुमभिनन्दितुं वा धर्मतत्त्वरहस्यं प्रभवन्ति। प्राञ्चो हि पुण्यपुरुषाः प्रथममामुष्मिकं श्रेय एव साधीयो गणयन्तः, ऐहलौकिकं सुखमानुषाङ्गिकमवरं च कलयामासुः। अद्यापि स एव हि संप्रदायः परमपावनः समुज्ज्वल एव भारतीयेषु महात्मसु परिदृश्यते; येन खल्वियं भारतभूमिः पुण्यभूमितया, वयं च भारतीयाः सर्वोत्कृष्टतया परिगण्यामहे। निक्षिपन्तु नव्यशिक्षिता निर्मत्सरं निजमत्र प्रज्ञाचक्षुः—— कियदुन्नमितमार्यैरात्मीयं शिरः। कियतीं नाम भूमिमारोपिता अस्मदीयाः स्त्रियः पूर्वपुरुषैरादरस्य बहुमानस्य स्नेहस्य दाक्षिण्यस्य चेति। धार्मिकाग्रेसराः पूर्वे हि पुण्यपुरुषाः पाणिग्रहणं नाम परमोपायो धर्माचरणस्येत्यनुशासति। संप्रत्यपि प्रबुद्धा भारतीया भार्यां सहधर्मचरीमेव नियतमभिमन्यन्ते। तत्र भवान्वैदेहोऽपि 'इयं सीता मम सुता सहधर्मचरी तव' इति वदन् किल सीतादेवीं भगवते रामभद्राय प्रददाति। अन्वयेन व्यतिरेकेण च भूयसा धर्माचरणं सहचर्यधीनमामनन्ति धर्मस्थेया महर्षयः। अत एव किल 'सर्वोपकारक्षमोऽयमाश्रमः' इत्यभिख्यायते गार्हस्थ्यम्।

(क्रमशः)

# शंकराभ्युदयः ॥



कार्ये हेतुगतो गुणः समुदयेदित्युच्चकैर्भाषिणः
पश्यत्पादमताध्वजाङ्घ्रिकधियो मिथ्यागिरः कल्पयन् ।
नैल्याद्वैतवदावदोऽपि हृदि यो रागं विधत्ते विभोः
सोऽयं देवि दृगञ्चलस्तव चिरं सौख्यानि देयान्मम ॥ ४२ ॥

मारच्छद्मवनेचरः श्रुतिपुटीरन्ध्रापदेशावटं
संछन्नं विरचय्य यच्छविमृषातापिञ्छनव्यच्छदैः ।
पश्यत्फालमनोऽभिधानहरिणं चर्कर्ति सद्यो वशे
सौभाग्यं शफरीदृशो दिशतु मे सोऽयं कटाक्षाङ्कुरः ॥ ४३ ॥

यच्छायाभररूपनीलपटिकामास्तीर्य गण्डस्थला-
भोगाकारवणिक्पथे स्मरवपुःसांयात्रिकाविष्कृताः ।
द्योतन्ते परभागमेत्य हसितज्योत्स्नात्ममुक्तालयो
मीनाक्षि त्वदपाङ्ग एष तनुतां मेदस्विनीं मे मुदम् ॥ ४४ ॥

भङ्गो भृङ्गगणस्य येन नियतं सिंहासनाध्यासनं
न्यक्कारो नवनीलनीरजरुचां न्यायामृतं वैभवम् ।
शिक्षा कामशिलीमुखस्य शिरसि क्षीराभिषेकोत्सवः
श्रीमान् कन्दलयत्वपाङ्गमहिमा श्रेयांसि मीनाक्षि ते ॥ ४५ ॥

शौनासीरमणित्विषो गुणनिका तापिच्छगुच्छच्छवेः
पर्यायो मधुपश्रियां परिणतिर्वीप्सातसीरोचिषाम् ।
कालिन्द्याः पुनरुक्तिरुत्पलमहास्तोमस्य चाम्रेडनं
दौर्गत्यं शफराक्षि मे तव दृशोर्दूरीक्रियादञ्चलः ॥ ४६ ॥

नैराकाङ्क्ष्यवदावदः श्रुतिपुटे नीलाम्बुजन्मश्रिय-
स्ताटङ्के वलवैरिनीलमहसां नैराश्यमङ्कूरयन् ।
वैतथ्योक्तिषु कज्जलस्य च दृशोर्वाचालभावं भजन्
सोऽयं मे शफरीदृशो वितरतात्सौख्यं कटाक्षाङ्कुरः ॥ ४७ ॥

कस्तूरीद्रवकल्प्यमानमकरीचातुर्यमुल्लासयन्
सातत्येन कपोलयोर्विरचयन्कर्णोत्पलालिश्रियम् ।
तन्वन्नीलसरोजदामसुषमानिर्निद्रतां कैशिके
श्रीमीनाक्षि शुभानि मे कलयतान्मुग्धः कटाक्षाङ्कुरः ॥४८॥

अनुदिनमिति देवीमर्चयन् वाक्प्रसूनै-
रविरतसुमरोचैःसौरभीसौलभीकैः ।
निगमशिखरचिन्तानिर्वृतो निर्व्यलीकै-
र्बहुदिनमिह वासं बह्वमंस्तार्यपादः ॥ ४९ ॥

इति पञ्चमः सर्गः ॥

## अथ षष्ठः सर्गः ॥

---*---

शेखरोऽथ यमिनां सहानुगैः
  सेतुदर्शनकुतूहलाद्व्रजन् ।
सिन्धुबन्धुतटसीम्नि राघवं
  दर्भपूलकृततल्पमस्तुत ॥ १ ॥

नित्यमेव निजमण्डलान्तरे
  बिभ्रति प्रणयतो विवस्वति ।
भूषयन् भुवननाथ तत्कुलं
  भूतलं दशरथादवातरः ॥ २ ॥

निर्दयं गुरुगिरा पुराजनौ
  निघ्नता स्वजननीमपि त्वया ।
न व्यधायि पुरुषादिनीवधे
  हन्त नाथ करुणेति नाद्भुतम् ॥ ३ ॥

मानवास्त्रमयपाशसंहितं
  ताटकातनयमूतमम्बुधौ ।
न न्यमज्जयत वैरमन्यथा
  वीरराक्षसकृतेऽङ्कुरेत्कथम् ॥ ४ ॥

स्वीयवंशजनिना त्रिशङ्कुना
सोऽयमध्वरमकारयत्पुरा ।
इत्युदीतमतिरेव याजयन्
कौशिकं कलयसे कृतज्ञताम् ॥ ५ ।

ऊरुरुज्ज्वलगुणामजीजन-
न्मानिनीं मघवमोहिनीं पुरा ।
इत्युदीर्ष्यमिव ते पदाम्बुजं
तादृशीमजनयत्तलोदरीम् ॥ ६ ॥

गौतमस्य गृहिणी विभो भव-
त्पादपङ्करुहतः पवित्रिता ।
इत्युदश्चति न विस्मयो जग-
त्पावनी तदुदिता वियद्धुनी ॥ ७ ॥

धन्वपर्वमपि तन्वति त्वयि
प्राप्तभङ्गमधुना घनप्रभे ।
सीतयोदितशुभाङ्कुराश्रिया
सद्य एव समभावि राघव ॥ ८ ॥

मैथिलीपदतलं मणीशिलां
मङ्गलार्थमधिरोपयन् भवान् ।
पादरेणुमहिमानमामृश-
न्नस्तशङ्कमवदन्मनुं किमु ॥ ९ ॥

इक्षुदण्डमिव खण्डयन्भवा-
निन्दुखण्डमकुटस्य कार्मुकम् ।
तद्विनेयधनुषोऽधिरोहणा-
त्कीर्तिमीश कियतीमवाप्स्यति ॥ १० ॥

जानकी हरशरासकर्षणा-
ज्जानती निजकरग्रहोत्सवम् ।
तद्विनेयविशिखासरोपणे
त्वामवैक्षतत्मां किमीर्ष्यया ॥ ११ ॥

वत्स साधय वनाय मौनिना-
मित्यधीश गुरुणा समीरितः ।
त्वं गतस्तदवनाय तज्जनैः
कीर्त्यसे गुरुनियोगकृत्कथम् ॥ १२ ॥

हन्त काकहतकस्य लोचनं
विद्धमस्तु भवता तृणाग्रतः ।
मोचनेन पुनरस्य मोदवान्
कौशिको वद कृतः कथं नु वा ॥ १३ ॥

आसिकां धुरि दशाननस्वसु-
र्नासिकामपि न सोढवानसि ।
आशरानपि खरान्सदूषणा-
नातनोस्त्वमखरानदूषणान् ॥ १४ ॥

राम हेमहरिणार्भकग्रहे
हे तवापि वितथः श्रमोऽभवत् ।
काङ्क्षितं भुवि लभेत को नु वा
काननेषु मृगतृष्णया भ्रमन् ॥ १५ ॥

राज्यसंपदि विसृज्य रागमाः
काननैककृतजीवनोऽपि सन् ।
राम हेममृगतृष्णया जन-
स्थानसीमनि कुतोऽकृथा भ्रमम् ॥ १६

मुक्तमीश कलयन्मुकुन्दमु-
न्मूलितार्कसुततापवैभवः ।
देव मारुतसहायवान्भवान्
दक्षिणां दिशमगाद्घनोपमः ॥ १७ ॥

वालिनं बलिनमप्युपेक्ष्य य-
द्वासराधिपसुतेऽकृथा दयाम् ।
भावयाम्यहमिहोपधिं प्रभो
भानुवंशजनिमेव तावकीम् ॥ १८ ॥

भाविसेतुकृतये पयोनिधौ
राम पातयितुमेव रंहसा ।
दूरमग्रचरणेन दुन्दुभेः
कायमायतमुदक्षिपद्भवान् ॥ १९ ॥

साधुवल्कमपि सप्ततामभी
बिभ्रतः किल विडम्बयन्ति माम् ।
इत्युदीर्ष्य इव भूरुहो भवान्
सालनाम्न अभिनच्छरेण किम् ॥ २० ॥

निर्दलय्य नगमेककं पुरा
हंसचारमकृथाः क्षितौ परम् ।
सप्त तान् सपदि वारयन् यशो-
हंसचारमधुना जगत्त्रये ॥ २१ ॥

मारुतावृतमहेषुरन्ध्रभू-
मन्द्रकन्दलितसैकषट्स्वरा ।
त्वद्यशोभरमशेषशोभनं
सप्तसाल्यनिशमीश गायति ॥ २२ ॥

वालरोमवशगाशरप्रभो-
र्वालिनोऽलघुभुजान्तरान्तरे ।
बाणतो विघटिते त्वया द्विषां
बाढमाप घटितारर पुरम् ॥ २३ ॥

भ्रातृवत्सलतया तमप्यवन्
पाकशासनिमुपेन्द्र वायसम् ।
वालिनं त्वमपराधवर्जितं
निर्दयं निहतवान् कथं च भोः ॥ २४ ॥

त्वद्भटेन पुरतोरणास्थितिं
तन्वतानिलतनूभुवा द्विधा ।
अक्षहीनमयमाशराग्रणीः
स्वं व्यबुध्यत सुते मृधे हते ॥ २५ ॥

राज्यदानविधिनाग्रजन्मनः
प्रेमभाजनतया च तादृशा ।
ईश कीशसदसामधीशितु-
र्निर्विशेषमकृथा विभीषणम् ॥ २६ ॥

ईदृशं शयनधाम नेतर-
त्संघटेत युगसंक्षये मम ।
इत्यवेत्य सरितां किमीशिता
नाशितो न भवता शरार्चिषा ॥ २७ ॥

सायकस्तव समुद्रचूषणे
कौशलं किमपि कूलमुद्रुजम् ।
कुम्भसंभवतपोधनान्तिके
किं नु राघव वसन्नुपाददे ॥ २८ ॥

वायसेऽपि वनिताकृतागसि
प्रागसौ विहितवान् दयामिति ।
अम्बुराशिरपराधवानपि
त्वां समाश्रयत किं दयानिधे ॥ २९ ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष ज्येष्ठमासः । [संचि. ३

## सुभाषितानि ॥



तत्तत्समग्रबहुशास्त्रविमर्शसिद्ध-
वैदग्ध्यदिग्धमतयो बहवः कवन्ताम् ।
यत्किञ्चिदस्ति तु महाकविवाग्रहस्यं
स्वप्नेऽपि तस्य किल ते न दिशं स्पृशन्ति ॥ १ ॥

निष्पीडिता बहुमुखं सुवते बहूनां
गावश्चिरान्मितसुभाषितदुग्धधाराः ।
कश्चित्त्वगाधरसशुद्धनवप्रबन्ध-
क्षीरोददानपतिरेति कवीश्वरत्वम् ॥ २ ॥

सर्वः संचरते पथा परकविग्रामस्य कश्चित्तु स
श्लाघ्यः स्वप्रतिभाधनस्य महतः प्रक्रान्तदिव्यव्ययः ।
यद्विश्राणितनव्यवाङ्मयबृहत्सेतुप्रतिष्ठाजुषो
विस्रम्भाद्बहवस्तरन्ति गहने सारस्वतस्रोतसि ॥ ३ ॥

मङ्खकस्य ।

॥ श्रीः ॥

# ॥ नाभानेदिष्ठः ॥



पूर्वमिह स्मृतिपथातीते काले ब्रह्मपुत्रो मनुरिमां वसुधां सुचिरं परिपाल्यात्मनः पुत्रेषु सर्वमपि राज्यभारं निवेश्य गार्हस्थ्यान्निववृते । तेष्वेकतमो नाभानेदिष्ठो नाम कश्चित् ब्रह्मचर्यं चरन्गुरुकुले वेदाध्ययनपर आसीत् । तमनादृत्य पित्रा दत्तं दायमन्ये मानवा व्यभजन् । कालेन च ब्रह्मचर्यं परिसमाप्य द्वितीयमाश्रमं प्रविविक्षुर्नाभानेदिष्ठः गृहानयासीत्, अप्राक्षीच्च 'कुत्र मदीयो दायः' इति । 'ब्रह्मनिष्ठोऽस्माकं जनक एव त्वदीयो भाग अवशिष्यते; तमेवोपलभस्व' इति प्रत्यवदंस्तदीयाः सोदराः ।

तदाकर्ण्य विदीर्णहृदयो नाभानेदिष्ठ आरण्यकं व्रतं चरन्तं पितरमुपसृत्य भ्रातॄणां क्रौर्यं न्यवेदयत् । सोऽपि तमात्मनस्तनूजं स्नेहार्द्रया दृशा पश्यन् 'अङ्ग, मा विषादं गमः, अङ्गिरसो नामैते ऋषयः साम्प्रतं स्वर्गकामाः सत्रमनुतिष्ठन्ति । षष्ठे दिवसे सवनकर्मणि प्रवृत्ताः इतिकर्तव्यतामूढा मुहुर्मुहुर्मुह्यन्ति । तानभ्येत्य इदं सूक्तद्वयं (ऋग्वेद दशमे मण्डले– ६१, ६२) शंसय । ततो मोहादपेताः सत्रं यथाविधि परिसमाप्य स्वर्गमेष्यन्ति । दास्यन्ति च ते सत्रदीक्षादक्षिणात्वेन गवां सहस्रम्' इत्यवोचत् ।

सोऽपि तथेति प्रतिपद्य अङ्गिरसः समासाद्य 'भोः सुमेधसः, मनोरात्मजन्मानं मामस्मिन् सत्रे ऋत्विजं वृणीतुमर्हथ' इत्यब्रवीत् ।

'किं त्वया कार्यमस्मिन्सत्रे ?' इति तैः पृष्टः 'षष्ठेऽहनि यत्सवनकर्म कर्तव्यं तद्व उपदेक्ष्यामि; अवसिते चावभृथे गोसहस्रमवशिष्टं युष्मदीयं द्रविणं मह्यं दक्षिणां दातुमर्हथ' इत्यवादीत् । अङ्गिरसोऽपि तथेति प्रत्यपद्यन्त । अथ प्राप्ते षष्ठे दिवसे पित्रोपदिष्टं तत्सूक्तद्वयमसौ नाभानेदिष्ठस्तानध्यापयत् । ततः सद्य एव यज्ञपुरुषस्य स्वरूपं विदित्वा सत्रं यथाविधि परिसमाप्य स्वर्गं लोकमगमन्नाङ्गिरसः । स्वर्गमेष्यन्तश्च तं नाभानेदिष्ठमाहूय 'इदमवशिष्टं सहस्रं त्वदीयमेवैतद्गृहाण' इत्यवादिषुः ।

यावदसौ तैर्दत्तमवशिष्टं गोधनमादातुमुद्युङ्क्ते तावदुत्तरतो वेद्याः कश्चित्कृष्णवस्त्रधारी पुरुषः प्रादुर्भूय 'सर्वमिदमवशिष्टं गोधनं मदीयमित्यवधेहि; तदपसर दूरतः' इत्युच्चैराक्रन्दत् । नाभानेदिष्ठोऽपि 'मह्यमिदं सर्वं दत्तमङ्गिरोभिः, तदहमेवास्य स्वामी' इत्यभाणीत् । अथ कृष्णवासाः पुरुषः 'संशयेऽस्मिन् तव पिता मनुरेव प्रष्टव्यः; तमभ्येत्यास्मिन्विषये निर्णयमवगत्य सत्वरमागच्छ' इति व्यवस्थामकरोत् । सोऽपि तथेति पितरमुपससार । पृष्टश्च तेनागमनप्रयोजनं यथावृत्तं न्यवेदयत् । मनुरपि 'अवशिष्टं गोधनं शास्त्रतस्तदीयमेव; न तेऽत्र विवादस्यावसरः' इति निरधारयत् । नाभानेदिष्ठस्तत्क्षणेनैव प्रतिनिवर्त्य तमेव पुरुषमभ्येत्य 'महाभाग, इदं सर्वं युष्मदीयमेव' इति मे जनको वदति । तद्यथेष्टमिदं गृहाण' इत्युक्त्वान्यतो गन्तुमुपाक्रामत ।

पुरुषोऽपि परितुष्टस्तमनुपदमेवाहूय 'भो मानव, प्रीतोऽस्मि तवानेन सत्यवचनेन । इदं सर्वं मयाद्य तुभ्यमेव दीयते । तद्यथेष्टमुपभुङ्क्ष्व । सत्यान्नास्ति परो धर्मः । विदुषा सत्यान्न प्रमदितव्यम्'

इति शंसन्ननन्तरघात् । नाभानेदिष्ठस्यास्योपाख्यानं शृण्वतां सत्ये रतिरवश्यं संपद्यते— इति ऐतरेयाः समामनन्ति ॥



# गैर्वाणी ॥

( पूर्वतोऽनुवृत्तम् )

**कृष्णशास्त्री**— अत्रेदं रहस्यम् । नैते श्रोत्रियाः । वैदिकधर्मानुष्ठानेषु नातीव श्रद्धामावहन्तीमे धनिकाः । अवरजातिसमुत्पन्नैरनवरतसंसर्गेण दूरे विगलितमात्मनो ब्राह्मण्यं नावगच्छन्ति । प्राचीनसमयाचारेषु न सर्वथोत्कर्षबुद्धिरेतेषाम् । देशकालानुगुणं समयाचारव्यवस्थासु परिणामः कर्तव्य इति तेषां दृढाभिसन्धिरुपलभ्यते । यदि तन्मतं नानुवर्तेरन् पण्डिताः तर्हि तेषां बुद्धिवैशद्यमेव नास्तीत्युद्घोषयन्ति, प्रदर्शयन्ति चावज्ञां तादृशेषु । किं कुर्मः । तादृशैः सङ्घसंस्करणबद्धोद्यमैः यत्किमप्यनुष्ठीयताम् । काफीपानमत्तानामैहिकसुखप्रवणानां पतितप्रायाणां पुनः पातित्यमस्तु नाम । अस्मदीयमान्तरमभिप्रायमेते जानन्त्येव । अथापि चिरंतनसंस्काराननुगुणमाशयो वक्तव्य इति निर्बध्नतां पापानि कथमास्तिकेष्वस्मासु संक्रामेयुः ।

**रामशास्त्री**— प्रामाणिकमिदं ते वाक्यम् । अथापि जगतः क्षेमाय कालदेशानुगुणमुद्योगमनुतिष्ठतामेतेषां प्रभूणां कर्म पातित्यावहमिति कथं विश्वसनीयम् । 'कालः करोति कार्याणि' इति न्यायेन प्राचीनाचारादीनां व्युत्क्रमः भवति भविष्यति चास्माकं

गेहेषु । पूर्वमप्यस्मिन्देशे स्मृतिकर्तृभिरुच्चावचा जनपदधर्मा ग्रामधर्माश्चाभ्युपगताः । अन्यथा समयाचारव्यवस्थासु क्वचित्क्वचित्स्मृतिकर्तॄणामाशयभेदाः कथमिव घटन्ते । एवमेव केषुचित् वाक्येषु ऋतुमतीविवाहस्य प्रामाण्यमुपलभ्यते ; केषुचिदन्यथा विद्यते । यथाकथञ्चिदाधुनिकानां यादृश्या व्यवस्थया सौख्यं भवेत्तथैवास्माभिः प्रयतितव्यं किल ।

**कृष्ण**— अरे कापटिक! त्वं वैदिकमताभिमानी आहोस्विदन्यथा इति निर्णेतुं न शक्यते । हा! वञ्चितोऽस्मि तवानेन वचनोपन्यासेन ।

**राम**— यथा तथा वा भवतु मदीयोऽभिनिवेशः । युष्मदीय आन्तर आशय एवान्तर्यामिसाक्षिकमावेदनीयः । प्रष्टुराशयानुरोधेन वक्तव्यमित्ययं नवीनो राद्धान्तः कुत्रानुशिक्षितः पण्डितप्रकाण्डेन भवता। अहो! निष्फला प्रज्ञा । निरर्थकश्च शास्त्राभ्यासः । अनृतभाषणेन प्रथममात्मा हन्यते । 'अश्वत्थामा हतः कुञ्जरः' इति व्याहृत्य धर्मात्मजो निरयदर्शनदुःखमन्वभवत्किल । 'सत्यं वद – धर्मं चर; सत्यान्नास्ति परो धर्मः; सन्तः सत्ये रमन्ते' इत्यादि निगमशतोद्घुष्टमुपदेशं दूरीकृतवता त्वया को नामात्मगुणः संपादितः? प्रातःस्नानपुण्ड्रधारणादिबाह्यव्यापारैः जगदिदं वञ्च्यते – न हि न हि आत्मैव ।

**कृष्ण**— किमेवमस्थाने विजृम्भसे? अविज्ञाय प्रष्टुराशयमभिनिवेशं वा स्वाशयाण्विष्करणं न सर्वथा बुद्धिवैशद्यं द्योतयति । सर्वेषामप्येकमेवोत्तरं व्याहरन्परिहासभाजनं भवति विबुधाग्रेसरोऽपि ।

**राम**— लौकिकव्यवहारेष्वियमेव रीतिरनुसरणीयेति केचनाभिप्रय-

न्ति । एतदपि नाहमभिनन्दामि । 'मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम् ।' इत्यभियुक्ता वदन्ति ।

**कृष्ण—** उक्तं किल मया प्रौढाविवाहादिकमशास्त्रीयमेवेत्यत्र वैदिकानां न कापि विप्रतिपत्तिरिति । तत्कथमेवं मां परुषया वाचा दूनयसि ?

**राम—** स्मृतिप्रामाण्यं दूरीकृत्य श्रौतलिङ्गपर्यालोचनया किल ऋतुमतीविवाहस्य शास्त्रीयत्वं निर्णीतमिति हेतोरस्माकं तस्मिन्नाशये प्रमाण्यबुद्धिर्जायते ।

**कृष्ण—** उन्मादोऽयम् । को वा श्रुतेरयमेव निष्कृष्टोऽर्थ इति निर्णेतुं पारयेत् । आपाततः प्रतीयमानं यं कञ्चिदर्थमवलम्ब्य सामयाचारिकधर्मनिर्णये प्रयतन्ते पण्डितंमन्याः । तत्रापि इमे स्वेषामाशयस्यानुकूलतया प्रतीयमानानि श्रुतिवाक्यान्येव सभायामुदाहरन्ति; मन्यन्ते च तावता कृतकृत्यताम् ।

**राम—** ( साश्चर्यम् ) तत्रभवतां मुखेनैवाननुकूलानि श्रुतिवाक्यान्यवगन्तुमुत्सहे ।

**कृष्ण—** 'यन्मे माता प्रलुलोभ चरत्यननुव्रता' इत्यादिश्रुतिवाक्यस्यार्थपर्यालोचनायामस्मत्पूर्वपुरुषाणामस्माकं च जनन्यो व्यभिचारिण्यः इति सिध्यति । एवं श्रौतलिङ्गे परामृश्यमाने सर्वेषामप्यस्माकं कुण्डेषु परिगणनमपरिहार्यं भवेत् । ब्रूहि कस्येदं स्पृहणीयमिति ।

**राम—** कथं तर्हीदृशानि वाक्यानि नोदाह्रियन्त सभायाम् केनापि पण्डितेन ?

**कृष्ण—** केनचिदिदमुपह्वरे प्रक्रान्तम् । परमसौ भीरुः पारिषत्प्रवर्तकानां वैमनस्यं भवेदिति कृत्वा सभायामिमं विषयमुपन्यसितुं नाशकत् ।

**राम—** हन्त! पक्षपातेन सर्वतो व्यवहारश्चलति । किं क्रियताम्?

**कृष्ण—** अन्यः कश्चित्पण्डितः सभायां 'पत्नि, कति ते जाराः' इत्यस्य यजमानवाक्यस्य विमर्शः करणीय इत्यवतितारयिषुः पार्श्वस्थैर्निर्भर्त्सितः वृत्तिच्छेदभिया तदानीमेव पलायितोऽभूत् ।

**राम—** आस्तामयं विषयः । न प्रसीदति मेऽन्तरात्मा । स्मृतीतिहासपुराणवाक्यैर्वेदं समुपबृंहयेत्— इति निर्दिष्टां प्राचीनां सरणिमनुसृत्य श्रुतेरर्थनिर्णय एव साधुः । तां विहाय श्रुतेः स्वातन्त्र्येणार्थकल्पनसाहसेन एतैः न केवलमात्मा परन्त्वन्येऽपि प्रतार्यन्ते ।

**कृष्ण—** सत्यम् । श्रुतेरर्थवर्णने क्वचित्क्वचिन्माधवाचार्योऽपि बभ्रामेति नवीना वदन्ति । तथाहि— विष्णुस्त्रेधा निदधे पदम्' इत्यस्य वाक्यस्य त्रिविक्रमचरित्रपरत्वेन तात्पर्यं वर्णयति माधवः । सूर्य एव प्रातर्मध्याह्ने सायं च दिवमाक्रमते इतीममर्थं अवगमयन्ति निरुक्तकाराः ।

**राम—** द्वेधाप्यर्थवर्णनमिह संभाव्यते । ऋतमित्युदकनाम, सत्यं वा यज्ञं वा' इत्यादि यास्कनिरुक्तमवलम्ब्य एकस्यैव वाक्यस्य आधिभौतिक-आध्यात्मिक-आधियज्ञिका अर्था वर्णयितुं शक्यन्ते । परन्तु विवादग्रस्तेऽस्मिन्विषये नैतत्त्रयमपि संगच्छते ।

**कृष्ण—** कुतः त्वया अधिगतमिदं ज्ञानं वेदार्थनिर्णयसरणिमधिकृत्य?

**राम—** ऐरोपीयेषु प्रधानपण्डितेन मोक्षमूलभट्टेन मुद्रिता काचन ऋक्संहिता मया क्रीता । तत्रैतत्सर्वमुपलभ्यते ।

**कृष्ण—** भो, अब्रह्मण्यमब्रह्मण्यम् । निगमपुरुषस्याद्यापतितां दशां स्मारं स्मारं नितरां दूयते मे हृदयम् ।

**राम—** किमापतितं निगमपुरुषस्य ?

**कृष्ण—** वेदपुरुषोऽसौ त्रैवर्णिकेभ्यो बहिर्भूतेन केनचिन्मतान्तरस्थेन जीवग्राहं गृहीतः काकलरूपे बन्धनागारे मषीशृङ्खलया नियन्त्रितः चाण्डालैरप्यसकृत्स्पृष्टः नितरामपवित्रीकृतः— इतीदमतिशोचनीयतरमास्तिकानाम् ।

**राम—** ( सस्मितम् ) अस्मदीयैस्तालपत्रेषु अयश्शलाकयोत्कीर्णरूपः तस्कर इव रज्जुभिरभितो निबद्धः, महापराधीव हृदयनिहितशङ्कुः, निधिरिवादृश्यरूपः उच्छ्वसितुमप्यन्तरमलभमानः वम्रिभिरवलीढो वेदपुरुषः कथं वर्तते इत्यजानान इव व्याहरसि ।

**कृष्ण—** सत्यम् । वेदोऽयं गुरुमुखेनोच्चार्यमाणः श्रवणपुटैर्निपीयाधीयते वटुभिरितीयमेव प्राचीना श्लाघ्या च रीतिः । तालपत्रे विलिख्याध्ययनमपि निषिद्धमेव । परन्त्ववरजातिसमुद्भवैर्न स्पृश्यते निगमपुरुष इत्ययमेवात्र विशेषः ।

**राम—** अहो ! गुणानेव दोषत्वेनोदाहरसि । पाश्चात्याः पण्डिता देववाण्यभ्युदये बद्धश्रद्धाः अस्माभिरनादृतान्ग्रन्थान्महता परिश्रमेण विचित्य परिशोध्य च दृढे रमणीये च पत्रे प्रस्फुटाक्षरं मुद्राप्य प्रकाशयन्ति । तेषामुद्यमैरद्य चत्वारोऽपि वेदाः सस्वरं सपदपाठं सभाष्यं च मुद्रिता विराजन्ते । अस्माभिर्ग्रन्थाक्षरेणान्ध्रलिप्या वा मुद्रिता ग्रन्थाः पत्रदरिद्राः अस्फुटवर्णा अपशब्दबहुला वक्रपङ्क्तयः आत्मनो नश्वरत्वमापातत एवावबोधयन्ति ॥

( क्रमशः । )

# दाम्पत्ये कालिदासाशयः ॥

( पूर्वतोऽनुवृत्तम् )

---

निषिद्धेऽपि काले स्त्रीणां वरमनुसरता पुरुषेण गम्या एव ता इत्यनुशिष्य, तत्र 'स्त्रियो रक्ष्या यतः स्मृताः' इति हेतुमुपन्यस्यन् भगवान्याज्ञवल्क्यस्तासां लौकिकेऽपि विषये कीदृशं स्वातन्त्र्यं बहुमानं च प्रदर्शयतीति ननु नव्यशिक्षिता एव नयने निमील्य सावहिति समालोचयन्तु । धर्माचरणेऽपि दंपत्योः सहाधिकारमेव भगवान् जैमिनिरप्यनुशास्ति । किं बहुना — श्राद्धेऽपि खल्वपत्नीको न निमन्त्र्यते धर्मवृद्धैः । एवं सर्वतः समालोच्यमाने भारतीयानामपि पुरुषाणामस्ति स्त्रीषु महानादरो बहुमानश्चेति सुस्पष्टं भवति सुमेधसाम् । न खल्वभ्युत्थानासनप्रदानसभाप्रवेशनसंभाषणादिकमेव बहुमानचिह्नमाकलयन्ति भारतीयाः पूर्वपुरुषाः । तेषां खलु धर्मसंस्कारपूते मनस्येतादृशं कर्म नियतं निन्दितमेव परिस्फुरिष्यति । पारत्रिकं श्रेय एव परमं प्रधानमिति निश्चिन्वतां तदनुगुणमेव सर्वमप्यैहिकं कर्म समाचरताम्, सर्वथा विनश्वरमिदं विषयसुखमिति विभावयतामस्मत्पूर्वपुरुषाणां धर्मतत्त्वमविज्ञाय, पारत्रिके सुख एव प्रायशः संदिहानैः पार्थिवभोगैकप्रवणैर्देशान्तरीयैः पुरुषैः साकं तारतम्यविवेचनाय प्रवृत्तिर्नव्यशिक्षितानां न खलु रमणीयेति, मन्यामहे, त एव जातुचिदात्मना ज्ञास्यन्ति । यतः 'कालः करोति कार्याणि ।'

आस्तामियं धर्मप्रतिष्ठापकाचार्याणामाशयविशेषपरिशीलनक-

था। अथ कवितल्लजः कालिदासः किमभिप्रेत्यास्मिन्विषय इति शाकुन्तलतः किंचिदिव विमृशामः। स खलु महाकविः 'अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः। अज्ञातहृदयेष्वेवं वैरी भवति सौहृदम्' इति निबध्नन्, विवाहात्पूर्वमेव दंपतिभ्यामन्योन्यहृदयपरीक्षणं कर्तव्यमित्युपदिशन्, तदभावे समापतन्तीमनर्थपरंपरामप्युत्तरार्धेन संगृह्य निरूपयति। एवं परीक्ष्य परिगृहीतायां च कन्यायां पितुर्बन्धुजनस्य च मनोगमनिकया कीदृश्या भवितव्यमिति, कीदृशं च तेषामाशासनं स्यादिति च निरूपयिष्यन्, "अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः। जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा' इति, 'यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वहस्व' इति, 'सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः' इति च निबध्नाति। यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्। वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः' इत्यनेन पुत्र्याः पतिकुलप्रस्थानसमये पितुर्बान्धवजनस्य च संभवन्तं विषादातिशयं सुनिपुणमावेदयति। पतिकुलं प्रस्थितायाश्च सुताया बन्धुजनैरेवमुपदेशः कर्तव्य इति 'शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः। भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः' इत्यनेन सुसंस्कृतं निर्दिशति लोकतत्त्वज्ञो महाकविः। 'अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे विभवगुरुभिस्तैस्तैः कृत्यैः प्रतिक्षणमाकुला। तनयमचि-

रात्प्राचीवार्कं प्रसूय च पावनं मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ' इति निबध्नन्तं विना कालिदासं को हि नाम पतिकुलप्रस्थाने बन्धुजनविग्रहविक्लबायाः कन्यकायाः समाश्वासनप्रकारचातुर्यमवबोधयितुमलं भवति ॥

अथेदानीं भर्तृगृहं गतायाः स्त्रियः कीदृशं वर्तनम् ? कियच्च स्वातन्त्र्यम् ? कथं नाम वा पारतन्त्र्यमित्यत्रापि किंचित्समालोचयामः ॥

' सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथाभर्तृमतीं विशङ्कते। अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः' इत्यनेन पाणिगृहीताया योषितः पतिकुलावस्थितिरेव साधीयसी; न चेतदेवं, हन्त निर्निमित्तमपि जना नितरामेतादृशीमपवदेरन्निति बोधयन्महाकविः, जन्मान्तरदुरितपरिपाकेन कदाचित्पत्युरप्रियाया अपि भार्यायास्तदीयं शरणमेव शरणम् । न चैनया निर्विण्णया पदात्पदमप्यन्यत्र गन्तव्यमिति स्वकीयमाशयम् ' यदि यथा वदति क्षितिपस्तथा त्वमसि किं पितुरुत्कुलया त्वया । अथ तु वेत्सि शुचिव्रतमात्मनः पतिकुले तव दास्यमपि क्षमम्' इत्यनेन सुविशदं प्रकाशयति । दंपत्योश्च परस्परोपरि सममेव न्याय्यं स्वातन्त्र्यमित्ययमर्थः । ' तदेषा भवतः कान्ता त्यज वैनां गृहाण वा । उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी' इत्यनेन ' शापादसि प्रतिहता स्मृतिरोधरूक्षे भर्तर्यपेततमसि प्रभुता तवैव (वम्) । छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा' इत्यनेन च सुस्पष्टीभवति सहृदयानाम् ।

एतत्सर्वमपि मनसिकृत्यैव तत्रभवान्भट्टभवभूतिः ' प्रेयो मित्रं

बन्धुता वा समग्रा सर्वे कामाः संपदो जीवितं च । स्त्रीणां भर्ता धर्मदाराश्च पुंसामित्यन्योन्यं वत्सयोर्ज्ञातमस्तु' इति संग्रहपद्यं समारचयामास ।

इत्थं च भारतीयानां धर्मरहस्यं तदनुगुणमाचरणम्, महाकवीनां महनीयमाशयविशेषम्, तदनुमितां भारतलोकस्थितिं च सुनिपुणं विमृशतां सचेतसां मनसि, अर्धमुग्धानामयमयमाडम्बरः सर्वोऽपि विषादादपि विस्मयम्, विस्मयादपि दयनीयतामधिकाधिकमुत्पादयेदिति दृढं वयं विश्वसिमः ॥

---

॥ श्रीः ॥

# ॥ भासकविः ॥

---

भो भो आर्यमिश्राः, प्रजानां पुण्यपरिपाकवशादिह लोके लब्धजन्मभिर्महात्मभिर्जगत उपकाराय अहरहरनुष्ठीयमानानि लोकोत्तराणि कृत्यानि वाग्विभवातिलङ्घीनीत्यवधारयत ।

तद्यथा— अनन्तशयनमहीपालाः केवलं लोकोपकारबुद्ध्या यावदद्याप्रकाशितान् येन केनचिददृष्टपूर्वानज्ञातचरान्विविधग्रन्थान् निजविद्वद्वरैस्तत्तदुपलब्धिस्थलेभ्यो विचाय्य विचाय्य संपाद्य देवाक्षरैर्मुद्रापयित्वा प्रकटीकृतवन्तः । तत्संपादिता बहवो ग्रन्था इदानीमस्मत्पुस्तकभाण्डागारमस्मत्करतलं चालंकुर्वन्ति । एतद्विषये यदि महाराजोऽमितधनव्ययं बुद्धिक्लेशं चाङ्गीकृत्य तान् ग्रन्थान् नोदहरिष्यत्, तदा तद्ग्रन्थविषयेऽस्माकं ज्ञानं नोदैष्यत् । महाराजेन दययो

द्धृतेषु ग्रन्थेषु भासकविनिबद्धानि कानिचिदपूर्वाणि रसवन्ति रूपकाणि सन्ति ॥

अतिशयितकालिदासादिमहाकविवाग्विभूतेरेतस्य कविप्रकाण्डस्य नामाप्यजानानाः केचिद्विद्वत्संघेऽपि स्युरिति मे मनीषा । का कथा पामरजनानाम् । तेषां सुतरां दूरापास्ता तद्ग्रन्थपरिचयप्रत्याशा । अस्य महाकवेरास्था तत्र तत्र कतिपयैरर्वाचीनकविभिः स्वग्रन्थादौ सुकविस्तुतिप्रकरणे ग्रथितेत्येतावदेव जानीमः ॥

तद्यथा— 'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः । सपताकैर्यशो लेभे भासो देवकुलैरिव' इति स्वप्रणीतहर्षचरितस्योपोद्धाते बाणकविना, 'भासो हासः कविकुलगुरुः कालिदासो विलासः' इति प्रसन्नराघवप्ररोचनायां जयदेवेन, 'भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम् । स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः इति' जल्हणसंकलितसूक्तिमुक्तावल्यां राजशेखरेण, 'भासो रामिलसौमिलौ वररुचिः श्रीमाहसाङ्कः कविः' इति शार्ङ्गधरपद्धतिश्लोककदम्बे पुना राजशेखरेण 'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य कृतौ किंकृतो बहुमानः' इति मालविकाग्निमित्रप्रस्तावनायां कालिदासेन च भासकवेर्नाम व्याजह्रे । एवं कतिपयानामेव कवीनामयं भासः परिचित इत्याभाति । केवलमज्ञातचरित्रोऽसौ कविपुंगवो भारतीयवसुंधरायाः कतमं देशविभागमलंचकार? कस्मिन्समये अवर्तत? कान् ग्रन्थान् प्राणैषीत्? कस्य राज्ञ आस्थानीं प्रसाधयामास? इत्यादिवृत्तान्तलेशोऽपि अस्माभिर्नोपलभ्येत, यदि केवलं बुधलोकानुग्रहेच्छाधीनमानसा अनन्तशयनमहीपालास्तस्य कवेः सर्वान् ग्रन्थान् न प्रकाशतां नयेयुः ।

महाराजप्रबलप्रयत्नसमासादिततद्ग्रन्थसमाकलनेन इतरकव्युदाहृततद्ग्रन्थश्लोकसामग्र्या च कवेः किंचिदुदन्तं ज्ञातुं शक्यते ।

१. स्वप्नवासवदत्तम्, २. प्रतिज्ञायौगन्धरायणम्, ३. पञ्चरात्रम्, ४. दारिद्र्यचारुदत्तम्, ५. दूतघटोत्कचम्, ६. अविमारकम्, ७. बालचरितम्, ८. मध्यमव्यायोगः, ९. कर्णभारः, १०. ऊरुभङ्गः, ११ अभिषेकनाटकम्, इति द्वादश ग्रन्था भासकवेरद्योपलब्धाः । सर्वाण्येतानि रूपकाण्येव । एषु द्वादशसु ग्रन्थेषु आद्यद्वितयं वत्सराजकथाप्रतिपादकम् । वत्सराजकथा तु गुणाढ्यकृतबृहत्कथायाम् (इदानीमन्तरिता) तदनुवादके सोमदेवप्रणीतकथासरित्सागरे क्षेमेन्द्रकृतबृहत्कथामञ्जर्यां च विस्तरेण प्रतिपादिता । यथा प्राचीनाङ्गलेयभाषाकवयः केचिदेकस्मिन्समये आर्थर् (Arthur) संबन्धिनीः कथाः काव्यरूपेण गतानुगतिकतया जग्रन्थुः । यथा वा अन्यस्मिन्समये केचित् मतयुद्धवर्णनप्रधानानि काव्यानि प्रणिन्युः । तथा अस्मत्प्राचीनकवयः भासधावकप्रभृतयोऽपि उदयनचरितं काव्यनाटकरूपेण न्यबध्नन् ।

पञ्चरात्रम्, दूतघटोत्कचम्, मध्यमव्यायोगः, ऊरुभङ्गः, इत्येतेषु भारतकथा निबद्धाः । बालचरिते तु बालकृष्णचरित्रम् । दरिद्रचारुदत्ते इदानीमस्मत्परिचितमृच्छकटीगतचारुदत्तकथा प्रतिपादिता ।

एते सर्वे ग्रन्था भासकविकृता एवेति पाठकान् दृढं प्रत्याययितुं तत्र तत्र दृश्यमानं वाक्यैक्यं ग्रन्थसमाप्तिश्लोकैक्यं च प्रमाणी भवति ।

तथा हि— 'एवमार्यमिश्रान्विज्ञापयामि । अये किंनु खलु

मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि' इत्येषानुपूर्वी प्रतिज्ञानाटकदरिद्रचारुदत्ताविमारकप्रतिमानाटककर्णभारानपहाय स-र्वेष्वन्येषु दृश्यते । "इमां सागरपर्यन्तां हिमवद्विन्ध्यमण्डलाम् । महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः' इति भरतवाक्यानुपूर्वी स्वप्ननाटकबालचरितयोः समाना । 'भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु । इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः' इत्यानु-पूर्वी प्रतिज्ञाविमारकाभिषेकनाटकपञ्चरात्रेष्वप्युपलभ्यते । मङ्गल-श्लोके नाटकनायकनामोदाहरणम् 'उदयनवेन्दुसवर्णा वासवदत्ता बका बलस्य त्वाम् । पद्मावतीर्णपूर्णा' विति स्वप्ननाटक इव प्रति-ज्ञापञ्चरात्रप्रतिमानाटकेषूपलभ्यते । 'लिम्पतीव तमोऽङ्गानि वर्ष-तीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्विफलतां गता' इत्ययं श्लोकः चारुदत्तप्रथमाङ्क इव बालचरितप्रथमाङ्केऽपि दृश्यते । 'किं वक्ष्यतीति हृदयं परिशङ्कितं मे' इत्ययं श्लोकपादः स्वप्नवासवदत्त-षष्ठाङ्क इव अभिषेकनाटकचतुर्थाङ्क उपलभ्यते । 'धर्मस्नेहान्तरे न्यस्ता' इत्ययं श्लोकपादः प्रतिज्ञानाटिकाद्वितीयाङ्क इव अभिषेक-नाटकषष्ठाङ्केऽपि दृश्यते । एवंविधाः श्लोकवाक्यसंवादा एतत्कवे-र्नाटकेषु बहुलमुपलभ्यन्ते । ग्रन्थविस्तरभिया तत्सर्वं नात्र लिखितम् । अस्तीतरव्यावर्तकं लक्ष्मैतेषां भासकविकृतनाटकानाम् । प्रतिनाटक-मव्यभिचरितम् 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति नाटकीयरङ्गप्रशासनोक्त्यनुरोधेन (Stage direction) सूत्रधारः प्र-विश्य प्रवेक्ष्यत् पात्रं निपुणं सूचयन्, नाटककथां झटित्यवतारय-ति । बाणकविरेतल्लक्षणं सम्यगुपलक्ष्य 'सूत्रधारकृतारम्भैः' इत्युप-श्लोकितवान् । बहुनाटकप्रणेतृत्वेन प्रसिद्धिं गतः स्वग्रन्थादौ बाणे-

नोदाहृतो भासः स एवायमिति प्रत्यभिज्ञातुं शक्यते । इतः पूर्वं बाणस्यायं श्लोकोऽस्माकं मुद्रित इवासीत् । इदानीमेतन्नाटकाविमर्शनेन तच्छ्लोकार्थो विवृतः। एषु नाटकेष्वन्यः कोऽपि विशेषोऽस्ति—प्रवेशकविष्कम्भकमालयोः सद्भावेऽपि सामान्यतो दशरूपकोक्तलक्षणमर्वाचीनकविकृतनाटकेष्विव साकल्येन न लक्ष्यते । एतत्कविकालस्य नाटकलक्षणमुद्यदुद्यदिवाभूदित्यनेन ज्ञायते । अयमंश एतद्ग्रन्थकर्तुः प्राचीनतमत्वमवगमयति ।

---

# शंकराभ्युदयः ॥



त्वत्पदाब्जभजने विलम्बना-
दम्बुराशिमपराधिनं विधिः ।
सेतुदण्डमुदरे निपातयन्
साधु पीडयति सारवं मुहुः ॥ ३० ॥

चन्दनाचलतटीगुहागृहा-
ञ्चर्वितुं चलसुवेलदर्दुरम् ।
चञ्चतः फणधरस्य चातुरी-
मञ्चतीश तव सेतुरम्बुधौ ॥ ३१ ॥

सेतुरेष तव भोगिराट्पुरी-
साल एव जलधौ समुच्छ्रितः ।
अन्यथा न पुनरस्य सर्वथा
संघटेत कपिशीर्षसंगतिः ॥ ३२ ॥

फेनपङ्क्तिसिचयाञ्चितो यशः-
केतुरीश तव सेतुरेष ते ।
चारुपुष्करविसारिशीकर-
श्चन्दनाद्रिकरिणः करोऽथवा ॥ ३३ ॥

चन्दनाचलमहेभपादभू-
संहिता सपदि सेतुश्रृङ्खला ।
किं त्रिकूटगिरिकूटदन्तिनो
बन्धनाय भवता प्रसारिता ॥ ३४ ॥

स्वीयपार्श्वचलफेनपक्षतिः
सेतुबन्धतुहिनाचलात्मजः ।
त्वत्कटाक्षलवलाभलोभत-
स्तोयधेरुदयमाससाद किम्

योजनाः कति विलङ्घिताः पुरा
योगिना हनुमतेति वेदितुम् ।
मर्कटैस्तव भटैर्निपातितो
मानदण्ड इव सेतुरेधते ॥ ३६ ॥

वीर तावकशरेण पाटितो
वेधसा सुघटितो महापटः ।
दन्तुरा यदिह दृश्यतेऽन्तरे
कापि सेतुकपटेन रेखिका ॥ ३७ ॥

सागरः सगरवंशभूमिभृ-
त्कीर्तिजैत्रपटहः किल प्रभो ।
मौखरीबधिरदिङ्मुखो भव-
त्सेतुकोण घटनेन जायते ॥ ३८ ॥

त्वत्कसेतुमणियष्टिकाधर-
स्तत्तथोमिति च गर्जितैर्गृणन् ।
सागरः सगरमेदिनीविभोः
किं नु नर्तयति कीर्तिनर्तकीम् ॥ ३९ ॥

आशरानहह वीक्ष्य यान्पुरा
याः किलेन्द्रसुदृशो ययुर्भयम् ।
ताभिरेव समिति स्वयंवृतां-
स्तन्तनीति सपदि स्म तान् भवान् ॥ ४० ॥

अस्तरावणमदार्जुनद्रुहं
भार्गवं च भगवन्निरस्यतः ।
कीर्तये न तव रक्षसां जयं
किं हरिः शशवधेन शस्यते ॥ ४१ ॥

इत्थं ककुत्स्थनृपतिस्थपतेर्यशांसि
संकीर्तयन्नघहराणि स संयमीन्द्रः ।
सिन्धौ निमज्य सहपर्वतवर्धनीकं
श्रीरामनाथमभिवन्द्य ततस्तमस्तौत् ॥ ४२ ॥

उद्दण्डैर्दशकण्ठबाहुपरिघैरुत्क्षिप्यमाणो हठात्
कैलासो निजवामभागसभयोत्कम्पाधिकोद्यत्क्रुधा ।
येनाङ्गुष्ठनिपीडनत्रुटितदोर्मेदोवसालेपनात्
सद्यः संघटितोऽजनिष्ट स भवान्निःश्रेयसायास्तु नः ॥

मरकतमणिमांसलांशुजालः
क्वचिदितरत्र भवान् प्रवालशोभः ।
युगपदुदितशर्वरीदिनश्रीः
शिव कुरुतेऽर्थ इति श्रुतिं यथार्थाम् ॥ ४४ ॥

इति विहितनुतिर्गिरीशचूडा-
शशिकिरणापसरत्तमःप्ररोहः ।
त्रिचतुरदिवसान्वसन्निहासौ
मुनिपतिरुत्तरादिङ्मुखः प्रतस्थे ॥ ४५ ॥

इति षष्ठः सर्गः ॥

---

# आर्यभाषाचरितम् ॥

---

( पूर्वतोऽनुवृत्तम् )

| | |
|---|---|
| संस्कृतं | ऊर्णा |
| लेटिन् | लाना |
| लिथूनियन् | विल्ना |

| | |
|---|---|
| सेग्जन् | ल्लुना |
| गोथिक् | उल्ला |

एतादृश शब्दपर्यालोचनया हिन्दूशार्मण्यजनाः चरित्रसमय-प्रारम्भादूर्णया वस्त्रनिर्माणे प्रवीणा इति ज्ञातुं शक्नुमः ।

तत्काले तैर्धृतो वेषः कीदृश इति इतः परं विचारयिष्यामः । तस्य वेषस्याकृतिविशेषं सम्यग्विचार्य निरूपयामः ।

एतेषु पुरातनीमावासभूमिं परित्यज्य पृथग्देशानाश्रयत्सु, तत्तद्देशशीतोष्णस्थित्यनुसारेण स्ववेषान् विपरिवर्तयितुं तदनुगुणवेषाभिधायकशब्दानितरेभ्यः स्वीकर्तुं महानवकाशोऽजनि ॥

सर्वेषां घूटानिक् जातिजानां कण्टकेन संहितमेकं राङ्कवखण्डं साधारणमाच्छादनमभूत् । स्त्रीभिरप्येतदेव धृतमिति चरित्रकारवचनात् ज्ञायते । शिरस्त्राणादिकमितःपूर्वमेवोक्तम् ।

प्राचीनकाले शरीरशोभावहानि नानाविधाभरणानि जनैर्धृतानीति भाषाशब्देभ्य एव ज्ञायते । यथा—

| | | | |
|---|---|---|---|
| संस्कृतं | मणि | मान्य | ग्रीव |
| च्छन्द | मिनु | | |
| लेटिन् | मोनैल् | | |
| जर्मन् | मन | | |
| सेग्जन् | मोनिस् | टो | ग्रीवीन. |

## अथ वाणिज्यम् ।

अनादिकालादारभ्य सर्वे मनुष्याः सर्वेषु देशेषु स्वाभिवाञ्छितसंपिपादयिषया व्याप्रियमाणाः स्वकीयपरकीयद्रव्याणां परस्पर-

विनिमयेन स्वार्थं साधयन्तीत्येतत् सर्वैः संभावनीयमेव । यथा लवणार्थी कश्चित्कुविन्दः स्वपटान् लवणविक्रेत्रे दत्वा तत्सकाशाल्लवणमादत्ते । यदा कालक्रमेण प्रजासु क्रयविक्रयात्मको व्यवहारः चलितुं प्रवृत्तः यदा निर्धारितप्रमाणमूल्यैर्निष्कैः (Standard of value) पणितुं मनुष्या जानन्ति तदाऽसौ वस्तुविनिमयविधिः (Barter) दूरापास्तो भवेत् । पूर्वोक्तविनिमयरूपव्यवहारे क्रेता विक्रेतापि भवति । तथा विपरिवृत्तिश्च हिन्दूयूरपियन् भाषासु विद्यमानानि वाणिज्यपरिभाषापदानि अद्यापि प्राक्कालिकस्थितिमवगमयन्तीति न चित्रीयेमहि ।

एतद्वस्तुपरिवृत्तिशब्दाभिप्रायः सर्वासु हिन्दूशार्मण्यभाषासु 'मे' धातुनाऽभिधीयते । स एव संस्कृतभाषायाम् 'मी' इति रूपं प्रपन्नः ( मायते । मित्सते– लेटिन्– म्यूनस्– (प्रतिदानम्)

लिथूनियन्– मेयिनास्– मेना.

विनिमयेनोपात्तं वस्तु आद्यभाषायां 'वेस्नो' शब्देनोच्यते । तस्यैव रूपान्तराणीतरभाषासु । यथा ।

| | | |
|---|---|---|
| संस्कृतं | वस्ना | |
| लेटिन् | वेनम् | |
| सेग्जन् | वीनो | (मूल्यम्) |
| आर्मीनियन् | जिन् | |

क्रयार्थकाद्वस्नशब्दादुत्पन्ना वेनेरि— वेनम्डेरि, वेनिटि, इत्यादि धातवः क्रयविक्रयार्थयोः समाः । यथा — संस्कृतम्–क्रीणामि–क्रीनस्–क्रीणानोडा- (मूल्यधनम्) चिरं क्रेतृविक्रेतृशब्द-

योरर्थभेदो ट्यूटानिक् जातिमनुष्यैर्न कृत इति तद्भाषागतशब्दैरेव ज्ञायते । यथा कौपान्– कौसाचौफान्– एते शब्दाः क्रयविक्रयार्थयोः तुल्यं प्रयुक्ताः ।

दानप्रतिग्रहार्थकशब्दोत्पन्नैः पदैरेषा विनिमयपरिभाषा वृद्धिं गमिता । यथा ।

| | | |
|---|---|---|
| संस्कृत | परादा | ( विनियमः ) |
| लिथूनियन् | पार्डुटि | ( विक्रयः ) |
| सेग्जन् | प्रोडटि | ( विक्रयः ) |
| लेटिन् | इमो | ( क्रयः ) |
| गोथिक् | निमा | ( आददाति ) |
| लिथूनियन् | इमु | |
| सेग्जन् | इमा | |

एवं वस्तुविनिमयव्यवहारे कालक्रमेण प्रवर्तमाने नानादेशेषु वाणिज्ये यद्द्रव्यं प्राधान्येन सर्वैरुपादीयते तदेवेतरेषां पण्यानांप्रमाणमूल्यं क्रियते । पूर्वस्मिन्काले हिन्दूयूरपियन्जातीनां गौरेव विशेषतो मूल्यप्रमाणत्वेन कल्पितेति तदानीन्तनचरित्रं वर्णयति । अजाविगोबृन्दानां क्षीरदध्यादिना देहयात्रां कुर्वत्सु पशुपालनजीविषु सर्वेषु मनुष्येष्वयमेव पन्थाः पुराऽवलम्बितः । आशतं दशमांशगणनायां पूर्वेनानभ्यन्तराः । सहस्रसङ्ख्यायाः पर्यायशब्दाः सर्वासु भाषाशाखासूपलभ्यते । यथा ।

| | |
|---|---|
| संस्कृत | सहस्र |
| छन्दः | हजन्रा |
| गोथिक् | पुसुंडी |

| | |
|---|---|
| सेग्जन् | टिसस्ट् |
| लिथूनियन् | टक्स्टोंटिस् |
| लेटिन् | मिलि. |

मानपरिमाणवाचका अपि हिन्दूशार्मण्यभाषासु दृश्यन्ते ।

| | | |
|---|---|---|
| संस्कृतं | मामि | मिमे |
| लेटिन् | मीटियार् | मोटियस् |
| लिथूनियन् | मैरा | |
| सेग्जन् | मेढा | |
| गोथिक् | मिटान्. | |

पूर्वकालीनमनुष्यः प्रकृतिसिद्धमरत्निभुजाङ्गुल्यादिकं प्रथमं मानसाधनत्वेनोपयुक्तवानिति द्योत्यते । एता हिन्दूयूरपियन् प्रजाः प्रथमं सजातीयैः सह वाणिज्यमारभ्य ततो विदेशीयैरपि समं वणिक्क्रियासंबन्धं दधुः । यतः प्राक्कालिको मनुष्यः सजातीयानेवात्मना तुल्याधिकारिणः तुल्यस्वाम्यमनुभवत अमन्यत । तत्काले शत्रुवैदेशिकयोर्भेद एव नोपलक्षितः । वैदेशिकः शत्रुत्वेनाभिप्रेतः । विदेशीयं व्यापाद्य देवताभ्यो निवेदनं वा तस्य दासीकरणं वा धर्म्यं कर्म मेने । एतत्प्राचीनधर्मानुष्ठानं हिन्दूशार्मण्यभाषास्वद्यापि स्पष्टं प्रत्यभिज्ञायते । सजातीय एव सुहृदित्याभिमतः । शार्मण्यभाषायां मित्रपर्यायो 'विनि' इति शब्दो जातिवाचिना 'पैन्' शब्देन संबद्धः । लेटिन् – सिविस् नामैकनगरस्थितः । स्यूटनिक्भाषायाम् सिविस्, हास्, टिस्कुशब्दः शत्रुं मित्रं च वक्ति । हैवाफ्राजा इति गोथिक्शब्दो गृहस्वामिवाची । मङ्गलवाचकःशिवशब्दोऽपि तत्संबद्ध एव । एतत्सर्वशब्दानां जातिरेव प्रधानार्थः ॥

एवमेवापरे केचिदतिथिवाचकाः शब्दा विद्यन्ते । तेष्वादौ शत्रुवाचिन एव । यथा— अधुनाऽतिथिपर्यायः पूर्वं शत्रुवाचकी ग्रीक् शब्दः कश्चित् क्षण् धातोरुत्पन्नः सेग्जन् गोस्टी शब्दः गोथिक् गास्टिस् शब्दश्च शत्रुवाचिना लेटिन् होस्टिस् शब्देन संबद्धाः । विदेशीयं हत्वा पाप्मना न स्पृश्यते । राज्ञा न दण्ड्यते च । तस्माद्विदेशीयः सर्वदा अनाथोऽशरणो निःसहायो रिपुरिति संभावितः । न केनाप्यनुकम्पनीयः । अयं दुराचारः सर्वजातिषु क्रैस्तवमतव्याप्त्यनन्तरं दूरीकृतः । विदेशीयेषु बद्धद्वेषा अपि हिन्दूयूरपियन्प्रजाः पूर्वकाले इतरमनुष्यजातिभिः साकं वणिग्व्यापारं प्रवर्तयामासुः दारुताम्रमध्वादीनां विदेशीयवस्तूनां संपादकाश्च बभूवुरिति शब्दप्रामाण्यादवगम्यते ।

सन्दर्भेऽस्मिन् अन्यच्च किंचिद्वक्तव्यमस्ति । पूर्वोक्तवस्तुविनिमयरूपव्यवहारस्य तूष्णीं विनिमयो (Dumb barter) हट्ट (fair) प्रारम्भ इति द्वे रीती स्तः । तयोः प्रथमया कश्चिद्वाणिक् कचिन्निर्दिष्टस्थले स्वपण्यं निधाय निष्क्रामति । अत्रान्तरेऽपरो विक्रेता आगत्य तत्समानमूल्यमपरं वस्तुसंचयं तत्पार्श्वे विनिवेश्य मूकवत्सहसा निष्क्रामेत् ।

अथ प्रथमो द्वितीयेन निहितं वस्तुपूगं यदि गृह्णीयात्तर्हि तद्व्यवहार एव पर्यवसितो भवेत् नो चेद्द्वितीयः प्रथमनिहितपण्यं ततोऽधिकतरेण संयोजयितुमर्हति । हट्टास्तु इतो विशिष्टाः। द्वौ वर्गौ कस्मिंश्चित्संकेतितस्थले परित्यक्तसर्वायुधतया परस्परं मिलितुमङ्गीकुर्याताम् । ततः सर्वे वाणिजः स्वल्पकालं युद्धाद्विरताः तत्रागच्छेयुः ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष आषाढमासः । [संचि. ४.

## सुभाषितानि ॥



वारांनिधे दुरवगाहतरान्तरङ्गै-
स्तीरस्थितान् किमिति भीषयसे तरङ्गैः ।
नीरं परं तव निरन्तरलोढनेन
पूरे परम्परितमेव हि वस्तुरूपम् ॥ १ ॥

क्षीराम्बुधेर्हरिगृहस्य कथाऽस्तु काऽपि
क्षीराम्भसो जलनिधे! मकरालयस्य ।
किं तेन ते यदि विजृम्भणमङ्गभङ्ग-
भङ्गीतरङ्गितमिदं मरुतः प्रसादः ॥ २ ॥

अम्भोधे! ननु जृम्भणं तव वृधा दम्भाय संभावया-
म्यन्तर्भीषणबाडबानलबृहज्ज्वालोष्मसन्तापितः ।
उच्छुष्यद्रसनानिभोर्मिनिवहैरुच्चैरुदन्यद्भवान्
आपूर्णोऽपि नदीनदाम्बुदजलैः श्लाघ्यो नदीनः कथम् ॥

के. साम्बशिवशास्त्री ।

॥ श्रीः ॥

# ॥ नचिकेतोपाख्यानम् ॥

पुरा कदाचिदस्मिन्वर्षे वाजश्रवसो नाम महर्षिरासीत् । स हि सर्वस्वदक्षिणाकं कंचनोत्तमं यज्ञमन्वतिष्ठत् । ब्रह्मनिष्ठेभ्यो दक्षिणाश्च भूरिशोऽदात् । तस्य यजमानस्य नचिकेताह्वयः एक एव पुत्रः धर्मशीलः श्रद्धासमन्वितः दक्षिणात्वेन दातव्येषु द्रव्येष्वात्मनोऽप्यन्तर्भावं सर्वस्वदक्षिणाकेऽस्मिन्कर्मणि समुचितमिति मन्वानः समयं प्रतीक्षमाण अवर्तत । अवसिते च दक्षिणादानप्रकरणे नचिकेताः पितरमुपसृत्य 'तात, कस्मै मां दास्यसि?' इत्यपृच्छत् । महर्षिस्तु कार्यान्तरव्यग्रः न किमप्युत्तरमदात् । पुत्रस्तु 'विस्मृतोऽहमनेन दक्षिणाद्रव्यपरिगणने' इति मनस्याकलय्य 'कस्मै दक्षिणात्वेनाहं परिक्लृप्तः' इति मुहुर्मुहुः सनिर्बन्धमप्राक्षीत् । जनकश्च रुषा परीतः 'कोऽयमद्यतनस्ते दुर्विनयप्ररोहः, मृत्यवे त्वा ददामि' इत्यवोचत् । परन्त्वसौ अनुक्षणमेवानुशयेन समाविष्टहृदयः सुचिरं विचिन्त्य 'यन्मयोक्तं न तन्मृषा भविष्यति; अतस्त्वया अवश्यमेव मृत्योर्गृहं गन्तव्यम्; यदा हि मृत्युर्गृहादन्यत्र प्रवसितस्तदैव तत्र गत्वा तिस्रो रात्रीस्तद्गृह एवानश्नन्वर्तस्व; आगते च यमे 'तस्य प्रश्नानामेवं प्रतिवक्तव्यम्' इत्युपदिश्य पुत्रं विससर्ज ।

सोऽपि पितुरादेशानुरोधेन मृत्योर्नगरीं जगाहे । तत्र मृत्योः प्रवासं विज्ञाय तन्निकेतनमभ्येत्य त्रिरात्रमुपोषितः तदागमनं प्रत्यै-

क्षत। मृत्युरपि दिनत्रयावसाने स्वीयमुदवसितमभ्ययासीत्। अद्राक्षीच्च बहिर्वेदिकायामासीनं मुनिकुमारकम् । ततः गृहागतं श्रोत्रियस्फुलिङ्गं तमतिथिं सगौरवमाहूय 'कुमार, कति रात्रीरिहावात्सीः' इत्यप्राक्षीत् । सोऽपि 'अत्रागतस्य मे तिस्रो रात्रय अतीताः' इति प्रत्यब्रवीत्। मृत्युना च 'अहो! महदिदमत्याहितम्। ब्रह्मन् किं त्वयेहाशितं प्रथमायां रजन्याम्' इति पृष्टः 'प्रजां ते' इति, किं द्वितीयायाम् इत्यनुयुक्तः 'पशूंस्ते' इति, 'किं तृतीयायाम्' इत्यनुनाथितः 'साधु कृत्यां ते' इति च प्रत्यवादीत् ॥

मृत्युस्तदवगत्य धर्मलोपाद्भीतः श्रोत्रियोत्तमस्यास्यातिथेः सौमनस्यसंपादनमेवोचितं प्रायश्चित्तमिति निर्णीय, 'भगवन्, महानयं व्युत्क्रम आतिथ्यस्य; तद्वरदानेनात्मानं दोषान्मोचयितुमभिलषामि; अतो वरं वृणीष्व' इत्यवदत् ॥

नचिकेताश्च 'पितरमेव यथा जीवन्नयानि तथानुगृह्यताम्' इत्यवोचत् । मृत्युश्च 'तथास्तु, द्वितीयमेकं वरं वृणीष्व' इत्यभाणीत् । 'इष्टापूर्तयोर्मेऽक्षितिं ब्रूहि' इति कुमारेण प्रार्थितः 'अस्त्वेवम्, तृतीयमपि वरं दित्सामि' इति मृत्युर्व्याहार्षीत् । तर्हि अपमृत्योरात्मानं रक्षितुमिच्छामि; ये च मदीयमिदमुपाख्यानं स्मरन्ति तेषामप्यपमृत्युभयं न भवेत्' इति नचिकेताः सप्रश्रयं प्रार्थयामास । तथेति मृत्युना व्याहृते, मुनिबालको नितरां प्रीतमना न्यवर्तिष्ट । स हि प्राप्य पुरुषायुषं इष्टापूर्तैश्च सश्रद्धमनुष्ठितैर्दिव्यान् लोकानभिजगाम— इति कठशाखिनः समामनन्ति ॥

——❀——

॥ श्रीः ॥

# अलिविलासिसल्लापाभिनन्दनलेखः ॥



स्वस्ति श्रीमन्महामहोपाध्यायपदलाञ्छितानां पण्डितवरप्रवराणां गङ्गाधरशास्त्रिणां चरणकमलेषु समुल्लसन्तितरां नागपुरनगरादसीसखानस्य परःसहस्राः प्रणतिततयः ॥

विदां कुर्वन्तु तत्र भवन्तो यत् परमप्रम्णोपायनीकृतं भवत्कृतमलिविलाससल्लापाभिधं खण्डकाव्यमवालोकि मयाऽतिकुतूहलाविष्टेन मनसा। समन्वभावि चानन्दविशेषस्य परमा सीमा। काव्येऽमुष्मिन्लौकिकालौकिकविषयाणां बहुतराणामतिमनोहरगिरा निरूपणं कृतं वर्तते। पदे पदे स्फुरति कवेः काव्यरचनाचातुरी। आविर्भवति चातीव षड्दर्शनीपारावारपारदृश्यत्वम्। काव्यस्यास्य षष्ठे शतके रूपकालंकारमाश्रित्य चतुःश्लोक्या कृतं वाजपेयागप्रशस्तिवर्णनं कस्य वा सहृदयहृदयस्य हृदयंगमं न भवेत्। न जनयेद्वा प्रशंसावादपूर्वकं शिरसः कम्पम्। अत्रैव यमकादिशब्दालंकारमवलम्ब्य यागानुष्ठानं वर्णयद्भिर्भवद्भिरहो प्रदर्शितं चित्रकाव्यनिर्माणेऽसधारणं सामर्थ्यम्। अपरं च केवलं वैदिकं कर्मात्यन्तिकसुखसाधनमिति मन्यमानस्य मीमांसकप्रतिरूपिणो विलासिनोऽलिना कृतं तन्मतखण्डनकं समाधानं न च नाविष्करोत्यदूष्यं वैदुष्यं श्रीमताम्। नवमेऽपि वेदान्तराद्धान्ता अतिकुशलतया दर्शिताः। दर्शितं चालिविलासिहंसानां तत्पदत्वंपदासिपदपर्यायत्वम्। अपि चाविद्यावद्विषयेषु लौकि-

कवैदिकव्यवहारेषु परस्परं विवदमाना दुःखसंभिन्नं सुखमेव बहुमन्यमाना इतस्ततो भ्रमन्तोऽनिश्चितधियो जीवाः सन्मार्गदर्शकं सद्देशिकं प्राप्य तदुपदेशवशात्कथं संसारस्यैकरूपतामवयन्ति, कथं चाध्यवसायात्मिकां बुद्धिमुपगम्य विवादाद्विरमन्ति, प्रविशन्ति चान्ते पुनरावृत्तिरहितं शाश्वतं पदमित्यपि साधु प्रपञ्चितमलिविलासिसल्लापव्याजेन । किं बहुना काव्यमेतन्न केवलं काव्यरसास्वादव्यासङ्गिनामपि तु चार्वाकिमतमतान्तरेषु तथा व्यावहारिकेषु विषयेषु परिचयमल्पपरिश्रमेण परिलिप्सूनां नितान्तमुपकुर्यादिति मतिर्भवदीयशिष्यकोटिप्रविष्टस्य—

असीसखानस्य ।

---

# वेदः ॥

( पूर्वतोऽनुवृत्तम् )

---

अनेकेषां वैदिकग्रन्थानां विरचनानन्तरं तेषामियत्तया परिगणनमावश्यकमभूत् । परिगणितानामेव च धर्मे प्रमाणभावः । अपरिगणने हि ग्रन्थबाहुल्यादयं वा धर्मप्रमाणभूत अयं वेति महान्विशयो जायेत । परिगणनानन्तरकालिकग्रन्थानां तु स्मृतिपुराणादिसंज्ञाश्च कृताः । पूर्वग्रन्थानां तु वेदत्वम् । अत एव कल्पसूत्राधिकरणे शिष्टाकोपाधिकरणद्वितीयवर्णके च षडंगानां कल्पसूत्राणां स्मृतीनाञ्च वेदत्वं वेदतुल्यत्वं वास्तु— इति पूर्वपक्षीकृत्य इमे एव वेदा इति व्यवस्थितत्वात्परिगणितभिन्नानां न वेदत्वमिति सिद्धान्तितम् ।

अनेनैतज्ज्ञायते योऽयं पूर्वपक्षः कल्पसूत्राधिकरणादिषु स चरित्रविज्ञानमूलक एवेति । ततश्चारण्यकादयोऽपि वेदत्वेन व्यपदिश्यमानतया पूर्वोक्तव्यवस्थायाः पूर्वमेव वेदकोटिं प्रवेशिता इति च कल्पसूत्राधिकरणमुख्यहेतोः दृढकर्तृस्मरणस्य चाभावेन कल्पसूत्रादिकालात् बहोः कालात्पूर्वमेव निर्मिता स्युः ॥

किञ्च कल्पसूत्रादिकाल एवारण्यकादीनां कालः । अत एव तदधिकरणपूर्वपक्षस्याप्युत्थितिरिति बालिशभाषितमेतत् । यत इयमपौरुषेयत्वानादित्वादिव्यवस्था दृढकर्तृस्मरणाभावे यावन्मनुष्यबुद्धिप्रचारं कालस्य अज्ञाने च प्रायेण मन्दमतिषु जनेषु सप्रत्ययेषु चामुष्मिकादिविषये परिकल्पितेत्युत्पश्यामः । तथा हि— प्रथमतः ऋङ्मन्त्राणामुत्पत्तिः । अनन्तरं यजुर्वेदकालात्किञ्चित्पूर्वमेव ब्राह्मणादिवर्णा व्यवस्थिताः । यतो यजुःसंहितायामेव वर्णविशेषनिर्देशेन धर्मविशेषा उपदिश्यंते । अनन्तरमेव मतपरिष्कारे प्रवृत्तवन्तः । तदा च सर्वानपि पुरुषानेकस्मिन्नेव मार्गे प्रवर्तयितुमशक्यमभूत् । विनैकेन प्रत्ययिततमेन प्रमाणरत्नेन ग्रन्थजातेन, तस्य चानित्यत्वे, पौरुषेयत्वे च न तादृशः प्रत्ययो जायेत । यादृश अपौरुषेयत्वे अनादित्वे च । दृढकर्तृस्मरणञ्च यदि स्यात्तदा परिकल्पितमपौरुषेयत्वं प्रत्युद्धृतमेव भवेत् । ततश्च यदामीषां ग्रन्थानां पौरुषेयत्वसन्देहः तदैवापौरुषेयत्वेन व्यवस्थापिताः । इयमेव तात्विकमभिप्रायमभिसन्दधानाः अस्मत्प्राचीनाः एवं प्रत्युदाहरणं वर्णयन्ति । अन्यथा अप्रामाण्यापत्तेरिति । अतश्च ते सामान्यजनमुद्दिश्य वस्तुत अपह्नवायैव प्रवृत्ताः स्युः । अत एवोहग्रन्थस्यापौरुषेयत्वं प्रसक्तमपि बाधकान्तरपर्यालोचनया युक्त्यन्तरेण पौरुषेयत्वमेवांग्यकुर्वन्मीमांसकाः । ईदृशी

च व्यवस्था नास्माकमनभिमता । बाधकाभावात् । यो ह्येवं तत्त्वं जिज्ञासते स नियतं विषयसौन्दर्यज्ञानेन न परिजहात्येव वैदिकेषु कर्मसु प्रवृत्तिम् । यो हि न जानाति स नियतं प्रवर्ततैवेति न विचारविषयः । अन्यथा अनिरूपका न प्रवर्तेरन् । यथा च तेषां प्रवृत्तिः स्यात्तथा यतितव्यमस्माभिः तच्च पौरुषेयत्वे न सिध्यतीति अपौरुषेयत्वमङ्गीकार्यम् । यथा इष्टसिध्यनुकूलस्य योगविभागस्य सिध्यर्थं संहितापाठः पाणिनीयसूत्राणामभ्युपगतः । अतश्चेदृशी व्यवस्था इष्टसिद्धिप्रयोजकीभूता आपाततस्तत्त्ववदवभासमाना वस्तुतः आपद्वरूपा च भवति । अतश्च न वैदिकाभ्युपगतापौरुषेयत्वानादित्वादिवादानां विरोधलेशावकाशः ॥

## (उपनिषदः ।)

एवं ब्राह्मणकाले वर्णविभागेषु व्यवस्थितेषु कर्मश्रद्धायां प्रवृद्धायां कर्मयोगाद्विना न कोप्युत्तारक इति चायाते कर्मयोगे चाशक्ता बहवः सामान्यजनाः समतप्यन्त । तदनुजिघृक्षया च कैश्चिद्दयालुभिः बौद्धं मतमिति किञ्चिन्निरमायि । कार्यप्रवृत्तिनिरोधनार्थत्वात्तस्य सर्वथा वैदिकमतविरुद्धत्वं सर्वात्मना सर्वसाधारण्यं लाघवञ्चोत्सृज्य न साध्यायालमिति असन्मतविपरीतं लाघवाद्युपपत्तिमच्च निरूपितम् । अनन्तरञ्च वैदिकेष्वेव केषांचित्तत्र प्रवृत्तिमुपलक्ष्य कर्मसु ज्ञानयोगे च तेषां प्रवर्तनमुद्दिश्य वर्णधर्मव्यवस्थामनुरुध्य च उपनिषद्भागांश्च कांश्चिदकुर्वन्महाभागाः प्राचीना इति केचिन्मन्यन्ते ॥

अन्ये त्वेवमभिप्रयन्ति बुद्धसमयानन्तरमेवोपनिषत्प्रचारः कथं वक्तुं शक्येत, एतदनन्तरमेव ज्ञानस्य, उपनिषदि त्रैवर्णिक-

मात्रसाधाख्यस्य स्थापितत्वात्तैः, सर्वसाधारण्यार्थं अन्येन लाघवापेक्षिणा किमिति बौद्धं मतं नोत्पादितं स्यात् । तस्मात् बुद्धमतप्रचारात्पूर्वमेवोपनिषत्प्रचारः । पुरुषश्चयोयः परिष्कारः तदा तदा क्रियते स स नियतं प्राक्तनेषु क्लेशमनुभूयैव क्रियमाणो दृश्यते । कर्ममात्राभिनिवेशप्रवृद्धौ तल्लघूकरणार्थं ज्ञानमार्गस्योपदेशायोपनिषदुत्पादनम् । तत्र सर्वधारण्याभावरूपं क्लेशमनुभूय बुद्धमतप्रचारः । यथास्माभिः कस्याश्चिद्व्यवस्थायाः सिद्धिमनुरुध्यानादित्वाद्यंगीकृतन्तथा सर्वसाधारण्यार्थं ज्ञानस्य तदानन्त्यार्थश्च बुद्धमतस्याप्युत्पादानमिति अङ्गीकरणेन न कांचिदनुपपत्तिं पश्यामः ॥

## (शाखाभेदः ।)

एवंभूतो वेदः प्रतिवेदमनन्तशाखाप्रचुरो वर्तते । समामनन्ति च एकशतं यजुर्वेदे । सहस्रं सामवेदे इति । उनलभ्यन्ते च काश्चिच्छाखाः काण्वं कौथूमं कालापं तैत्तरीयमित्यादयः ॥

तत्र वेदभागेषु क्रमशः प्रवृद्धेषु अध्ययनप्रवचनादिषु च तत्र तत्र प्रचलत्सु शाखाभेदः कल्पितः स्यात् । तथा हि श्रूयते हि कथा वैशंपायनस्य । याज्ञवल्क्यवान्तं भुक्तवता तित्तिरिणोच्यमानं तैत्तिरीयमिति । तस्यैव भागस्य कृष्णयजुःसंहितेत्यपि संज्ञा । व्युत्क्रमेणोक्तत्वाच्च तस्य कृष्णत्वम् । अनन्तरञ्च सूर्यदेवतोपासनेन शुद्धां यजुःसंहितां संपादितवान् । तस्य च शुक्लयजुःसंहितेत्यपि संज्ञा । शुद्धत्वादेव च तस्य शुक्लत्वम् । अनयोश्चाध्ययनं तत्तच्छाखीयैरेव क्रियते । नियमेन एकशाखाध्येतृत्वाच्च तेषामिमे तैत्तरीया इमे वाजसनेयिन इति संज्ञा ॥

अत्रेदं विचारणीयम्— किन्निबन्धनोयं नियमेन एकशाखाध्ययनसंप्रदाय इति । कदाचित् केचित्पद्यरूपान्ग्रन्थानकुर्वन् । कदाचिद्गद्यरूपान् । उभयरूपांश्च कदाचित् । कृतांश्च ग्रन्थान् स्वस्वशिष्यानपाठयन् । एवं क्रमेणाध्यापने प्रवृत्ते ग्रन्थेषु च बहुषु प्रवृद्धेषु विनयनावश्यकेषु च ग्रन्थेषु कृतेषु शिथिलितग्रन्थकरणश्रद्धाः सर्वेपि स्थितपरिपालनमेवालमित्यमन्यन्त कदाचित् । तत आरभ्य यस्य यो ग्रन्थोभिमतः तस्यैवाध्ययनं तच्छिष्यैः क्रियमाणमभूत् । व्यतीत्य च किञ्चित्कालं यदा वर्णधर्मव्यवस्थापनेतीव श्रद्धाजायत तदा केचिदाचार्याः कञ्चन ग्रन्थे केचिच्चान्यमुपादाय तत्तदुक्तप्रकारेण स्वस्वशिष्यानशिक्षयन् । अनन्तरञ्च विश्वासदृढीकरणार्थं कर्तुरस्मरणे कालस्य च यावद्बुद्धिप्रचारमज्ञाने चापौरुषेयत्वाद्यङ्गीकृतम् । एवं संप्रदायभेदमनुसृत्य प्रवचनभेदमनुसृत्य च शाखाभेदो नियमित इत्यूह्यते ॥

किञ्च शुक्लकृष्णयजुषोः यद्यपि स्वरूपादिभेदो नास्ति तथापि अध्ययनक्रमसंप्रदायादिभेदादेव शाखाभेदः । वैशंपायनकथा च तत्रोपवर्ण्यते क्रमिकतया पठितमन्त्राणां व्युत्क्रमेण पाठः कृष्णयजुर्वेद इति ॥

अपि चायं भेदः अंशतः स्पर्धामूलकतया अंशतः पुरुषस्वातन्त्र्यज्ञापनार्थतया वा स्यात् । स्पर्धतया वा स्वातन्त्र्यप्रकटनाय वा याज्ञवल्क्येन सूर्योपासनेन शुक्लयजुषः संपादनं श्रूयते । अनेनैतदूह्यं भवति याज्ञवल्क्यः स्पर्धयान्यामेव शाखां कृतवानिति । सूर्योपासनेन सूर्यः प्रकृतिः (Nature) तदुपासनेन पदार्थस्वरूपविचिन्तनेनेत्युपपद्यते । स्वातन्त्र्येण रचयितृत्वञ्च तस्य बृहदारण्यकादौ दृष्टम् ॥

अथवानयोर्भेदः पूर्वोक्तेतिहासमूलक एव स्यात् । प्रथमतः साधारण्यज्ञानेऽपि प्रवक्तृभेदेनाध्येतॄणां नियतत्वेन भिन्नतया किञ्चित्कालानन्तरं साधारण्यज्ञानाभावदशायाञ्च नियतत्वेनाध्ययनं नियमेन तत्तच्छाखीयैः तत्तदुक्तकर्मानुष्ठानादिकञ्च दृढीकृतं स्यात् । तस्मिन्नेव च काले स्वाध्यायोऽध्येतव्य इत्यत्र स्वपदप्रयोजनविचारकौतूहलं ततश्च एकशाखाध्ययननियमपरिकल्पनमित्यादि ॥



॥ श्रीः ॥

# ॥ महाकवयश्च बिरुदानि च ॥



दुर्लभः किल तादृशो जगति पुरुषोत्तमः, यः ख्यातिलाभपूजासु त्रिभिरपि करणैर्विमुखो भवति । इदं खलु प्रायेण परिदृश्यतेऽस्मिन्प्रपञ्चे, यदुत सर्वोऽपि सचेतनः स्वकीययोग्यतानुसारेण अतथापि वा नियतमात्मानमतिप्रसिद्धमभिलष्यति, प्रयस्यति च भूयसा स्वकीयैरेव कर्मभिरात्मना तथा भवितुम् । सर्वथाप्यनुरूपमेवेदं प्रतिदिनं प्ररोहतः प्रपञ्चजातस्य ॥

प्रसिद्धिश्च भवत्येकत्र धैर्येण, अन्यत्र शौर्येण, अपरत्र औदार्येण कुहचन दानेन, कुत्रचिन्मानेन क्वापि काव्येन ॥

आस्तां नाम सांप्रतमपरेषामियमप्रस्तुता वार्ता । ये पुनः काव्येन नूनममरधर्माणः, तानेव वयमवसरेऽस्मिन्नधिकुर्मः ॥

यथा वा संप्रत्यपि केचन वाङ्मयैकजीविनः 'बालसरस्वती, तर्कवाचस्पतिः, विद्याभूषणः, भट्टश्रीः, इत्यादिभिरात्मनो बिरुदैर-

ङ्किता अपरैरभिज्ञायन्ते, नूनमेवमेव प्राञ्चोऽपि महाकवयः कतिपये बिरुदैरात्मीयैरन्येषामभूवन्विदिता इति वृद्धपरंपरया विजानीमः ॥

इयान्परं भेदः— यदिदानींतनानि बिरुदानि प्रायेण योग्यतामननुरुन्धानान्यपरैरदत्तान्यात्मना गृहीतानि च भवन्ति, येन पण्डितमण्डलीदत्तानि पार्थिवसभालब्धान्यपि केषांचन तदर्हाणां बिरुदानि केवलमतत्त्ववेदिनामन्यायाय्यवादिनामतिचिराय वचनीयतापात्राणि स्वयंलिङ्गपरिहासपदानि च भवन्ति । प्राचां तु महाकवीनामार्हन्त्यनुसारेण तत्तद्वर्णनानिपुणतया च परैरेव प्रकटितानि तानि प्रथन्ते स्मेति ॥

बिरुदानि चैतानि द्वैधमुपलभ्यन्ते— क्वचिदुपनामतया स्वपरनिर्वाहकाणि, कुत्रचित्स्वप्रधानानि स्वयंप्रकाशानि चेति ॥

प्रथमानि च वयं प्रथमतः प्रस्तुत्य पराणि पुनः परस्तात्प्रस्तोष्यामः ॥

अत्रापि प्रथमतः प्रस्तावमर्हति सर्वथापि प्रथमगणनीयस्य महाकवेः कालिदासस्य बिरुदम् । महाकविः कालिदासो रघुवंशे नाम रसमये काव्ये इन्दुमतीस्वयंवरवर्णनावसरे—

संचारिणी **दीपशिखेव** बाला
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥'

इति पद्येन (६— ६७) इन्दुमत्यनभिमतानामत एव तयोपेक्षितानां भूपतीनामतिदयनीयमवस्थान्तरमनुभाव्यमानमिव निरूपयन्; एतान्निशमनचमत्कृतैरपरैः कविभिरन्यैश्च पण्डितैः '**दीपशि-**

खाकालिदासः' इति बिरुदनाम्ना संभावित इति चिराय शृणुमः । स्वभावोक्तिसरसमिदं च वर्णनम् 'उपमा कालिदासस्य' इति चिरप्ररूढं प्रवादमपि समर्थयत्, अन्यादृशमनुभवसहोदरमानन्दनिर्भरमाविर्भावयति कमपि प्रत्ययमित्यत्र सहृदयानां स्वहृदयमेव भविष्यति परमं प्रमाणम् ॥

यथा चायं कालिदासः, तथा भारविरपि महाकविः किरातार्जुनीये काव्ये

'उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसंभवः परागः ।
वात्याभिर्वियति विवर्जितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥'

इति श्लोकेन (५—३९) स्थलनलिनीवनादुत्थाप्य वियति विवर्तितं स्थलनलिनीपरागपुञ्जं कनकमयातपत्रतया निपुणमुत्प्रेक्षमाणः 'छत्रभारविः' इति व्यपदेशं समपादयदिति पण्डितपरिषदि कापि किंवदन्ती ॥

एवमेव माघकविरपि 'घण्टामाघः' इति प्रसिद्धो बभूव; यतोऽयं शिशुपालवधनाम्नि स्वविरचिते काव्ये रैवतकगिरिवर्णनप्रकरणे

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमकरे हिमधाम्नि याति चास्तम् ।
वहति गिरिरियं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥'

इति (४–२०) पद्येन विशदमावेदयत्यात्मनः कौशलमुत्प्रेक्षायाम् ॥[1]

इदमप्यवसरेऽस्मिन्नभिधातुमभिलषामः, यदयं माघकविर्भारविमतिशिशयिषमाणः[2] तदीयकिरातार्जुनीयप्रतिद्वंद्वितया शिशुपालवधं नाम काव्यमारभमाणः, स्वकीयाभिसंधिप्रदर्शनाय स इव प्रथमं [3]श्रीशब्देन काव्यं संभावयन्, आदिमं सर्गं वंशस्थवृत्तेन समुपक्रममाणः, सर्गे च द्वितीयस्मिन्नीतिशास्त्रनिपुणतामभिव्यञ्जयन्, प्रतिसर्गान्तिमश्लोकं तदङ्कितलक्ष्मीशब्दस्थानीयतया श्रीशब्दमङ्कत्वेन स्वयमपि निवेशयन्, किरातार्जुनीयस्य लक्ष्म्यङ्कव्यवहारमिव शिशुपालवधस्य श्र्यङ्कव्यपदेशं समर्थयन्, श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म' इति स्वयमेवान्ततः कथयन्, अपरापराणि च वर्णनादिवैचित्र्याणि भारविप्रहतेनैव पथा योजयन्, बिरुदलम्भकं पद्यमपि निदर्शनोत्प्रेक्षाभ्यां नितरामलंकृतं करोतीति ॥

वाचकमहाशयाः, महाकवेः कालिदासस्य विरुदप्रापकं पद्यं षष्ठे सर्गे सप्तषष्टितममिति, भारवेश्च पञ्चमे सर्गे एकोनचत्वारिंशमिति, माघस्य तु चतुर्थे सर्गे विंशमिति च विधिकृतमाकस्मिकमिममघरोत्तरभावमवलोकयतामस्माकमन्तरङ्गमतितरामापूर्णं भवत्यानन्देन विस्मयेन च ॥

---

1. अनेनैव श्लोकेन कविना 'घण्टामाघः' इति नाम लब्धमिति व्याख्याता वल्लभदेव इति निर्णयसागरनवीनमुद्रितमाघकाव्यटिप्पणी।

2. 'भारवेस्तु कथा तावद्यावन्माघस्य नोदयः' इति प्रसिद्धम्।

3. 'श्रियः कुरूणामधिपस्य पालनीम्' (किराते)
'श्रियःपतिः श्रीमति शासितुं जगत्' (माघे)

तथा राजानकरत्नाकरस्यापि 'तालरत्नाकरः' इति प्रख्यातिरासीत्; यश्च पञ्चाशत्सर्गात्मकं हरविजयं नाम महाकाव्यमतिचतुरोदात्तवर्णनागुम्भितमात्मना विनिर्ममे; यस्य चैवं काव्यसमाप्तौ प्रतिज्ञावाचोयुक्तिः--

'हरविजयमहाकवेः प्रतिज्ञां
शृणुत कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकविः कविः प्रभावा-
द्भवति कविश्च महाकविः क्रमेण ॥' इति ।

स किल रत्नाङ्के स्वकीये हरविजयकाव्ये सायंसमयवर्णनावसरे

'अस्तावलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम् ।
संध्याप्रनृत्तहरवाद्यगृहीतकांस्य-
तालद्वयेन[1] समलक्ष्यत नाकलक्ष्मीः ॥'

इति (१९—५) सरसनिपुणमुत्प्रेक्षते नाकलक्ष्मीम् ।

एवं दमयन्तीकथापरनामधेयस्य श्लेषबहुलतया वासवदत्तासतीर्थ्यस्य सरस्वतीप्रसादकृतव्यपदेशभाजो हरचरणसरोजाङ्कस्य नलचम्पूग्रन्थस्य रचयिता त्रिविक्रमभट्टोऽपि 'यमुनात्रिविक्रमः' इति व्यपदिष्ट आसीदिति ज्ञायते; यतः—

1. एतच्छ्लोकनिर्माणादेव रत्नाकरमहाकविः 'तालरत्नाकरः' इति कविगोष्ठीषु नाम लेभे, इति तत्र श्रीदुर्गाप्रसादटिप्पणी । 'अस्तेत्यादिश्लोकस्येह पाठः प्रमादज इव लक्ष्यते । अग्रे ह्यन्धकारोद्गमनानन्तरं चन्द्रोदयो वर्णयिष्यते इति टीका ।

'उदयगिरिगतायां प्राक्प्रभापाण्डुताया-
मनुसरति निशीथे शृङ्गमस्ताचलस्य ।
जयति किमपि तेजः सांप्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनं च ॥'

इति प्रभातं निपुणं वर्णयति । (६–१)

टीकाकारश्च चण्डपालस्तत्र

'प्राच्याद्विष्णुपदीहेतोरपूर्वोऽयं त्रिविक्रमः ।
निर्ममे विमलं व्योम्नि यत्पदं यमुनामपि ॥'

इति सरसं विलिखति ॥

एवमनर्घराघवाख्यस्य परमौजस्विनो नाटकस्य रचयिता बालवाल्मीकिर्भट्टमुरारिरपि— यः किल

'अङ्के कुनाटक इवोत्तमनायकस्य
नाशं कविर्व्यधित यस्य मुरारिरित्थम् ।
आक्रान्तकृत्स्नभुवनः क गतः स दैत्य-
नाथो हिरण्यकशिपुः सह बन्धुभिर्वः ॥'

इति पद्ये (३८–६८) अङ्कनाटकमुरारिपदानि घटयता हरविजयकाव्यकर्त्रा रत्नाकरेण स्मृत इवेति विमर्शकैः परामृश्यते—

'भूयस्तराणि यदुडूनि तमस्विनीषु
ज्यौत्नीषु च प्रविरलानि ततः प्रतीमः ।
संध्यानलेन भृशमम्बरमूषिकाया-
मावर्तितैरुडुभिरेव कृतोयमिन्दुः ॥'

इति चन्द्रं स्वभावोक्तिरम्ययोत्प्रेक्षया वर्णयन् 'इन्दुमुरारिः'

इति संभावितः सहृदयैरिति चिराय पण्डितपरंपराप्रस्तावः ॥

तथा हर्षचरितकादम्बरीकर्ता, स्रष्टा च निरस्तदुःखलवस्य सुखैकमयस्य शब्दप्रपञ्चस्य श्रीमान्भट्टबाणोऽपि 'तुरङ्गबाणः' इति विख्यातोऽभूदिति विदुषां कर्णाकर्णिका । हर्षचरिते हि

'पश्चादङ्घ्रिं प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥'
कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कंधरामातिरश्चीं
लोलेनाहन्यमानं तुहिनकणमुचा चञ्चता केसरेण ।
निद्राकण्डूकषायं कषति निबिडितश्रोत्रशुक्तिस्तुरङ्ग-
स्त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण ॥'

इति पद्यद्वयेन स्वभावोक्तिमधुरं तुरङ्गं वर्णयन्, तादृशीं संज्ञां लेभ इति वृद्धाः । प्रियवाचकाः सहृदयाः, नूनमेतत्पद्यद्वयमक्षिणी निमील्य मुहुर्मुहुर्भावयतामस्माकं वर्णनाप्रकर्षेण तादृशस्तुरङ्गः पुरः स्फुरतीति हृदयमवञ्चयन्तो वदामः ॥

कादम्बर्यामत्युत्तमतया इन्द्रायुधं वर्णयतोऽस्य महाकवेरीदृशी प्रसिद्धिरभवदिति केचित् ॥

परे तु अश्वधाटीवदस्य वाग्धोरणी निरर्गलं विनिर्गलन्ती नियतमस्य विरुदस्य मूलम् ॥

लब्धं सत्प्रज्ञकैर्यन्न जगति कविभिर्वस्तु तन्नास्ति किंचि-
त्क्षुण्णे क्षुण्णत्वचिन्ता गहनविषयता तस्य दूरास्तु तावत् ।

तन्मन्दाभिप्रगल्भप्रसरगुरुगिरामग्रणीर्बाण एको
राजन् रत्नाकरश्च ज्वलनवदवनौ जाज्वलीति द्वितीयः ॥'

इति रत्नाकरोक्तिरप्यत्र प्रमाणमिति वदन्ति ॥

श्रीकण्ठनाम्नो भट्टभवभूतेस्तु संकेतितं नाम संवृणवत् 'भवभूतिः' इति स्वप्रधानं स्वयंप्रकाशं बिरुदम् ॥

एवं खल्वनुश्रूयते—

पुरा श्रीनीलकण्ठसूनुर्जतुकर्णीपुत्रः श्रीकण्ठोनाम महाकविः कस्यांचन राजसभायाम्,

'तपस्वी कां गतोऽवस्थामिति स्मेराननाविव ।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ'

इति पद्यं स्वकृतं पपाठ । तन्निशमनेन च तुष्टान्तरङ्गो राजा महाकवयेऽस्मै सकलपण्डितानुमत्या 'भवभूतिः' इति बिरुदमदात् । तच्च राजदत्तमतिप्रशस्तं सर्वथापि योग्यं बिरुदमात्मनैव विराजमानमस्य स्थितपूर्वं श्रीकण्ठ इति पितृसंकेतितं नामैवान्तर्हितमकरोत् । ततश्चायं महाकविर्भवभूतिव्यपदेशेनैव विश्वत्रं विख्यातिमलभत । इदमनुसंधायैव कविनाप्यनेन स्वकीयनाटकत्रयप्रस्तावनायाम 'श्रीकण्ठपदलाञ्छनो भवभूतिः' इति विलिख्यत इति प्राचां परंपरागतः प्रवादः ॥

उत्तररामचरितव्याख्याता श्रीवीरराघवसूरिस्तु 'श्रीकण्ठ इति पदं शब्दः लाञ्छनं यस्य स तथोक्तः, श्रीकण्ठनामक इत्यर्थः । द्वादशेऽहनि पिता नाम कुर्यात्' इति पैतृकं नामधेयमिदम् । पदवाक्यप्रमाणज्ञः व्याकरणन्यायमीमांसापरिज्ञातेत्यर्थः । भवभूतिर्नाम

भवभूतिरिति प्रसिद्धनामवान् । एतत्कृत 'साम्बा पुनातु भवभूति-पवित्रमूर्तिः' श्लोकश्रवणसंतुष्टो राजा भवभूतिरित्येनं ख्यापयामासेति कथानुसंधेया । एवमन्यत्रापि कवितानुसारेण तत्तन्नामधेयम । यथा—रत्नखेटकः, कोटिमार इति, उदयरक्तं चन्द्रबिम्बं रतिपतिरत्नखेटकत्वेनोत्प्रेक्षितवानित्यैतिह्यस्य, कामिनीस्तनमण्डलं प्रति 'कुलाचलेन्द्रादपि कोटिसारः' इत्युक्तवानित्यैतिह्यस्य च तन्मूलत्वात् । किंचास्मै कवये ईश्वर एव भिक्षुरूपेणागत्य भूतिं दत्तवानिति वदन्ति । एवं च भवाद्भगवतो भूतिर्यस्येति भवभूतिरित्यन्वर्थ इत्याहुः' इति विलिखति ॥

'भवभूरिति व्यवहारे तस्यैव नामान्तरम्' इति त्रिपुरारिः 'श्रीः सरस्वती कण्ठे यस्य स श्रीकण्ठः, तद्वाचकं पदं लाञ्छनं चिह्नं यस्य स नाम्ना श्रीकण्ठः, प्रसिद्ध्या भवभूतिरित्यर्थः' इति जगद्धरश्च मालतीमाधवव्याख्यायां विलिखतः ॥

केचित्तु चिराय निरपत्यो नीलकण्ठभट्टः परमेश्वरं तपसा तोषयन्, प्रसन्नस्य तस्यानुग्रहाल्लब्धमेनं सुतं भवभूतिनाम्ना संकेतितमाजुहाव । 'श्रीकण्ठः' इत्येवास्य बिरुदनाम । तत्र च निदानमस्य महाकवेः सभासु कवितासु च निष्प्रतिबन्धप्रसरमसाधारणं वाङ्मयविसरणमेव । तथा च श्रीः सरस्वती कण्ठे यस्येति तस्य पदस्य व्युत्पत्तिरिति वदन्ति ॥

अन्ये तु न किमप्यस्य बिरुदनाम । भवभूतिरिति तु पितृसंकेतितं नामधेयम् । श्रीकण्ठपदलाञ्छन इत्यस्यायं किलार्थः—श्रीकण्ठस्य शिवस्य पदे पादप्रतिकृती लाञ्छनं धारणेन चिह्नं यस्य स इति । परमेश्वरभक्तेनानेन कविना रुद्राक्षलिङ्गादिवत पशुपति-

पादप्रतिकृती सदा विधृते अभूतामित्यैतिह्यमिति कथयन्ति ॥

परे तु परमेश्वरप्रसादलब्धमतितेजस्विनं सूनुं साक्षात्सदाशिवमेव समवतीर्णं मन्यमानोऽस्य पिता नीलकण्ठः 'श्रीकण्ठः' इति भगवतो नामधेयेन संकेतितमकरोत् । भवभूतिरिति तु पूर्वोक्तरीत्या बिरुदनामैवेति युक्तमुत्पश्यन्ति ॥

रत्नखेटादिविषये वक्तव्यं वास्तवं तु प्रसङ्गान्तरे प्रतिपादयिष्यामः ॥



॥ श्रीः ॥

# ॥ माणवकानुवाकः ॥

## प्रथमं सूक्तम् ॥

एकदा विद्याशालायां यदा माणवका आचार्यश्चोपसेदुः प्रातः तदा एकतमो माणवक आचार्यमपृच्छत् । भगवन्! "अजं वन्दे" इत्यस्मिन्सूक्ते विविदिषाणि, अजमिति छागं वा, आदिमं वा राशीनां, उताहो ईश्वरं वा विद्यानामिति । आचार्य अन्यतमं माणवकं प्रतिवक्तुं न्ययुङ्क्त । तथा नियुक्तो द्वितीयः प्रथममचोदयत् ।

अहो सूक्ते वन्दे इति पठसि ननु! वन्दनमीश्वरः सर्वेषामर्हतीति सुव्यक्तम् । सुव्यक्तमेव च छागस्य मेषराशेर्वा वन्दनार्हता नास्तीति । अत एतस्मिन्विषये तव संशयः तत्वस्य बुभुत्सां न व्यञ्जयति । न्यायमनवलम्ब्य क्रियमाणा पृच्छा आचार्यादुत्तरं नार्हतीति मन्ये इति ॥

प्रथम आह—अये प्रियसख, कथं ब्रवीषि मम पृच्छा न्यायं नानुसरतीति । तवापट्वी मतिर्मां खेदयति । मम तु प्रश्नः न्यायं न जहाति । शृणु अवहितमनाः । छागोऽस्माभिर्वन्द्यो भवितुमर्हति । छागो हि पुरुषस्य धनम् । परिपुष्टानां छागानां संपत्त्या पुरुषो वर्धते । वृद्धिहेतुद्रव्ये सन्निधापिते पुरुषस्य तत्र स्नेहः प्रह्वता च स्वाभाविकी । नाहमत्र विमतिमुत्प्रेक्षे । ब्रैहेये शालिनो गुल्यानि व्रीहिफलभारेणावनतानि केदारस्वामी यदा अवेक्षते तदा तस्य मनस आह्लाद उदेति । तेभ्यो गुल्येभ्यः सादरं चाञ्जलिं बध्नात्यर्यः ।

द्वितीयः— अयि कथं भोः आदिमस्य राशीनां संपादयेः ?

प्रथमः— राशिचक्रे हि ज्योतिषां मण्डलं प्रतिष्ठितम् । तस्य च स्थित्या प्रजास्तिष्ठन्ति च चरन्ति च । अतः प्रजानां प्राणने निमित्तं राशीनां चक्रं भवति । तस्मिन्स्नेह आदरश्च सुधियां भवति । राशिचक्रे चादिमे मेषराशौ तत एव स्नेह आदरश्च भवतीति ध्रुवमिति संपति मत्पृच्छा सकारणेति जानीषे हि ॥

तयोर्वादमुपशृण्वन्नाचार्यः तवानुयोगः सयुक्तिक एवेति मन्ये । परंतु, अत्र सूक्ते अजमितीश्वरमेव वक्ति । यत ईश्वरो नैव जायते ध्यानेन पूजनेन चेश्वरः प्रसीदिति, प्रसन्नश्च वन्दितुरपेक्षां पूरयति । अत ईश्वरस्य वन्दनं मङ्गलाचरणं संपद्यते । इममर्थं मनसि निधाय सूक्तकृत् ग्रन्थस्य प्रारम्भणे अर्याणामाचारमनुस्मरन्नीश्वरं वन्दते स्म विघ्नोपशान्त्यै । तस्मात् यूयमपि कर्मस्वारभ्यमाणेषु ईश्वरं स्मरत माणवकाः ॥

## द्वितीयं सूक्तम्।

---

कृष्णया नद्या संवर्धिते कुत्रचिज्जनपदे श्रीनिवासशर्मा महितचरितः कश्चिदासांचक्रे। तस्य द्वौ पुत्रौ रामशर्मकृष्णशर्माणौ आस्ताम्। तयोः प्रथमो रामशर्मा द्वादशहायनः। द्वितीयः कृष्णशर्मा दशहायनश्च बभूव। तौ भ्रातरौ परस्परानुरागेण पितुः परां प्रीतिमपुष्णीताम्। शयनमासनं भोजनं वा एकतरेण विना अन्यतरो नानुभवति। स्वादु फलं भक्ष्यं वा लब्ध्वा सह भोक्तुं भ्रातरं प्रतीक्षते। तस्मिन्नेव जनपदे श्रीनिवासशर्मणाध्युषितस्यावसथस्य नेदिष्ठेऽग्रहारे शम्भुशर्मा श्रीनिवासशर्मणः संबन्धी न्यवसत्। स आत्मनः कन्याया विवाहोत्सवं निर्वर्तयिष्यमाणः आसन्ने आभ्युदयिके कर्मणि विघ्नकारिणो भूतगणस्योपशान्त्यै गणाधिपतिं गजाननं देवं स्वनिवासाददूरे नद्यास्तीरे प्रतिष्ठितमाराधयितुमुद्युङ्क्त। गणपतेराराधनं प्रायशः शुक्रवासरस्य सायाह्ने देवस्य प्रेष्ठं भवति। अत एकस्मिन्शुक्रवासरे विनायकस्य पूजां चिकीर्षुः शम्भुशर्मा स्वसंबन्धिनं श्रीनिवासशर्माणं पुत्रयोर्देवागारे उत्सववेलायां प्रेषणमनाथत्। तस्मिन्नेव दिनेऽपराह्णे गृहेऽग्निपूजनाय समिधः कुशांश्चाहर्तुं पिता पुत्रं प्रथमं रामशर्माणं प्राहिणोत्। स तत्र समिदाहरणाय गतश्चिरायते स्म। तदानीं स्वमित्रेणाचरिष्यमाणस्योत्सवस्य सन्निहितत्वं विमृश्य, स्मृत्वा च मित्रस्य शम्भोः प्रार्थनां, अवरजं कृष्णशर्माणं विनायकागारे उत्सवदर्शनाय श्रीनिवासशर्मा प्राहिणोत्। कृष्णश्च तत्र गतो देवलेन यजमानार्थं क्रियमाणं गणपतेराराधनमीक्षते स्म। देवलेन क्रियमाणं बिम्बस्य सुगन्धिभिर्द्रवद्रव्यैरभिषेकं, वासितेन

पिष्टचन्दनेनानुलेपनं स्रग्भिर्माल्यैरासज्जनं बिम्बोपरि समन्त्रकं बहुवारं पुष्पाणामवकिरणञ्च स तत्र ददर्श । अगरुचूर्णैर्गुग्गुलुनिर्यासैश्च वासितैश्च धूपैः नानाशाखैः ज्वलद्भिः प्रदीपैराराधनमित्येतत्सर्वं कृष्णः सोत्सुकमना अवैक्षत । बिम्बस्य पुरतो निहिता नारिकेलखण्डानां मोदकानामपूपानामिक्षुखण्डानां भर्जितचणकानां बहुविधानां फलानां च राशयो गणपतये निवेद्यमानाः कृष्णस्याक्षिपथं नातिचक्रमुः । तदनन्तरं प्रज्वलितेन घनसारेण बिम्बस्याराधनमर्चायाः समाप्तिशंसि प्रेक्ष्य कृष्णः स्वनिकेतनं प्रति चचाल । तस्मिन्नवसरे गणपतेराराधकः शम्भुशर्मा कृष्णमाहूय तत्र निवेदितेभ्यो भक्ष्यराशिभ्योऽञ्जलिपूरकान्भागान्ददौ । तत्सर्वं स्वस्योपसंव्याने निधाय स्ववेश्म कृष्णशर्मा प्रापत् । वेश्मनि तदानीं भ्रातरमपश्यंस्तदागमनं प्रतीक्षयामास भक्ष्याणामास्वादनाय । एवं प्रतीक्षमाणे च तस्मिन्नविलम्बेन रामशर्मा समिधः कुशांश्च गृहीत्वा गृहं प्रपेदे । आगतं दृष्ट्वा भो ज्येष्ठ कुत्र गतोऽभूः । विनायकागारे सामुत्सवं द्रष्टुं कुतस्त्वंनागमः तत्राद्योत्सवः प्रावर्तत किल । तत्र विनायकस्याराधयिता मोदकानिमानन्यानि च भक्ष्याणि आवाभ्यां प्रायच्छत् । तानि त्वया सह भक्षितुं त्वां प्रतीक्षे । एह्यश्नाव इति कृष्णो ज्येष्ठमाजुहाव । रामस्तु नातीव सन्तुष्यन्ननुजमप्राक्षीत् । अरे भ्रातः, तदेवं भक्ष्यचापलं नाहमभिनन्दामि । केनाहूतो भक्ष्याण्यादातुमगाः । कथं न जुगुप्ससे याच्ञाया इति । कृष्णः तं प्रत्यवोचत् । भो ज्येष्ठ न मां कोऽप्याह्वयत् । परंत्वस्मत्पितृनियोगमनुसरता मया देवमन्दिरं प्रापि । तत्र चास्मत्पितृसखेन शम्भुना सनिर्बन्धं दत्तानीमानि भक्ष्याणि गृहीत्वा प्रत्यागममिति ॥

रामः प्राह—नाहमिमां तव गिरं विश्वसिमि । यतोस्मत्पिता प्रार्थनां विना कस्यापि निकटमावां न प्रेरयति । यदि चास्मिन्नर्थे नाथितोऽभविष्यत्तदा मामपि प्रैषयिष्यदिति ॥

कृष्ण उवाच—कस्य हेतोः पिता मां प्राहिणोदिति नाहं वेद्मि। एहि गच्छाव पितृनिकटामिममर्थं प्रष्टुमिति । तच्छ्रुत्वा रामोऽनुजेन सह पितुः श्रीनिवासस्य निकटमाजगाम । कलहायमानाविवागच्छन्तौ पुत्रौ वीक्ष्य श्रीनिवासशर्मा बभाषे— भो वत्सौ, कमप्यर्थं प्रति विवदमानाविव दृश्येथे । परस्परमित्रयोर्युवयोः विवादः कथमजनीति जिज्ञासे इति ॥

तदाकर्ण्य रामः सविनयं बभाण । अयं कृष्णो ममानुजः स्वच्छन्दं विनायकागारमुत्सवदर्शनाय गत्वा इमानि भक्ष्याण्याहृतवान्। पृष्टश्च मया भवतो नियोगमनुसृत्यैवमनुष्ठितमिति ब्रूते । अपि भवानिममाजिज्ञपत् इत्यवजिगमिषा मेऽस्तीति । तदा तं सान्त्वयन्पिता प्राह— शम्भुमस्मत्सम्बन्धिनं जानीषे हि । तस्य कन्याया उद्वाहोऽचिराद्भविष्यति । ततः प्राग्विनायकं विघ्नानां नियन्तारं प्रसादयितुमद्य गणपत्याराधनमकरोत् । तेन च प्रातरेवाहमनुनीतोस्मि विनायकागारं उत्सवावलोकनाय युवयोः प्रेषणं प्रति । अग्निपरिचर्यायै समिधो बर्हींषि चाहर्तव्यानि विज्ञाय तदाहरणाय त्वां न्ययुङ्क्षि । त्वं चासायं नागमः । अतो मत्सस्वस्य प्रार्थनामनुसरन्नवरजमिमं प्राहैषं विनायकागारम् । तच्छ्रुत्वा रामः समाहितमना बभूव । ततश्च तौ भ्रातरावङ्कणं प्रत्यागत्य भक्ष्याणां गुणान्वर्णयन्तौ अभक्षताम् ॥

## तृतीयं सूक्तम् ॥

---

आसीदेकदा काञ्चीनाम्नि नगरे पुराणप्रोक्तेषु धर्मेषु श्रद्धालुः चित्रगुशर्मा ब्राह्मणः । (पुराणे चैवं प्रतिपाद्यते । कावेर्यां माघे मासि यः प्रतिदिनं प्रातःस्नायात्सोऽनन्तान् लोकान् जयतीति ।) एतेनोपदेशेन चोदितः, ऋषिभिर्जुष्टे स्थले कावेर्यां स्नातुं कस्मिंश्चिन्माघे मासि पुत्रेण सुमतिशर्मणा दारैरनुयायिभिश्च सह कुम्भघोणाख्यं पत्तनं कावेर्यास्तीरे निषण्णं चित्रगुशर्मा अव्राजीत् । तत्र सुखेन वस्तुं क्षममावसथं परिगृह्य सकुटुम्बः कावेर्यां दिने दिने स्नानं कुर्वन् चित्रगुर्वसति स्म । कुम्भघोणाख्यो देश आयतो विस्तृतश्च विंशत्या ग्रामैरतीवासन्नैः परिव्रियते । तेष्वेकतमे ग्रामे चित्रगुशर्मा निवासमकरोत् । अन्यतमे च ग्रामे माधवशर्मा नाम कश्चन ब्राह्मण उवास । तस्यासन्नयौवना गौरी नाम्नी विदुषी एका कन्यावर्तत । तस्या विवाहयोग्यं वय उपस्थितं विलोक्य माधवः सदृशस्य वरस्य गवेषणे यतमान आसीत् । स एकस्मिन्दिने कावेर्यास्तीरे प्रतिष्ठिते जपमण्डपे जपतां ब्राह्मणानां मध्ये ब्राह्मेण वर्चसा धीरदर्शनेन च दीप्यमानं चित्रगुं तदन्तिके च रूपेण लक्षणेन च प्रियदर्शनं युवानं ब्रह्मचारिणं ददर्श । तादृशस्य ब्रह्मचारिणो वीक्षणमात्रेण माधवः स्वतनयां गौरीं मनसाऽगात् । सदृशस्य सन्निकर्षे पुरुषस्य बुद्धिरुद्बुद्धा भवति हि । चिन्तया व्यापृतं च तस्य मनोऽजायत । काविमौ । कुतो देशादागतौ । किमर्थं चेमं देशमलं कुर्वाते । इति विचिकित्सास्तस्य तदा प्रादुरभवन् । भवत्वत्र निर्णयमधिगमिष्य.मीति संकल्प्यानुयान्तं स्यालमामन्त्र्य न्ययुङ्क्त ।

(क्रमशः)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष श्रावणमासः । [संचि. ५.


## सुभाषितानि ॥

कूर्माङ्घ्रिः सरसीरमोर्मिवलिका कोकस्तनी श्रीपते
राजन्ती बिसबाहुभिश्चलदलश्रीरेजहस्तेष्वलम् ।
किञ्जल्कस्फुटदीपिका धृतवती सत्कार्णिकापत्रकै-
र्भृङ्गीझङ्कृतिगीतिभिर्मुहुरिह त्वां गायतीवाधुना ॥ १ ॥

अशोकवृक्षोऽपि परं नराणां
वियोगभाजां वितनोति शोकम् ।
मधुव्रतोद्युक्तगुणस्य सङ्गात्
संसर्गदोषा न वृथा भवेयुः ॥ २ ॥

चण्डालस्यश्चितपद्मिनीकरपरामर्शाद्दिनान्ते रविः
प्रायश्चित्तकृते शिखावति पतन्प्रातः पुना रज्यते ।
मासं मासमसौ सुधानिधिगतेर्जैवातृकत्वं भज-
त्यभ्यस्तं किल कर्म गर्ह्यमपि तन्मुञ्चन्ति नोरागिणः ॥ ३ ॥

हेब्बाकोपाह्व श्री रामशास्त्री (सुरपुरम्)

# गैर्वाणी ॥

( पूर्वतोऽनुवृत्तम् )

---

**कृष्ण—** पाश्चात्यानां प्रशंसा न मे रोचते । त इमे वेदान्पौरुषेयत्वेन निश्चिन्वन्ति । ते ह्यात्मन्यारोपितालीकजात्यभिमानाः आर्याणां दायादा भवितुमिच्छन्ति । तदर्थं भाषाशास्त्रमेकं निर्माय तत्र तत्र स्वकपोलकल्पितान्सिद्धान्ताभासान्प्रमाणत्वेनोदाहरन्ति । तन्मते गैर्वाणीवदाङ्गलवाण्यपि आर्यभाषास्वेकैवेति श्रूयते । क्रमेण चेमेऽस्माकं तिलोदकपिण्डदानादिष्वप्यात्मनः स्वरूपयोग्यतां निरूपयेयुरिति नितरां बिभेमि ॥

**राम—** (सहासम्) तेषामस्माकं च सहस्रपुरुषान्तरं विद्यते । अतः पिण्डदानादिष्वनधिकारिण इमे इति सम्यगवधार्यताम् ॥

**कृष्ण—** युष्मद्वाक्येन तेषामस्माकं च यथाकथंचिद्दायाद्यं वर्तत इत्यभ्युपगम्यते । अहो! कालस्य वैपरीत्यम् । मांसाशिनो मद्यपायिनो मतान्तरस्थाः शौचत्यागिनश्चास्माकमद्य विप्रकृष्टा बान्धवाः संजाता इति इदमतिह्रेपणमास्तिकानाम् ॥

**राम—** पशुपुरोडाशरसिकानां कुले जाता वयं कथं मांसाशिनां दूषणमुद्भावयेम ॥

**कृष्ण—** हन्त! अधिरूढोऽसि नास्तिकानां परां काष्ठाम् । मांसाशनं हि निषिद्धमस्मिन्युगे । क्रतुषु च पशोर्विशसनं वेदविहितत्वेनानुष्ठीयमानं श्रेयसेऽनन्ताय कल्पत इति कथं न जानीषे?

**राम**— यदि क्रतुषु पशोर्विशसनं वेदविहितं तर्हि याजकानां किमिति प्रायश्चित्तं विहितम्?

**कृष्ण**— केनोक्तमिदम्? शामित्रेऽधिकृतस्यैव प्रायश्चित्तमभ्युपगच्छन्ति केचित्। तदिदं मतं याज्ञिका नाभिनन्दन्ति ॥

**राम**— तर्हि न हिंस्यात्सर्वभूतानि इति श्रुतेः वैयर्थ्यमपरिहार्यम्।

**कृष्ण**— सामान्यविधिरयं अग्नीषोमीयं पशुमालभेतेत्याद्यपवादं बाधितुं न शक्नोति। किं च प्रायश्चित्तवादिनां मतेऽपि यजमानस्यान्यस्य च शामित्रे साक्षादनधिकृतस्य पापगन्धोऽपि नास्तीति सिद्धान्तः ॥

**राम**— यथा कथंचिद्धिंसारूपमिदं काम्यं यागादिकमल्पास्थिरफलकं चेति श्रुतेरेवावगम्यते। तत्किमिति विवेकी पुरुषः एतेषु कर्मसु श्रद्दधातीति न ज्ञायते ॥

**कृष्ण**— यावज्जीवमग्निहोत्रं जुहुयादित्यादिश्रुतेः प्रामाण्येन फलकामनां विहाय वेदविहितमिदमनुष्ठेयमिति भगवता बादरायणेनानुशिष्टम् ॥

**राम**— पूर्वस्मिन्कालेऽस्मत्पूर्वपुरुषा अभवन्। तदानीं 'यदन्नः पुरुषो राजन् तदन्नास्तस्य देवताः' इति न्यायमनुसृत्य पशोर्मांसादिकमपि यागद्वारा देवेभ्यो निवेदितमासीत्। अधुना तु कापी रोट्टी इत्यादिकमेव क्रतुषु द्रव्यतया विहितं देवेन कालरूपेणेति मन्ये ॥

**कृष्ण**— (सस्मितम्) — श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपेषु केन प्रमाणेनेदं त्वया निर्दिष्टं द्रव्यं यज्ञाङ्गत्वेनाभ्युपगम्यते मीमांसकैः ॥

**राम**— सोमाभावे पूतीकस्य ग्रहणमितिवत्पूतीकस्य स्थाने कापी निर्दिष्टा भवति । रोट्यपि कपाले निष्पन्नत्वात्पुरोडाशस्थानापन्नं स्यात् । कालमेव लिङ्गत्वेनाश्रित्य तदनुगुणा श्रुतिः कल्प्यते ॥

**कृष्ण**— अद्य फलितं तव मीमांसापरिश्रमेण । तादृशद्रव्यकरणकयागसाध्यादृष्टद्वारा स्वर्गस्थाने आङ्गलभूमिरेवाधिगम्येत यजमानेन ॥

**राम**— इष्टापत्तिः । अमरावत्या न परिहीयते लण्डनं नगरम् । जार्जचक्रवर्तिनो विभवमालोक्येन्द्रोऽपि नितरां लज्जत इति श्रूयते ॥

**कृष्ण**— अतिरमणीयं मन्त्रयसे । यागसाध्यस्वर्ग अपवर्ग एवेति याज्ञिका विश्वसन्ति ॥

**राम**— "विषयेषु विनाशधर्मसु
त्रिदिवस्थेष्वपि निस्स्पृहोऽभवत् ॥"
"पीडयिष्यति न मां खिलीकृता
स्वर्गपद्धतिरभोगलोलुपम् ॥"
"अतिष्ठदेकोनशतक्रतुत्वे
शक्राभ्यसूयाविनिवृत्तये यः ।
द्यामर्जितां कर्मभिरारुरोह
जगाम यज्वा यजमानलोकम् ॥"

इत्यादि व्याहरन्महाकविः यज्ञस्य सान्तः कश्चिल्लोक एव फलत्वेन निश्चित इत्यवगमयति ॥

**कृष्ण**— अनङ्गरङ्गादपि बहूनि वाक्यानि अस्मिन्विषये प्रमाणत्वेनोदाहरणीयानि स्युः । सोऽयं ग्रन्थ आधुनिकैराम्नायानामुपरि

निहित अनुदिनं पठ्यते जप्यते च महत्या श्रद्धया ॥

**राम—** (सहासम्) कविवाक्यमत्र न प्रमाणमिति सुस्पष्टमुच्यताम् । मया तु महाकविरसौ वाल्मीकिवाक्यं प्रमाणीकृत्यैव जामदग्न्यविजयस्थले—

पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥

इति वर्णयतीति उदाहृतम् ॥

**कृष्ण—** महर्षिणा आदिकाव्ये स्वर्गपदं प्रयुक्तं चेत् तदवश्यमत्र प्रमाणीभविष्यति । तदुपनय रामायणम् ॥

**राम—** (कोशमुपनीय) अवलोक्यतामयमेव बालकाण्डः ॥

**कृष्ण—** (कोशमुद्घाट्य)

लोकानप्रतिमान्वा ते हनिष्यामि यदीच्छसि ।

जडीकृते तदालोके ।

लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया ।

जहि तान्शरमुख्येन ।

स हतान्दृश्य रामेण स्वां लोकांस्तपसार्जितान् ॥

इत्यादि पठित्वा हन्त प्रत्युज्जीवितोऽस्मि । पश्य न कुत्रापि स्वर्गपदं प्रयुक्तं प्राचेतसेन । अप्रतिमा लोकास्तपसा दानेन च समार्जिताः । न सर्वथा यागभाव्यं स्वर्गं भवितुमर्हति ॥

'वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना' ॥

इत्यस्माकं विश्वासः कथमनुपपन्नो भवेत् ॥

**राम—** सत्यम्— अत्र महाकवेराशयः प्राचेतसभाणितिं नानुसरति । अथापि स्वर्गाधिप इन्द्रः शतक्रतुरित्यभिधीयते । स्वर्गं पदं चान्तवति लोक एव रूढमित्यवगम्यते ॥

**कृष्ण**— महाकविरसौ शृङ्गाराक्रान्तमानसः कामिनीदृगञ्चलबद्ध-भावः अस्तमितविवेको बभ्रामेति किमिति नोररीक्रियते ।

**राम**— तर्हि सत्वमूर्तयोऽस्माकमाचार्यपादाः शङ्कररामानुजमध्वाचार्या अपि कर्मणामल्पास्थिरफलकत्वं स्वीयभाष्येषूपदिशन्तो बभ्रमुरिति वक्तव्यं किल ॥

**कृष्ण**— ते हि फलाभिसन्धिरहितमनोभिरनुष्ठीयमानानि कर्माणि श्रेयस अनन्ताय कल्पन्त इत्यभिप्रयन्ति । अन्यच्च स्वसिद्धान्ते श्रैष्ठ्यसंपादनप्रवणमानसानां ब्रह्मनिष्ठानामेतेषां भणितिषु परामृश्यमानासु प्रथमं धर्मजिज्ञासा अथातो ब्रह्मजिज्ञासा इति सोपानद्वयं निबद्धमङ्गीकृतं चेत्यवगम्यते । कविमते तु शृङ्गारजिज्ञासा अथातः कामिनीजिज्ञासा इति सोपानद्वयं विहितम् । तदन्य एवायं पन्थाः आधुनिकैरभिनन्दित आदृतश्च ॥

(क्रमशः ।)

॥ श्रीः ॥

## उद्योगः ॥ (Industry)

——❀——

उद्योगो नाम दृढसंकल्पपूर्वको हितसम्पादको न्यायमार्गानुसारी मानुषो व्यापारः । यथा केनचिद्वाणिजा धनार्जनाय नित्यमपि क्रियमाणो वाणिज्यरूपो व्यापारविशेषः, यथा केनचिद्योधेन रणरङ्गे क्रियमाणो विजयोद्देशको योधनरूपो व्यापारविशेषः, यथा च केनचिद्विद्यार्थिना ज्ञानसंपादनाय क्रियमाणो विद्याभ्यासरूपो व्यापारविशेषः ॥

एतादृशस्वरूपस्योद्योगस्यावश्यकतां तदभ्यासप्रयोजनानि तदनभ्यासिनां दुर्गतिं चात्र किंचिद्विचिन्तयामः ॥

अस्माकं शरीराणां निर्माणमेवोद्योगार्थमिति वक्तुं शक्यते । अस्मासु विद्यमाना मानसाश्शारीरिश्च शक्तिविशेषा उद्योगानुकूला एव वर्तन्ते— यथा हस्तेन्द्रियं वस्तुधारणाय नानाविधकर्मकरणाय च, पादेन्द्रियं गमनादिकर्मणे, इतराणि च कर्मेन्द्रियाणि तत्तद्व्यापारनिर्वहणाय, ज्ञानेन्द्रियाणि च त्वक्चक्षुःश्रोत्रजिह्वाघ्राणरूपाणि स्पर्शनदर्शनश्रवणरसनाघ्राणकर्मार्थं, मन इन्द्रियं च सकलेतरेन्द्रियव्यापारनियमनाय स्वयमपि ध्यानादिनिर्वर्तनाय ॥ एवं च सर्वाण्यपीन्द्रियाण्येतानि भगवता तत्तदनुगुणसमीचीनोद्योगार्थमेव विनियोक्तुं वितीर्णानि । अतो न तेषामलसीभवितुमवकाशः सम्पाद्यः । निर्व्यापारेषु चेन्द्रियेषु नरस्य जीवनमेव दुश्शकं भवति । उक्तं च केनचिन्महाशयेन—

इन्द्रियाणि वितीर्णानि विधिनोद्योगसिद्धये ।<br>
अत एव हि हन्यन्ते निरुद्योगा मनोरथैः ॥ इति ।

अतो निरुद्योगा यदि वयं भवामः, भगवतः सृष्टिकर्तुस्सङ्कल्पविरुद्धमेवास्माकमाचरणं भवति, तदनुगृहीतमुपकरणजातं च वितथीक्रियतेऽस्माभिः क्रमेण च निरुद्योगी जनः करणपाटवरहितः स्वस्यैव मनोरथैरजेयैर्हन्यते ॥

उद्योगेन किल नरः प्रकृतिमण्डलवर्तिवस्तुजातं परिपालयति, परिष्करोति च । तेनैव हि तत् सर्वं समीचीनदशासु प्रतिष्ठापयति, उत्तेजनपूर्वकं तत्तदुचितकार्येषु विनियोगाय सज्जीकरोति च ॥

अस्माकं मनसः परिश्रमो ध्यानानुचिन्तनादिप्रकारकोऽस्मन्मानसं तत्तद्विषयेषु समीचीनभावनापूर्वकनिर्णयज्ञानाय समर्थयति; क्रमेण चाभ्यासतोऽस्माकं प्रज्ञाप्रभावमतिशाययति तत्तत्कार्योपयुक्तरीत्या ।

शारीरः परिश्रमस्तु तानि तानीन्द्रियाणि शुद्धानि सुस्थानि च करोति, तत्तत्स्थानेषु सञ्चितानि मलान्यपाकरोति निरुद्धानि च द्वाराण्यपावृणोति, तेषु तेष्वङ्गेषु बलमर्पयति, शरीरधारकमौष्ण्यं च सर्वत्र सुसमीकरोति । एतं शारीरं परिश्रमं विना न कोऽपि जीवितुं शक्नुयात्, न कस्यापि देहारोग्यं सुरक्षितं भवेत् ॥

यथैव लोके भौतिकपदार्थानामनवरतपरिस्पन्दनेन शुद्धिस्संस्कारश्च भवति, तथैवास्माकं शरीरस्याऽपि भवतीति बोध्यम् । नदीजलं सततपरिवहणेन निर्मलं मधुरं नवनवं च भवति, न तथा किल पल्वलोदकं पूतिगन्धि । वायुरपि चलनेनैव परिशुद्धस्सेवनीयोऽपि भवति, संवृतप्रदेशे तु चलनाभावादशुद्धो दुस्सेव्यश्च भवति । लोहाश्च विनियोज्यमानाः किल विराजन्ते निजरूपस्य थालथल्येन सुश्लक्ष्णाः; यदि पुनरमी भवन्ति कुत्रचिद्विनिक्षिप्ता निरुपयुक्ताः, तर्हि किट्ट(?)कलङ्किता वर्णहीनाश्च भवन्ति । यदि पुनरियं धरित्री सुकृष्टा भवति, तदा किल समृद्धानि सस्यानि ददाति; अकृष्टा चेत्तरुगुल्मकण्टकाद्यावृता दुर्गमैव भवति ॥

एवं च सर्वमिदं वस्तुजातं प्रकृतिमण्डलस्थं चलनेनैव स्वस्वानुगुणदशासु सुप्रतिष्ठितं परिपाल्यते । सर्वोऽपि तिर्यग्जन्तुवर्गः परिश्रमेणैव स्वस्वारोग्यदशासु सुरक्षितो भगवतस्सङ्कल्पानुकूलं स्वस्वोचितव्यापारेषुप्रवर्तितुमर्हो भवति । एवमेव शारीरा मानसाश्चास्माकं शक्तिविशेषा अपि क्रमेणाभ्यासादेव स्वस्वोचितकार्येषु वि-

नियोगार्हा भवन्ति । अतस्सर्वैरपि लोके सततमुद्योगशीलैरेव भाव्यम् ॥

अनुद्योगो हि नानाविधैरालस्यजडतादिशब्दैरसकृदभिधीयते। आलस्यमेव किल लोके जनाननवरतमखिलदुःखाकुलान् करोति, तदेव हि बीजभूतमनुभूयमानास्माकीनविविधविषादपरम्पराणाम् । उक्तं च केन चित्पाश्चात्येन विपश्चिता [1]" किं नाम दुष्कृतं जनानां जगति वंशपरम्परानुगतं दृश्यते? गर्वो वा दुर्व्ययशीलता वा दुराशा वा? इति पृष्टे 'नैषामन्यतमं तत् दुष्कृतं आलस्यमेव तत्—' इति वदामः । यो वा प्रथमालस्यं जयति स एव जगति सर्वं जयति"— इति ॥

तदिदं सुभाषितं न हि सम्यगवधार्यते साधारणजनैः । सन्दिह्यते चात्र विषये— कथमिदमालस्यं नाम जनानां वंशपरम्परानुगतं दुष्कृतमिति कथ्यते? अस्मत्प्रकृतिरेवालस्यविद्वेषिणी किल दृश्यते?— इति । तथापि सत्यमेवेदं यदलसप्रकृतयोऽपि जना बहवःसन्त्येवात्र जगतीति ॥

इदमत्र बोध्यम्—

प्रकृतिमण्डलपरिशीलनेन तु ज्ञायते— न कथञ्चिदपि सहते प्रकृतिरालस्यमिति । तत्कथं वेयं प्रकृतिर्नाम मानिनी शङ्कितशीला भवेत् पापीयसीं जडतामनुसरतीति । उदाहृतं किल शर्मण्यकविवरेण्येन[2]—

1. Which is real hereditary sin of humanity? Do you imagine that I shall say pride, or luxury or ambition? No! I shall say indolence. He who conquers that, can conquer all"—**Zimmerman.**

2. Cf. 'Nature knows no pause, and attaches a curse upon all inaction.'— Goethe.

"सन्ततविकृतेः प्रकृतेर्न विरामो दृश्यते जातु ।
सा किल निन्दति जडतां दुरितप्रायां दुरन्तां च ॥"

सर्वेऽपि शास्त्रकारा इममेवाशयमनुमन्यन्ते । प्रत्यक्षानुभवसिद्धोऽपि वर्तते किलायमर्थः । यदि कश्चित् समुद्रतीरोपविष्टः कल्लोलमालिकानामास्फालनानि यादसां पतनोत्पतनरूपाणि चलनानि च विलोकयति, परिशीलयति च निजान्तरङ्गे तरङ्गाघातशिथिलितानि विशकलितानि विलोक्य कूलाचलशिलातलानि, पश्यति च महीतले समुदञ्चदङ्कुराञ्चिततृणसन्ततिं, उद्वीक्षते च गगनतले सजलजलदान् चलदखिलनीलावयवान्, शृणोति च पिककोकिलादिकूजितान्यतिमधुराणि, आलोकयति चैवामितरत्र तत्तद्वस्तुबृन्दमनारतपरिस्पन्दम्, तर्हि सुव्यक्तमेवैष जानाति 'सेयं प्रकृतिरविरतविकारा सततोद्योगकारिणी'— इति ।

एषा किल योषा प्रकृतिरनवरतगमनशीला क्षणे क्षणेऽपि निर्माणविनाशनादिकार्येषु व्यापृता वर्तते । दृश्यते चेदं वचनमनुरूपमस्याः, यदुदीरितमर्वाचीनेन केनचिन्महाकविना सरिदुक्तिभङ्ग्या—

[1]"आयान्तु यान्तु मनुजाः
सन्ततमेवाहमनुदिनं यामि ॥"— इति ॥

एवं स्थितेऽपि प्रकृतिमण्डले सन्ति बहवो मानवा एव सततमलसप्रकृतय इति परं शोचनीयमेतत् । ये केचिदिह जगति नागरिकवृत्तेः प्राचुर्येण स्वयं निरुद्योगा अपि पैतृकादिधनलाभतो मदान्धाः प्राप्तकामा विभान्ति, ते पुनर्मन्यन्ते— "कुतो वा अस्माभिः

1. "Men may come, and men may go,
But I go on for ever."— Tennyson.

कर्म कार्यम्? वयं तु परिश्रमं विनैव लब्धजीविकाः। अन्ये किल ते येऽस्मदर्थमायासबहुला भवन्ति। विधिनैव निर्मितोऽयं प्रभेदः। निष्कृष्टा किलैवमस्माकमुत्कृष्टता जगति॥" इति॥

वस्तुतस्तु— त एव महनीया जगति ये पुनःसततोद्योगशीलाः कालपरिमाणमहिमाद्यभिज्ञाः। अज्ञाः किल ते निरुद्योगा धनमदान्धाः, ये तु कृषीवलकुम्भकारवैद्यवणिगुपाध्यायादीन् लोकोपकारनिरतानपि परिभवन्ति, नैव जानन्ति चात्मनां सौख्यमखिलं तदीयपरिश्रमायत्तमिति॥

राज्ये तावत् प्रजानां स्वास्थ्यम्, सुखम्, सौराज्यमित्यादिकमेव कारणमेतेषां धनसमुच्चयसमयलाभस्य। अतो न काऽप्यमीषां स्वाभिमानार्हता विद्यते। यदि जगति कस्य चिद्रमणीयरूपेण प्रज्ञाप्रभावेन वा स्वाभिमानः, तत्र भगवदनुग्रहासादितमिदं रूपमयं प्रज्ञाप्रभावो वेति तस्मिन् जने स्वाभिमानं क्षमन्त एव लोकाः। न तथा निरुद्योगेषु धनमदान्धेषु क्षमन्ते। किञ्च— अनुद्युक्तास्तु धनिका अपरतन्त्रतया विशेषतस्सुखिन इति सामान्यवचनं न तथ्यम्— यतः—

"अनुद्योगं महारोगो नरं रहसि हन्ति वै।
आपाततःसुखाकारो महादुःखाकरो हि सः॥"

असौ निरुद्योगो जनः केवलभक्षको भिक्षुकादपि निहीनवृत्तिः; न हि कश्चिदप्यमुना जगति जीवता सम्पादितः स्वार्थः परार्थो वा; नूनमेतदपेक्षया महीयान् माननीयश्च दारिद्र्यदूषितोऽपि कृषीवलः कुम्भकारो वा यस्तु नित्यमुद्यक्त एव निजमशनमार्जयति। अयं

किल लोकोपकारको यस्मिन्ननुद्युक्ते सति सपदि जगदखिलमपि दूयेत वाञ्छितवस्त्वलाभेन ॥

उपदिष्टं च केन चित्प्रभुणा[1] स्वात्मजाय:—

"मन्येऽहमनिशं वत्स जडतां जीवघातिनीम् ।
वर्धितेऽपीन्द्रियग्रामे तया जीवो निपात्यते ॥"

उद्योगरहितो नरः प्रायेण कामपीडितः सततमपि पापाचरणलालसः कदर्थितजीवितार्थः स्वयमसमर्थो बहुविधानर्थपरम्परापरवशो भवति । किञ्च— व्यायामादिपरिश्रमाणामनभ्यासात् सर्वेऽपि तस्यावयवाः क्रमेण दुर्बलाश्शिथिलाश्च भवन्ति । एवं च तस्य शरीरमपि प्राणधारणोचितसामान्यकर्मनिर्वहणेऽप्यशक्तमतिगलितं भवति मानसं तु शरीरपरतन्त्रतया तत्रैव नितरां निलीयते । आत्मापि विशेषतः किल्बिषकलुषितो भवति । लिखितं च कस्यचित्सुप्रसिद्धस्य निरुद्योगिनः पापराशिनिहतस्य समाधिस्थले—

"जननी सर्वपापानां जडता दुर्जनप्रिया ।
अपत्यैः पोषितैरेषा भर्तारं घातयत्यहो ।
भर्तृनाशे समुत्पन्ने स्वयं नष्टा भविष्यति ॥" इति ॥

यद्यपि— इन्द्रियविश्रान्तिदायिनी निद्रा तु सकलप्राणिनामावश्यिकी; सन्त्येव केचिन्महाकार्यनिरता अपि जनाश्चिरनिद्राप्रियाः । तथाऽपि पाश्चात्यकविवरेषु बहवः पञ्चघण्टापरिमितनिद्रयैव सन्तुष्टाः । एषा हि तेषां गाथापि श्रूयते—

"षट् प्राज्ञस्य तु सप्त स्त्रीजातेरष्टमूढस्य ।
निद्राघण्टाः क्रमतः कथिताः किल कालमानज्ञैः ॥"

1. Lord Chesterfield.

आधुनिकलोकवृत्तिपारिशीलनेन तु जागरणसमये विद्यमानानां नानाविधदैनन्दिनक्लेशजातानां प्राबल्येन जनानां निद्रैव सम्मता भवतीति प्रतिभाति । तदपेक्षयाऽप्यधिकनिद्रा तु न हि कुत्रापि शस्यते ॥

अत्रायं दृष्टान्तः—

अरोगशिशुरनवरतमुद्योगप्रियो हि दृश्यते । सुमहान् किलास्य खेलनसमये भवत्यानन्दः । स्वस्वेन्द्रियगोचरव्यापारानुनुकरणैकप्रवणाः खल्वर्भकाः । सन्ततव्यामसापेक्षाः किल तदीयावयवा दिनेदिने वर्धमानाः । न हि चिरशयनशीलशिशुः । जागर्त्यसौ किल दिनमणिनोदितेन । अप्रियमेवास्य शयनं प्रायेण । यथा यथा किल वयं प्रवृद्धा मरणाख्यदीर्घनिद्रासकाशाद्भीतभीताः, तथैव बालका लघुनिद्रासकाशाद्बिभ्यति । बाल्ये किल जनानामनिमिषांशित्वं निरतिशयानन्दसान्निध्यं च दृश्येते । क्रमेण च वयोऽतिक्रमे खलु शिशूनामैहिकक्लेशपाशवशता भवति । तथा चोक्तं पाश्चात्यभवभूतिना[1]—

"शैशवे वसति सर्वतोऽपि नः पालनैकनिरतो जगत्पतिः ।
संसृतिव्यसनबन्धलग्नपाद्बालकोऽपि भविता शनैश्शनैः ॥"

हन्त! बलादेव शिक्ष्यते शिशूनामननुमन्यमानानामपि चिरशयनं क्रमेण धात्रीजनैः स्वयमप्रबुद्धैः । इदमेव हि प्रायेण बीजं भवति जनेषु जडताप्रियताङ्कुरस्य । अत एव विनिन्द्यते जगति सर्वत्राऽपि चिरस्वापरूपो दुरभ्यासः ॥ इत्थं च—

1. Wordsworth (the poet of Nature) corresponds to Bhavabhuti of Sanskrit Literature. Cf. his lines (Intimations of Immortality.)

"Heaven lies about us in our infancy;
Shades of the prison-house begin to close upon the growing boy"

"आलस्यं हि मनुष्याणां
शरीरस्थो महारिपुः।
नास्त्युद्यमसमो बन्धुः
कृत्वायं नावसीदति॥"

इतीदं महाकविवचनं सुसमर्थितम्।

यत्पुनर्दैवमिति कथ्यते, तदपि प्रायेण पुरुषकारापरनामधेयेनोद्यमेन वशीक्रियते। तथा चोक्तम्—

"पूर्वजन्मजनितं पुराविदः
कर्म दैवमिति संप्रचक्षते।
उद्यमेन तदुपार्जितं चिरात्
दैवमुद्यमवशं न तत्कथम्॥"[1]

अत एव वदन्ति पुरुषकारसारज्ञाः 'अस्ति किल समस्तजनसंस्तूयमानः, दुःखशतदूरीकरणचणः, अमन्दानन्दसन्दोहनिष्यन्दी, विविधविचित्रविघ्नवारणनिशिताङ्कुशः, परमोपकारको जनानामुद्योगो नाम—' इति। एवं किलायमभिष्टूयते प्रभुणाऽपि केनचित् पाश्चात्यदेशीयेन[2]—

"विद्या न साऽस्ति जगतीह किलानवद्या
योद्योगिना भवति साधयितुं न योग्या।
उद्योग एव सकलोक्तिकलातिशायि
सद्यो ददाति भुवि मान्यपदं जनानाम्॥"

1. *Cf.* पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते।
तस्मात्पुरुषकारेण विना दैवं न सिध्यति॥

2. Lord Clarendon.

अयमुद्योग एव पुरातनपाश्चात्यविपश्चिदन्वेषितः 'तत्वज्ञोपलः' (Philosopher's stone) इति वक्तुं शक्यते-- यदनेनैव सर्वेऽपि लोहाः पाषाणादयश्च सुवर्णाः क्रियन्ते, अनेनैव दूरतो विद्राव्यते च दारिद्र्यदुर्देवता, सततसन्निहिता क्रियते च मङ्गलदेवता ॥ उक्तं किल—

'उद्योगिनः करालम्बं करोति कमलालया ।
अनुद्योगिकरालम्बं करोति कमलाग्रजा ॥' इति ।

इममेवार्थमुपसंहरति तत्रभवान् भर्तृहरिः—
'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः"– इति

---

## माणवकानुवाकः ॥

( पूर्वतोऽनुवृत्तम् )

---

अरे श्याल, इतो निषीदन्तौ पितापुत्राविव विभाव्यमानौ पश्यसि हि । यदि सर्वं यथा विचारितं भविष्यति तदामुष्मै कुमाराय मत्कन्यां दित्सामि । अत इमौ कर्माण्यनुष्ठायावसथं यदा गच्छेतां तदा त्वं तावनुव्रज । आवसथं च प्राप्यानयोरत्रागमने निमित्तं कुलं शीलञ्चावेहि । अनन्तरं यदि तव भागिनेय्या गौर्या इमं कुमारं भर्तृत्वे वरीतुमर्हं मन्येथाः तदा तमर्थं प्रति तयोर्मनोगतिः कीदृशीत्यवगच्छ । अवगत्य च पुनरायाहि मन्निकटमिति ॥

सिद्धार्थशर्मा माधवस्य श्याल आवुत्तस्य नियोगमनुसृत्य

पुत्रेण सह चित्रगुः यदा स्वनिकेतनाय प्रतस्थे तदा तमनुययौ । यदृच्छया मिलितः पथिक इव चित्रगुणा सल्लापान् कुर्वंस्तस्यावसथं प्रापत् । मार्गे चतुरसंभाषणमात्रेण सिद्धार्थः चित्रगोर्मित्रतामभ्यगच्छत् ॥

चित्रगुश्च सिद्धार्थं स्वावसथस्याङ्गणं प्रावेश्य तेन सह विस्रब्धं भाषते स्म । तदा चित्राः कथाः कथयता सिद्धार्थेन ज्ञातव्यं सर्वमज्ञायत । चित्रगोः कुलस्य प्रशस्ततां सुमतिशर्मणः तत्पुत्रस्यासाधारणीं विद्यासंपत्तिं माधवस्य कुले विमातृराहित्यं चावैत्सिद्धार्थः । ततश्चित्रगुमापृच्छ्य माधवशर्मणो निकेतनमियाय । वृत्तं सर्वं स्वभगिन्यै आवुत्ताय माधवाय चाकथयत् । सुमतिशर्मणो विद्यां रूपसंपत्तिं कुलं चोपश्रृण्वती गौरी च तदा ननन्द । तदापराह्णे स्यालेन सिद्धार्थेन सह माधवशर्मा चित्रगुशर्मणो वासमाययौ । चित्रगुश्च पूर्वमेव ग्राहितः सिद्धार्थस्यानुसारिणं माधवशर्माणं प्रत्युत्थानादिना आनर्च ॥ अथ तावन्योन्यं कुशलप्रश्नमकुर्वताम् । उपक्रान्ते विवाहात्मकेऽर्थे चित्रगोरभिसन्धिं स्वाभिप्रायमनुसरन्तीं वीक्ष्य माधवः सपुत्रदारं बन्धुधर्मेण स्वगृहमानिनाय । अङ्गणे तं सपरिवारमुपवेश्य यथार्हं चन्दनेन सुगन्धिकुसुमैश्च सन्तोष्य सद्यः पयः फलानि चोपग्राह्याणि बन्धुत्वेन विभावितेभ्यः सर्वेभ्यः समर्पयत् । तथा समर्पितानुपहारांश्चित्रगुः सपुत्रभार्यः सादरं गृहीत्वा माधवं तत्पत्नीं च प्रीणयितुमासस्वदे । अथ माधवः सपरिवाराय तस्मै ताम्बूलादिकं चादात् । तदा काञ्चित्कालं वर्गद्वयगताः स्त्रियः पुरुषाश्च सप्रेम संबभाषिरे । तदिदं संभाषणमुपश्रृण्वन्ती पितुः समीपे विषण्णा गौर्यपि भृशं सन्तुतोष । कथान्ते च चित्रगुशर्माण-

मित्थं माधवशर्माऽनाथत् । कन्याया दानाय सन्धां अस्यामेव रात्रौ प्रथमे यामे कर्तुमिच्छामि । भवद्भिस्तदानीं सन्धां स्वीकर्तुमागन्तव्यमिति । तथैव करवै इति प्रतिश्रुत्य चित्रगुशर्मा पत्न्या पुत्रेण च माधवमापृच्छ्य स्ववसतिं प्रापत् ॥

ततो व्युष्टेऽहनि ग्रामनिवासिनो महाजनान्ग्रामणीं स्तस्मिन्देशेऽधिगतांश्च राजपुरुषान्स्वगृहमानाय्योचितान्संभारान्संभृत्य च माधवः सबन्धुवर्गः चित्रगोरागमनं प्रतीक्षते स्म । चित्रगुरप्यनुसृत्य सङ्केतं पुरन्ध्रीभिरन्यैरनुयायिभिश्च सह प्रभूतानि फलानि पुष्पाण्यन्यान्युपायनानि च पात्रेषु निधाय माधवेन नियन्त्रितया प्रदीपपङ्क्त्या दर्शितमार्गः तौर्यघोषैरनुयायिनीनां पुरन्ध्रीणां मङ्गलगीतैरुपबृंहितो माधवस्य गृहमाययौ । अङ्गणस्य शिरोऽवलम्बिभिर्दीपसङ्घैः सूर्यकिरणैरिव प्रकाशित आस्तरणे विस्तीर्णे तले सर्वे न्यषीदन् । तदा तत्र प्राङ्मुखः कन्यया सह माधवः उपविवेश । वरस्य पिता चित्रगुः सोपहाराणि भाजनानि भूम्यां निधाय प्रत्यङ्मुखो निषसाद ॥

अथ पुरन्ध्र्यो मङ्गलगीतानि गायन्त्यः सत्यः उपायनानि कन्यायै गौर्या अदुः । अथ चित्रगोरनुमते तस्य चत्वारोऽमात्याः तावतीभिः पुरन्ध्रीभिः सह वरस्य कन्यापितुश्च गोत्रे उच्चैः संकीर्त्य सुमतिशर्मणश्चित्रगुपुत्रस्य भार्यात्वाय गौरीनाम्नीमिमां कन्यां वृणीमह इति प्राहुः । वृणीध्वमिति च माधवः प्रत्यूचे, एवं त्रिः प्रायुञ्जत । अन्ते च माधवशर्मा दास्यामीत्युच्चैः त्रिः प्रत्यजानीत । अथ चन्दनस्यानुलेपनैः पुष्परसानामभ्युक्षणैः अन्यैश्चार्घसाधनैः सम्बन्धिनः सर्वांश्च सदस्यान्माधवः संमानयति स्म । ब्राह्मणेषु वेदमन्त्रान्पठत्सु सत्सु माधवीयाः सर्वेभ्यस्ताम्बूलानि वितेरुः ।

एवं समयबन्धं गृहीत्वा चित्रगुः अनुचरैः सह स्वनिकेतनं ययौ। सदस्याश्च माधवं चित्रगुं च संबन्धिनावभिनन्द्य यथागतं प्रसेरुः॥ अथ कल्याणमण्डपस्य निर्मितौ संभाराणां संभरणे देवताद्याराधने च माधवशर्मा प्रायतत॥

---

## चतुर्थं सूक्तम्॥

---

अतीते सूक्ते माधवशर्मा कल्याणमण्टपस्य निर्मितौ संविधानमकरोदित्यवोचाम। तस्य संविधानस्य प्रकार इत्थमासीत्। मण्टपनिर्मितौ चतुरान्शिल्पिनः कर्मकरानधिष्ठातॄंश्च माधवो न्ययुङ्क्त। जनपदधर्ममाश्रित्य माधवगृहस्य पुरतो वीथ्यां कल्याणमण्टपो निरमायि॥

विवाहमण्टपस्य स्वरूपं गुणांश्च संक्षेपेणात्रोदीरयामः। मण्टपं द्वाविंशेषु युग्मेषु स्थूणेषु प्रतिष्ठितं पुरुषत्रयोच्छ्रितं चासीत्। तत्र चतसृषु दिक्षु प्रतीहाराः प्राकल्प्यन्त। चित्रया वृत्या मण्टपमशोभत। स्थूणाः समीकृततनवः सुधाया अनुलेपेन सितच्छवयः नीललोहित इव ग्रीवासु नीलाः वामलोचना इव पादेषु माञ्जिष्ठाः चतुरश्रेषु पीठेषु परिनिष्ठिताः चतुरश्रैः शिरोभिः शोभमाना बभूवुः। मण्टपस्य शिखरं नीचीनां नावमाकृत्यानुससार। शिखरे पार्श्वेषु वृत्यां च शुभ्रैः वस्त्रैर्वितानः पर्यास्तीर्यत। तादृशानां वस्त्राणां दशासु प्रादेशमात्रायता रक्तपटाः सन्ततानि बन्धूककुसुमानीवावालम्बन्त। मण्टपशिखरस्य पार्श्वेषु आलेख्यव्याजेनोद्यतायुधा हयारोहाः पदातिनश्च देवयोधाः अघशंसिभ्य उत्सवं परित्रातुं क-

ल्याणमण्टपमवतीर्णा इवालक्ष्यन्त । तेषामालेख्यानां मध्यदेशे नागपर्यङ्के शयानस्य पञ्चभिः फणाभिः सच्छत्रीकृतं नवीनं पयोधरमिव श्यामलतनुं पद्महस्तायाः प्रतिकृत्या शोभमानं कटाक्षपूरेण विवाहकालेऽग्निं परिचरितुं कल्पितां वेदिं पावयन्तमिव स्थितं श्रीपद्मनाभस्य प्रतिरूपं वीक्षितॄनानन्दयति स्म । मण्डपस्य शिखरात्पर्वत्रयवन्तः पर्वणि पर्वणि अनेकशाखादीपस्तम्भा अवाध्रियन्त । प्रतिशाखञ्च तेषां दीपपात्री न्यधायि । या शिल्पिकौशलेन द्रवीकृतसिकतामयी स्फटिक इव प्रभाया अतिरोधायिका प्रादेशद्वयोच्छ्रिता दुर्धरकुसुमयाकृत्या विडम्बयन्तीवादृश्यत । प्रतिपात्रि मलं व्यपोह्य सान्द्रीकृतमज्जारूपस्य स्निग्धस्य धातोः परिणतिरूपेणोद्दीपनार्थमन्तर्गर्भितवर्तिकेन दीपपात्र्या समामुन्नतिं भजता हिमस्य सन्तत्येव शुभ्रतनुना दीपदण्डेनाचकासि । मण्डपस्य स्थूणेषु एकैकस्मिन्युग्मे तादृश्यौ दीपपात्र्याववाष्टभ्येताम् । स्थूणयुग्मस्य शिखरे शिखरे अन्तराभ्यन्तरप्रदेश आकृष्टस्य धनुष आकृतिं स्मारयति स्म । प्रत्यन्तरालं पूर्वोक्ताया दीपपात्र्याः सहचरी प्रथुलतरा दीपपात्र्यवालम्बत । दीपपात्रीणां पादेषु स्फाटिकाशिलायाः खण्डैः निर्मितस्रजः वलयवदाचरन्ति स्म; मन्दमारुतेन युताः सत्यः किङ्किणीनादं कुर्वन्त्यश्च बभूवुः । मण्डपस्य तले माधवशर्मणो गृहस्याग्रभागे गृह्यस्याग्नेर्निधानाय वेदिका परिकल्पितासीत् । अदूरे च तस्याः कन्यावरयोर्दम्पत्योरान्दोलनक्रियायै आन्दोलनं प्रच्छदपटेन सहितं प्रतिष्ठितं दृश्यते स्म । अन्यतश्च तले कटैश्चित्रकम्बलैश्चास्तीर्यत । मण्टपस्य द्वारेषु सगुच्छा रम्भास्तम्भाः अवनतैः शिरोभिः द्रष्टॄणां नमस्कारं रचयन्त इव भासन्ते स्म । स्थूणानां शिखरेषु मङ्गलम्

र्तय: सालभञ्जिका गन्धर्वीर्विडम्बयन्त्य: अम्लानस्रजो दधत्य अवर्तन्त । कविना निरूपयितुमशक्यान्यन्यान्यनन्तानि वितानानि मण्टपस्य शोभां स्वामिनो माधवशर्मणो धनसमृद्धिं च प्रकटयन्ति स्म । अस्य मण्टपस्य निर्मिति: विवाहदिनस्य प्राक्तनेन दिनेन समाप्तिमगच्छत् ॥

---

## पञ्चमं सूक्तम् ॥

---

वर्णितगुणे मण्डपे निर्मीयमाणे सति माधवशर्मा पूर्वेषामाचारमनुस्मरन्कुलदेवता ग्रामदेवता वास्तुदेवताश्चाराधयामास यथाकल्पम् । कुलदेवतासु मध्ये स्वकुलीना: सुचरितै: देवभूयं गता: साध्व्य: पुरस्क्रियन्ते । अतस्तासां प्रसादं लब्धुमादौ सुमङ्गलीप्रार्थनं नाम मङ्गलाचरणं शुक्रदिवसे माधवशर्मा समाचरत् । शुक्रस्य हि वासरस्तासां प्रीतिवर्धक: । अमुष्याराधनस्येतिकर्तव्यताया: प्रतिपत्तये तस्य परिपाटी संग्रहेणेह निदर्श्यते । गृहपतिनाऽनुमता पुरन्ध्री उक्तमाराधनं कुरुते । कल्पविदादिष्टे शुक्रवासरे गृहिणी प्रात: भर्तृमती: सती: तत्तद्गृहं प्राप्य देवतार्थे पूजां ग्रहीतुं वृणुते । यासां भर्तार: स्वभर्त्रा सह समानगोत्रा न स्यु: । देवभूयंगतानां साध्वीनामियत्ता न भवति । अतस्तासामर्थे निमन्त्र्यमाणानां सतीनामपि संख्याया न क्लृप्ति: । आचारे तु पञ्चभिरधिका विंशति: परा काष्ठाश्रियते । द्विसंख्याऽवरतमा । अस्मिन्विषये उपचयापचयौ आराधयितुर्गृहिण: सम्पदो रीतिमुद्दिष्टस्योत्सवस्य गुरुतां च अनुसरत: । निरुक्तं वरणं या या पुरन्ध्र्यङ्गीकरोति तस्या: फाले कुङ्कुमेन

रेखां वरित्री तनोत्यङ्गीकारस्य ज्ञापनाय। इत्थं वृताः सीमन्तिन्यः संगवकाले वरित्र्या प्रहितेन तैलेन स्वगृहेष्वावृते भागेऽङ्गान्यभ्यज्य यथाचारं स्नान्ति । अभ्यक्तां नारीं पुरुषः कदापि न वीक्षेतेति मनुर्विशिष्य निषेधति। अतः स्त्रीभिरभ्यञ्जनेन स्नानं पुरुषस्य दृष्टिगोचरतामनापन्ने देशे साध्व्यः कुर्वते । अभ्यञ्जनेन स्नानमनु मुखं ग्रीवां बाहू वक्षः गुल्फे पादौ च हारिद्रेण लिप्त्वा ताः पुनः स्नान्ति । यथा हारिद्रस्य लेपो मृज्यात् । अथ शुष्केणांशुकेन जलसेकं प्रमार्ज्य शुद्धे रक्ते शुष्केंऽशुके वसानाः सत्यः पूजाग्रहणाय वरित्र्या ग्रहं यान्ति । प्रागेवैतासां प्राप्तेर्वरित्री यथाकल्पं व्रतानि चरित्वाङ्कण एकस्मिन्भागे वेदिकां परिकल्प्य तां परिष्कृत्यालंकृत्य च तत्र परिष्कृतालंकृतस्य च फलकस्योपरि अहतं रक्तवर्णं वास उपवाससा सह निधाय तस्मिन्मङ्गलदेवताः पूजयति शोभनाक्षतैः कुसुमैर्हारैश्च। अमुष्या वेदिकायाः पुरोभागे द्रवीकृतेन नूतनस्य तण्डुलस्य पिष्टेन चतुरश्राभिर्लेखाभिरलंकृते स्थण्डिले भाजनतया रम्भाया विशाले दले प्रसार्य तत्र भोज्यानि सपरिकराणि निधायाऽऽवाहिताभ्यो देवताभ्यो वरित्री निवेदयति । अथ वृतानां सीमन्तिनीनामुपवेशनाय फलकानि सादयित्वा तासां प्राप्तिं वरित्री प्रतीक्षते । अथ तासामागमनमनु वरित्री पादौ प्रक्षाल्य क्लृप्तेष्वासनेषु उपवेशयति। तासु मंगलदेवतां ध्यात्वा शोभनाक्षतैः पुष्पैश्च वरित्री ता अर्चयति । कपोलयोर्ग्रीवायां च चन्दनेनानुलिम्पति च। वृतानां भोजनेन हि देवतानामाराधनं समाप्नुयात् । अत एतयार्चया सीमन्तिन्यो भोजनाय वृता भवन्ति। एवमर्चितानां सीमन्तिनीनां पुरतः स्वलंकृते स्थण्डिले भाजनानि (अत्र कदल्याः पत्राणि) आधायाशितव्यानि स्वादूनि सुगन्धीनि

स्थिराणि स्निग्धानि नानाप्रकाराणि भक्ष्याणि भोज्यानि च वरित्री परिवेषयति । वृतानामासनानि तथा परिकल्पितानि यथा तत्र निषद्य भुञ्जानासु सीमन्तिनीषु वेद्यां वस्त्रस्योपर्यावाहितानां मङ्गलदेवतानां दृष्टिप्रसरो भवेत् । अथ भोजनाय निषण्णानां सीमन्तिनीनां दक्षिणं पाणितलं शुद्धाभिः शीताभिरद्भिः पूरयित्वा वरित्री समकालं अशनस्य प्रारम्भं प्रार्थयते । ते तां प्रार्थनामनुसरन्ति च सीमन्तिन्यः । ततस्ता यावदभीष्टमत्वरया भुञ्जते । सीमन्तिनीनां तृप्त्या मङ्गलदेवता आराधिता भवन्ति ॥

उक्तलक्षणं सुमङ्गलीनामाराधनं सम्पन्नो माधवशर्मा उदात्तेन विधिना समाचरत् । इदमत्र विमर्शमर्हति यासां नारीणां भर्तारः स्वाभ्यः पूर्वमेव कालधर्मं प्राप्नुवन्ति ता नार्यः स्वनुष्ठितैर्व्रतैः जन्मान्तरेषु पुण्यशीलं भर्तारमाप्य सुखं चिरमस्मिन्लोक उषित्वा भर्तरि जीवति सति कालधर्मं प्राप्यामुष्मिन्लोके देवभूयमयन्त इति पौराणिकाः ॥

---

## षष्ठं सूक्तम् ॥

---

मङ्गलदेवतानामाराधनस्यापरेद्युर्माधवशर्मा स्वकुलदेवताया वेङ्कटाचलपतेः समाराधनमकरोत् । वेङ्कटाचल इति द्राविडदेशस्योत्तरस्यां सीम्नि ख्यातः शिलोच्चयः प्रतितिष्ठति । स एव शेषाचल इति चाभिधीयते । आदिशेष आत्मानं षोढा वलयीकृत्य षष्ठाद्वलयात्फणमुद्धरति किमु इति शङ्कां स शिलोच्चय आतनोति । तस्य शिलोच्चयस्योपरितने शृङ्गे प्रतिकृत्यात्मना सन्निहितः श्रीपतिः सेवकानां

यद्यदभीष्टं तदचिरेणैव विदधातीति जनाः प्रतियन्ति । महता प्रयत्नेन षडचलानतिक्रम्य श्रद्धालवः आलयं प्राप्नुवन्ति इदानीमपि श्रियः-पतिं सेवितुम् । एष देवः केषांचित्कुटुम्बिनां कुलदेवता च भवति । येषां कुलस्याधिष्ठात्री देवता तेऽनेकेषु प्रसङ्गेषु तां देवतामुद्दिश्य स्वगृह एव द्वादशब्राह्मणान्वरित्वाराधयन्ति । विष्णोर्द्वादश नामानि मुख्यानि । तत्संख्यया ब्राह्मणास्तदाराधने प्रीयन्ते ॥

अमुमाचारमनुसृत्य शेषाचलमधितिष्ठन्तं श्रीपतिं माधवशर्मा ब्राह्मणमुखेन स्वगृहे आराधयामास । अथापरस्मिन्दिने ग्रामदेवतां शास्तारं च माधवशर्मा समतर्पयत् । शास्ता हि देवता वनवास-प्रिया न त्वालयप्रिया । प्रायशोऽरण्ये छायातरोर्मूले दूरे च जलाशयस्य तन्त्रविल्लिङ्गाकृतिं दृषदं शास्तुः पूजार्थे प्रतिष्ठापयति । शास्तारं ये सेवितुमिच्छन्ति ते रुद्रं देवमिव तमभ्यर्चयन्ति । तस्य सन्निधावनन्तान्ब्राह्मणान्भोजयन्ति च । अन्नशेषं भोज्यवर्गेभ्योऽन्येभ्यश्चान्नार्थिभ्यो यजमाना वितरन्ति ॥

इदं प्रकारं शास्तुराराधनं माधवशर्मा पूर्णेन तन्त्रविधिना-ऽकरोत् । अथापरस्मिन्नहनि वास्तुदेवतास्तासां हिताचरणेन माधवः समतर्पयत् । देवाः स्वयं नाश्नन्ति न च पिबन्ति । अश्नुवानान्पिबतश्च दृष्ट्वा तृप्यन्तीति हि श्रुतिः । अतः प्रभूतानि भोज्यानि पेयानि च ताभ्यो देवताभ्यो निवेद्य यथाऽवकाशं यथायोग्यञ्च पुरुषान् तैर्द्रव्यैः यावत्सौहित्यं प्रीणयति यजमानः । अमूदृशं सन्तर्पणं माधवशर्मा स्वपोष्यवर्गेषु शूद्रादिष्ववरजातिषु प्रधानीभूतान्नियोज्य तेभ्यः समृद्धं धनं धान्यराशिं च दत्वा तन्त्रविद्भिः कारयामास । तद्द्वारेण चाचण्डालं पोष्यवर्गानप्रीणयन्माधवशर्मा यजमानः । एवं प्रकारैः

कर्मभिः ज्योतिर्विदादिष्टस्योत्सवदिनस्य प्राचीनान्दिवसान्माधवशर्माऽत्यवाहयत् ॥

## सप्तमं सूक्तम् ॥

कन्यायाः पित्रा माधवेन विवाहोत्सवे सन्नह्यमाने सति वरस्य पिता चित्रगुर्न तुन्दं परिमृजन्नास्त । विवाहं प्रति कृतस्य समयबन्धस्य समनन्तरमेव लेखहारं प्रहित्य स्वदेशे वर्तमानान्बान्धवानिष्टांश्च चिकीर्षितस्य विवाहस्य वृत्तान्तं निर्नाय । अथ माधव इव स्वेष्टदेवताः चित्रगुः समाराध्नोत् । विशेषतः काञ्चीदेशाधिष्ठातृदेवताया वरदराजस्य श्रौतेन तान्त्रिकेण च विधिनोच्छ्रितया रीत्या चित्रगुराराधनं श्रोत्रियैस्तान्त्रिकैश्च कारयामास । काञ्चीपुरे वरदराज इति ख्यातिं भजन् श्रीपतिः दिव्यमङ्गलमयीं प्रतिकृतिमधिष्ठाय महितगुण आलये सन्निधिं कुर्वन्नास्ते । यं वरदराजं देवमप्पय्यदीक्षित इति दिशिदिशि कीर्त्यमानः अनेकासु कलासु निष्णातः बहूनां प्रबन्धानां निर्माता, उपश्लोक्यतमेन ग्रन्थेन छन्दोबद्धेन रसैः पूरितेन कवीनामाह्लादझर्याः प्रभवेन सभक्त्युन्मेषमस्तावीत् । यश्च देवो भक्तानामभीष्टप्रदातृषु देवेष्वग्रिमं पीठमवाप्याधितिष्ठति । उपयमकाले कन्यायै दातव्यानां दुकूलानां संग्रहे च चित्रगुः प्रयतमानो बभूव । विवाहस्याव्यवहितप्राक्तने दिवसे जानपदमाचारमनुसृत्य माधवशर्मणा सम्बन्धिना सोपहारसमर्पणं प्रार्थितश्चित्रगुशर्मा वरेणानुष्ठेयानि गृह्याणि कर्माणि स्वपुत्रेण पुरोधसाधिष्ठितेन कारयामास ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष भाद्रपदमासः । [संचि. ६.

## सुभाषितानि-॥

किसलयानि कुतः कुसुमानि वा
क्व च फलानि तथा नववीरुधाम् ।
अयमकारणकारुणिको न चे-
द्वितरतीह पयांसि पयोधरः ॥

तवैव प्रावीण्यं जलद जगदानन्दकरणं
यदम्भःपालीराहरसि खलसत्त्वाज्जलनिधेः
निसर्गक्षारास्ता नयसि च कथंचिन्मधुरता-
मथासारैस्तासां युगपदुपकर्तासि जगतः ॥

आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा
वात्याभिः परुषीकृता दश दिशः चण्डातपो दुःसहः ।
एवं धन्वनि चम्पकस्य सकले संहारहेतावपि
त्वं सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥

# गैर्वाणी ॥

(पूर्वतोऽनुवृत्तम् ।)

---

**रामशास्त्री**— भोः शास्त्रिवर्य, किमित्येवं कवीनामुपरि द्वेषमाविष्करोषि?

अपारे खलु संसारे कविरेकः प्रजापतिः ।
विनापि कामिनीसङ्गं कवयः सुखमासते ॥

इत्याद्यभियुक्तोक्तिः किं ते कर्णपथं नागता?

**कृष्णशास्त्री**— न मे द्वेषो मात्सर्यं वा कवीनामुपरि । परं तु एतेषां चारित्र्यशुद्धिर्नास्ति इत्यतो हेतोः तेषां फणितिषु न मे प्रामाण्यबुद्धिः ।

**राम**— चारित्र्याद्भ्रष्टः कश्चित्कविर्नामतो निर्दिश्यताम् ।

**कृष्ण**— तादृशेषु युष्मदीयः कालिदास एव प्रथमगणनामर्हति ।

**राय**— तत्र किं प्रमाणम्?

**कृष्ण**— सुप्रसिद्धं तस्य जीवनचरितमेवात्र प्रमाणम् ।

**राम**— कुत्र लभ्यतेऽयं कालिदासजीवनचरितनामको ग्रन्थः?

**कृष्ण**— नास्ति तादृशो ग्रन्थः । परं वृद्धपरम्परयागतः कर्णाकर्णिकया श्रूयमाणः तस्य कवेर्दासीगृहनिवासादिवृत्तान्त एव ।

**राम**— दास्या नाम किम्? का वा तस्या जन्मभूमिः?

**कृष्ण**— विशिष्य एतानि नामतो निर्देष्टुमशक्यानि । अथापि वेश्यालम्पटोऽभूदसौ कविरिति को वा न जानाति ।

राम— इह वटे यक्षस्तिष्ठतीति एकेन उच्यते चेदन्येऽपि तत्तथैवेति विश्वसन्ति । गतानुगतिको लोकः न लोकः पारमार्थिकः । अतो लोकप्रवादः न कदापि प्रमाणीभविष्यति विमर्शकानाम् ।

कृष्ण— कविरसौ मेघसंदेशे महाकालानुसेवनस्य वेश्याकटाक्षलाभ एव फलमित्युदाहृतवान् किल ।

राम— तावता तस्य वेश्यालम्पटत्वं कथमिवानुमीयते ?

कृष्ण— वेश्याप्रस्तावेन असौ कविरेकदारव्रतनिरतः श्रीरामभद्रमप्यतिशेते इति युष्माभिर्विश्वस्येत, न त्वस्माभिर्यथाश्रुतग्राहिभिः ।

राम— रामभद्रस्यापि बह्व्यः स्त्रिय आसन् इति आदिकविर्वर्णयति ।

कृष्ण— रे रे नास्तिकाधम, तव नास्तिक्यं श्रीरामभद्रमपि स्पृशति । न त्वमार्यैः संभाषणमर्हसि ।

राम— रामचरितावगमे रामायणमेवास्माकं प्रमाणम् । तत्रैवमनुवर्णितं चेत् किं क्रुध्यसि मह्यम् ?

कृष्ण— दिष्ट्या कोश अत्रैव वर्तते । प्रदर्शय मे तानि पद्यानि यत्र बहुवल्लभो रामभद्र इति वर्णयति प्राचेतसः ।

राम— 'पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिः संरंस्यसे वीतभयः कृतार्थः—'
इति जानक्या भाषितमिह प्रमाणं भवति विमर्शकानाम् ।

कृष्ण – हन्त! हन्त! अस्तमितविवेक इवालपसि । सीतेयमस्मिन्प्रकरणे शोकस्य परां काष्ठामधिरूढा यानि कानिचिदक्षराणि प्रलपति । स्वभावकातरं हि मनो वनितानां 'प्रतीपदर्शिन्यः' इति तासां नामधेयमन्वर्थयति ।

'शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥'

इत्यन्यत्रोक्तं किलानेनैव महर्षिणा ।

**राम—** तद्यास्तामयं संदर्भः । हनूमता समर्पितं भर्तुः करविभूषणं संप्राप्यातुलेन हर्षेण समन्विता देवी

'कच्चिन्न विगतस्नेहः प्रवासान्मयि राघवः ?
'कच्चिन्नान्यमना रामः कच्चिन्मां तारयिष्यति ?

इत्यादि पृच्छन्ती रामस्यान्यमनस्कत्वमभिशङ्कते किल ।

**राम—** किमिति पुनस्तस्या एव प्रतीपदर्शिन्या भाषितमस्मिन्विषये प्रमाणत्वेनोदाहरसि ।

'मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ।
तन्न सिध्यति सौमित्रे तवापि भरतस्य वा'

इति भक्ताग्रेसरं रामानुजमप्यधिक्षिप्तवती किलेयं । उक्तं च केनापि—

'कृते हि रेणुका मृत्युः त्रेतायां जनकात्मजा ।
द्वापरे द्रौपदी मृत्युः कलौ मृत्युर्गृहे गृहे ॥' इति ।

**राम—** रामस्य बहुस्त्रीकत्वनिर्णये न ममाभिसंन्धिः । परं तु महाकालस्य यात्रोत्सववर्णनप्रकरणे वेश्याभिः नखपदसुखान्वर्षाग्रबिन्दून्प्राप्य मेघं प्रति कृतज्ञता सूचितेति वर्णयन्महाकविरात्मनो वेश्यालम्पटत्वमवगमयतीति निःसंशयं भवद्भिर्विश्वस्यते; जानक्या कण्ठोक्तोऽपि रामभद्रस्य एकदारव्रतभङ्गो नाङ्गीक्रियते । अत्र भवता महाकविमधिकृत्य द्वेषः रामभद्रमुद्दिश्यानुरागश्च केवलमाविष्कृतौ भवतः ।

**कृष्ण—** सत्यम् । महाकालानुसेवनेन (अविकलं फलम्) अपवर्ग एव मेघेन लप्स्यते इति मल्लिनाथो वदति । तदेतन्मया विस्मृतम् । आधुनिकः कश्चन विमर्शकः व्याख्यातॄणां मार्गदर्शकमेनं अरसिक इति वैदिक इति कविहृदयानभिज्ञ इति च अधिक्षिपति । मल्लिनाथव्याख्यासाधनेनैवानेनः बाल्ये काव्यादिकं पठितम् । तथैवास्याचार्येण प्राचार्येणापि । सर्वमेतद्विस्मृत्य स्वयमद्याम्बरादवतीर्ण इव विचेष्टतेऽयं विमर्शकः । वेश्याकटाक्षलाभ एव महाकालानुसेवनस्य फलमित्याशयं विवृण्वता गौरीपादसरोजपरिचर्यायाः सुराङ्गनापरिष्वङ्ग एव परमो लाभ इति चोद्घुष्यतानेनैव कालिदासस्य कामात्मता विद्योतिता भवति ॥

**राम—** कालिदासं विहाय तत्काव्यविमर्शकमद्य तवोपालम्भः स्पृशति । काव्ये शृङ्गारवर्णनेन कविः कामपरतन्त्र इति कथं निश्चेतुं शक्यते? शृङ्गारादिरसानुवर्णनप्रकाराः प्राचेतसादेवानुशिक्षिता महाकविनेति वर्णयत्यसौ विमर्शकः । किष्किन्धाकाण्डे विप्रलम्भशृङ्गारमनुवर्णयन्महर्षिर्विटसार्वभौम इवालक्ष्यते ।

मल्लिनाथेनानुसृता सरणिः क्वचित्क्वचिन्न हृदयङ्गमा । कवेराशयाविष्करणे च कुत्रचित्प्रमाद उपलभ्यते इत्यादिकं सोपपत्तिकं निरूपितमासीद्विमर्शे । तावता विमर्शकस्य मल्लिनाथे गौरवं नास्तीति किमिति निश्चिनोषि । श्रीरामभद्रेणानुष्ठितो वालिवधः न प्रशस्यते इति हेतोर्नास्माकं राघवे बहुमानातिशयस्य न्यूनता ॥

**कृष्ण—** किमिति रामभद्र एव दोषानुदहरसि । नास्ति ते परलोकभीतिरिति मन्ये ।

'नाहमर्थपरो देवि लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ॥'

इत्युक्तरीत्या 'धर्मो विग्रहवान्रामः' इति जानन्नपि किमर्थं तस्मिन्नलीकदोषानुद्भाव्य, आत्मानं निरयपातोन्मुखं करोषि । परिहासस्य गुरवो न पात्रीक्रियन्ते विवेकिभिः ।

**राम** — सत्यम् । 'वृद्धास्ते न विचारणीयचरिताः' इत्युक्तमुत्तररामचरिते भवभूतिना । रामभद्रप्रस्तावस्तु त्वयैवोपक्रान्तः । उक्तिप्रत्युक्तिसरण्या सुदूरमाकृष्टा वयम । किं क्रियताम् ।

**कृष्ण** — कथमद्यापि न शाम्यति परिहासः । 'अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं चाविनयस्य' इत्युक्तं केनचिद्भुजङ्गेन ।

**राम**— कोऽसौ भुजङ्गः ?

**कृष्ण**— उमापतेः भक्ताग्रेसरस्य नामधेयमावहन्कश्चन कविः ।

**राम** — न खल्ववगच्छामि कोऽसौ इति । अपि नामासौ रावणः ?

**कृष्ण**— दुश्चरितोऽपि वेदाभ्यासनिरतः खल्वसौ पौलस्त्यः । स हि काव्यगन्धमपि न जानाति ।

**राम**— राक्षसोऽयम् वेदाभ्यासनिरतः इति विप्रतिषिद्धमेतत् ।

**कृष्ण**— हनूमता राक्षसानां गृहेष्वग्निहोत्रादीनां अनुष्ठानं प्रत्यक्षीकृतमिति रामायणे प्रोक्तम । जन्मना विश्रवसः समुत्पन्नोऽयम् रावणः वेदज्ञ आसीत् । सामगानेन तरुणेन्दुशेखरमतोषयदिति च श्रूयते ।

**राम**— त्रिजगत्कण्टके रावणेऽपि गुणानुद्भावयसि न तु कविषु । कोऽयं त्वया भुजङ्गत्वेन निर्दिष्टः कविः ?

**कृष्ण**— बिरुदमिदं हर्षनामकाचक्रवर्तिनो लब्धमनेन कविनेति

श्रुतम् ।

**राम—** 'भुजङ्ग' इति बिरुदं कस्य स्पृहणीयम्? हृद्गतमखिलं स्वैरं कथय ।

**कृष्ण—** कादम्बरीति कश्चन पुण्यग्रन्थः श्रूयते किल । तस्य रचयित्रा हर्षचरिते चक्रवर्तिना बिरुदमिदमात्मनः प्रथमदर्शनावसर एव दत्तमिति वर्णितम् ।

**राम—** अहो! कविकुलतिलको भट्टबाणस्त्वया 'भुजङ्ग' इति निर्दिश्यते ।

**कृष्ण—** न हि न हि । अस्मत्प्रपितामहैः समकालिकेन हर्षवर्धनेन 'महानयं भुजङ्गः' इत्युक्तमिति अनेनैव स्वयशः प्रख्यापितम् ।

**राम—** हर्षचरितम् कादम्बरी इति च ग्रन्थद्वयं अपि नाम त्वया यदाकदाप्यवालोकि?

**कृष्ण—** शान्तं पापम् । न कोऽपि वैदिकमताभिमानी एतादृशं काव्यमवलोकनदानेनापि अनुगृह्णीयात् ।

**राम—** तत्र कीदृशं दोषमनुपश्यसि?

**कृष्ण—** एकं नरस्तुतिवर्णनपरम् । अन्यन्नामत एव दुष्टम् ।

**राम—** कादम्बरीति नामोच्चारणेनैव मद्यपायिनामेनसा संस्पृश्यते जन इति ब्रुवाणो भवान् कथमस्मिन् लोके सुखं जीवेदिति चिन्ता मामाकुलयत्यधुना । भवतो गृहिण्या नामधेयं कीदृशमिति ज्ञातुमभिलषामि ।

**कृष्ण—** अपूर्वोऽयमभिलाषः । किं तवानेन ज्ञातेन? अथापि कथयामि । को दोषः । अतिपावनायाः कवेरजाया नद्या नाम ध्रियतेऽनया ।

**राम**— हा प्रमादः ! 'नक्षत्रनामा नदीनामा वृक्षनामाश्च गर्हिताः' इत्यनुशिष्टमापस्तम्बेन ।

**कृष्ण**— (सभयम्) कावेरीति नामधेयमतिपावनं किल । किमर्थमिदं सूत्रकारेण गर्ह्यते ?

**राम**— 'नद्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः' इत्युक्तरीत्या नदीनामग्रहणेन 'बहूनामुपभोगार्हेयम्' इति स्मरणं कदाचित् भवेदिति तादृशनाम्न्यः वरणानर्हा इति सूत्रकारैश्चिन्तितं स्यात् ।

**कृष्ण**— धिगिमान्सूत्रकारान्! पतिव्रतोत्तमा किल मे सहधर्मचारिणी वसिष्ठपत्नीमप्यतिशेते । नामधेयेन दोषो भवतीति नाहं विश्वसिमि ।

**राम**— तर्हि कादम्बरीति नामकरणे किमिति भवता अरुचिः प्रदर्शिता ।

**कृष्ण**— नामेदं मर्षणीयं भवेद्यदि काव्येऽस्मिन्विषयवैलक्षण्यमुपलभ्येत ।

**राम**— कीदृशमिदं विषयवैलक्षण्यं नाम ?

**कृष्ण**— इह पुण्यश्लोकसंकीर्तनं नास्ति । आदावेव कश्चन शूद्रको नाम राजा प्रस्तूयते । कथा च न पुराणप्रसिद्धा । आख्यायिकायां चास्यां कस्यचिन्मुनिकुमारस्य तरलहृदयस्य अतिभूमिं गतां मदनावस्थां वर्णयन्नात्मनो गद्यग्रन्थकरणनैपुण्यमन्यादृशं प्रकाश्य भस्मनि हुतमनेनेति नितरां दूये ।

(क्रमशः ।)

॥ श्रीः ॥

# ॥ वेमभूपालचरितम्[1] ॥



विदितमेवेदं विश्वेषामपि विदुषाम्— यदुत संस्कृतसाहित्ये अतीव विरलान्येव गद्यकाव्यानीति । यतो गद्यकाव्यं तावत्कवेरभिज्ञतमस्याप्यखिलेष्वप्यंशेष्वसाधारणमवधानमवश्यमपेक्षते । अत एव मन्यामहे, गद्यकाव्यानां भूयसा नावतारः समजनि । तथा च 'गद्यं कवीनां निकषं वदन्ति' इति विलिखन्नालंकारिकवामनोऽप्येनमेवार्थमुक्तिभङ्ग्या साधु समर्थयते[2] । तादृशेष्वेव विरलतमेषु गद्यकाव्येष्विदमन्यतमम्, यदभिनवभट्टबाणविरचितं वेमभूपालचरितं नाम ॥

अत्र हि अभिनवभट्टबाणबिरुदधारिणा श्रीमता वामनेन, प्राचीनभट्टबाणेन हर्षचरिताभिधे गद्यकाव्ये श्रीमान् हर्षवर्धन इव, स्वोपजीव्यभूतो वीरनारायणापराभिधानः श्रीवेमभूपालः सरसतरमादिराजप्रभृति आकुमारकथोद्घातमखिलेन चरितेन वर्ण्यते ॥

अस्मिंश्च गद्यकाव्ये चत्वारः सन्त्युच्छ्वासाः । अयमत्र कथासंग्रहः—

पुरा किल सकलजगदात्मंभरेर्भगवतो गरुडध्वजस्य योगिजनमानसभवनमङ्गलदीपात् श्रीमतश्चरणकमलादवतीर्णो वर्णश्चतुर्थः

1 Published at the Sri Vani Vilas Press, Srirangam. **Price. Rs. 2**

2. विस्तरस्त्वत्र श्रीवाणीविलासमुद्रायन्त्रालयमुद्रितायां वासवदत्ताभूमिकायामनुसंधेयः ।

क्रमेण पृथिव्यां प्रथिमानमयासीत् । तत्र खलु समजनि पुरोगमः पुण्यश्लोकानां कामाभिधानो नराधिपः । तेन च कामपालनिभेन कामभूपालेन विधिवदनुपालितो बभूव समुपचितसकलधर्मलिङ्गस्त्रिलिङ्गो नाम जनपदः । तत्र खलु तस्य राज्ञो राजधानी बभूव समस्तभुवनप्रशस्तरामणीयका अदङ्किनामधेया नगरी ॥

तस्यां च पुरि निवसन् पुरन्दरप्रतिमः पूरितार्थिजनकामः कामनृपतिरेकनगरनिर्विशेषमशिषदशेषमवनिचक्रम् । तस्माच्च मार्तण्डादिव मानवो वंशः, चन्द्रमस इव पौरवः संतानः, प्रवर्धमानः प्रससार महीतले महान्वंशः ॥

तत्र च बभूव क्रमेण मान्धातृभरतपृथुभगीरथदुष्यन्तदुन्धुमारदशरथदिलीपप्रतिमो राजा प्रोल्लभूपतिर्नाम । स खलु बाल एव राजा भुजेन अङ्गदमकरिकानिर्विशेषमधारयदष्टादशद्वीपवतीं वसुमतीम् ॥

तस्मिंश्च राजनि शासति चतुरर्णवमेखलां वसुंधराम्, कदाचित्सुतनुसुरतनाटिकासूत्रधारः प्रादुरासीद्वसन्तसमयः । तस्मिंश्च विकस्वरपिकस्वरे कूलंकषरागसागरे विकासमासेदुषि वसन्तसमये, नरपतिराखेटककौतुकी सचिवसंमतः, जङ्घाजवविजितकुरङ्गं तुरङ्गमधिरुह्य विश्वश्वापदशरण्यमरण्यं यात्वा, चकार शिथिलाङ्गान् सारङ्गान्; मरुक्षितिषु तरक्षूनन्वियेष; शरभाणां चतुरधिकानि पदानि चत्वारि चिच्छेद; सिंहसरणिषु दृष्टिं बबन्ध; मार्गरुधो लुलाव भल्लूकान् ।

तस्मिंश्च विरतप्राये मृगयाकोलाहले, धरणीपतिः परिसरभुवि विहरन्तमभिमततृणचरणमुदितमाश्चर्यदर्शनमालोकयामास हरिणम् ।

दृष्ट्वा च तं विस्मयस्मेरमना राजा 'तुरगेन सरभसमनुपत्य हनिष्यामि महेषुणा हरिणमेनम्' इति सज्यं धनुरुद्वहंस्तदनुगामी जगाम । अतिदूरमाकर्षन् राजानमाशुगपथातिलङ्घी हरिणः क्षणादेव कमनीयं कमप्यारामममगाहत ।

राजापि तदनुगामी तदुद्यानमासीदन्, आरामरामणीयकाकृष्टहृदयः, फलिनान्पादपान्वल्लीवलयानि च विलोकयन्, चित्रीयमाणेन चेतसा विस्मृतहरिणगतिस्तिष्ठन्, तदा तत्कालतरलितशिखाभिर्लताभिः कृतशिरःकम्पमिव श्लाघ्यमानमनाघ्रातपूर्वमतिमनोहरमङ्गनाङ्गपरिमलमुद्वहन्तं कमपि पवमानमभिजिघ्रन्, 'हृदयहारिसौरभः समीरः कुतोऽयम्' इति तदुत्पत्तिमन्वेषमाणः, कर्णमधुस्यन्दि हिन्दोलगानं शृण्वन्, तदनुसारेण गन्तुमनास्तुरगादवतरन्, कस्यांचिदासन्नतरुशाखायामासक्तकुशमश्वमवस्थाप्य, कौतुकप्रणुन्नेन मनसा उपवनमध्यं प्रविवेश ॥

तत्र च नातिदूरे वासभवनमिव वसन्तस्य किमपि बालतरुषण्डमालोक्य तदभिमुखो गच्छन्, आहूयमान इव हिन्दोलगीतेन, प्रेर्यमाण इव कौतूहलेन बालतरुषण्डमध्यमासीदन्, तत्र पुनरासेचनकदर्शनं मधुसमयबालमित्रं मधुकरपुञ्जगञ्जागृहं कमपि बालसहकारमद्राक्षीत् ।

अथ तस्य शाखावलम्बिनीमरुणमणिशिलोत्कीर्णां डोलामधिरूढाम्, माणिक्यभूषणमरीचिजालकारुणिताङ्गीम्, अखिलेन्द्रियाह्लादकारिणीम्, माधुर्यजन्मभूमिम्, कांचन काञ्चनगौराङ्गीं कन्यकामपश्यत् ॥

ततो नरपतिः 'अहो पूर्वकृतस्य पुण्यस्य कर्मणः परिणामः ।

यस्मादनिवारितमनेन चक्षुरञ्जलिना मधुरमधुरा कन्यामयी कापि सुधा पीयते । ब्रह्मणो नूनं स्वर्गवधूसर्गपूर्वाभ्यसनेन सृष्टिनैपुणी जाता । अन्यथा कथमीदृगवयवनिर्माणकौशलं घटते' इति विचिन्तयन्, पुङ्खानुपुङ्खनिपतितमदनशरकुसुमनिकरसौरभसुखमनुभवन्निव दरमुकुलितलोचनः पश्यन् परवशो बभूव ॥

ततस्तासु कन्यकासु संभ्रमोत्तानितैर्नेत्रैर्नृपतिमालोक्य विस्मयाक्षिप्तचेतःसु स्थितासु, राजकन्यका सा डोलाधिरूढैव मसृणमुकुलितापाङ्गेन किंचिदाकुञ्चितभ्रूलतेन विस्मयोत्तानतारकेण भावगर्भितेन विस्मृतनिमेषेण चक्षुषा राज्ञो लावण्यामृतपूरमापिबन्तीव, हृदयमाकर्षन्तीव, स्वहृदयमर्पयन्तीव, मुषितेव मनसिजेन, आचान्तेव रागेण, चिरं तिष्ठन्ती, हिन्दोलगानमनाकर्ण्य, सखीजनमनालप्य, प्रसाधिकामनवलोक्य, केवलं डोलापीठकनकमयरज्ज्ववलम्बमात्रेण गात्रं स्थापयन्ती, पुरः प्रसृतेन डोलापीठेन तदन्तिकमनुरागेणेवाकृष्यमाणा, अपसर्पता च कन्यकाजनसहजया व्रीडया पश्चादिव नीयमाना, मुहुरासन्नबालाशोकमञ्जिणा ताडयन्ती, मुहुश्चम्पकमञ्जरीमाजिघ्रन्ती, मुहुः संवाहिकायाः स्कन्धे करं विन्यस्यन्ती, दर्शितत्रिभङ्ग्या दृशा स्मितविकसितकपोलं विलोकयन्ती स्थितवती ॥

दृष्ट्वा च युवानमवनिपालम् 'अहो स्रष्टुः सृष्ट्यतिशयः; यस्मान्निष्पन्नमिदमखिलातिशायि लावण्यम् । सर्वस्मिन्नपि जगति सौन्दर्यसारनिधेरमुष्य नान्योऽस्ति सदृशः पुमान् । अस्ति यद्ययमेव मुकुरतले प्रतिबिम्बितः, इति चिन्तयन्ती राजकन्या, आरणितभूषणकलापकमनीयम् आसन्नसखीसत्वरदत्तहस्तावलम्बम् अवततार डोलाया धरणीतलम् ॥

अवतीर्य च सखीजनधार्यमाणशिथिलावष्टम्भशरीरं तिष्ठन्ती, विगतनिमेषेण मनसिजगुरूपदिष्टान् अनन्यसंवेद्यान् तांस्तान्भावान्विवृण्वती लोचनेन तं राजकुमारं विलोकयन्ती तेन च विलोक्यमाना, विचेतनेव गतमपि कालदैर्घ्यं नाजानात् ॥

एवमन्योन्यानुरागरज्जुबद्धहृदययोरिवानन्यव्यापारयोः स्थितयोः पार्थिवकुमारीकुमारयोः, विस्मयाक्षिप्तचेतसि किंकर्तव्यतामूढे कन्यकाकुले विरतहिन्दोलगानानन्दनिष्यन्दे विरलीभवति डोलाविहारे, जृम्भमाणे चञ्चरीकरवे, निःसपत्नं प्रवर्तयति रागराज्यं भगवति मकरकेतने, मन्दमन्दं वहमाने मलयगिरिपवमाने, सफलीभवति मधुमासवैभवे, शृङ्गारमय इव विलासमय इव कुतूहलमय इव जायमाने समये, राजदर्शनकुतूहली तुरगपदानुसारेण समागत्य तदुद्यानमुपविशन्, केनापि पातालवर्तिना राक्षसेन गले गृहीतो विदूषकः 'भाव हतोऽस्मि, सर्वलोकशरण्य भुजबलभीम प्रोल्लभूपाल केनापि बीभत्सदर्शनेन रक्षसा भक्षयितुकामेन गले गृहीतोऽस्मि परित्रायस्व परित्रायस्व' इति वदन्मुक्तकण्ठमाचक्रन्द । राजा तु विदूषकाक्रन्दनमात्र एव राजकुमार्यामासक्तचित्तोऽपि शरणागतत्राणदीक्षिततया सज्यं धनुरादाय, तत्संगतं हृदयमपि बलादादाय, तादृशीं तस्याः स्थितिमपि चित्ते विलिख्य, 'सखे न भेतव्यम् । अयमहमागतोऽस्मि' इति ब्रुवन् सरभसमयासीत् ॥

## इति प्रथम उच्छ्वासः ॥

अनन्तरमपश्यच्च पुरस्तादञ्जनगिरिपुञ्जैरिव नरकनिकुरुम्बैरिव विरचितावयवम्, कुलगृहमिव कलिकल्मषाणाम्, जङ्गममण्डप-

मिव हिंसायाः कमपि कालसदृक्षं राक्षसम् ॥

तदनु दिनकरपरमाणुकोटिभिर्निर्मितमिव तेजसा प्रभवमुद्वीक्ष्य महीक्षितम्, तस्य पार्थिवस्य महानुभावतामालोक्य, चित्रीयमाणचेता विदूषकं विसृज्य 'राजन् पुण्यश्लोकस्य तव दर्शनेन त्याजितराक्षसभावोऽस्मि । किंचात्र लीलोद्याने या किल कन्यका दृष्टा, सा तु महाभागा भविष्यति तव वीरप्रसूर्वधूः । अस्याः प्रसूतिरविच्छिन्नप्रसरा पालयिष्यति पयोधिमेखलां पृथिवीम्' इति निवेद्यान्तरधात् ॥

गते च राक्षसे वेपमानसर्वावयवं विदूषकमाश्वास्य, दत्त्वा च धनुर्विगतभयस्य तस्य हस्ते, स्कन्धे करं विन्यस्य तस्य निवर्तमानो मेदिनीपतिर्लीलाविहारभूमिमासाद्य तत्र तामदृष्ट्वा ताडित इव वज्रेण विह्वलीभवन्बलवद्दूयमान इतस्ततो बभ्राम ॥

'स्वामिन्, सहजमुत्सृज्य धैर्यं कृत्याकृत्येषु किमपि न जानन्निव लक्ष्यसे' इति विदूषकेणोक्तो विभुः, हरिणानुगमनमारभ्य विदूषकविषादाक्रन्दश्रवणावधि निखिलमपि वृत्तजातं निःशेषतो निवेदयामास ॥

एवमभिहिते च विदूषके 'आः ज्ञायते राक्षसेनोक्ता कन्यका खल्वियम् । किं च सत्या भवन्ति तादृशां वाचः । किंनिमित्तं सुखोदर्केऽपि कार्ये वितर्कः क्रियते । सा किल कल्याणलक्षणा कन्यका लक्ष्मीरिव नारायणस्य भवतो हृदयग्राहिणी भविष्यति' इति वदति, 'राक्षसोऽपि तदात्वप्रियं यत्किमप्युक्तवान् । कथमिव तस्याः पुनर्दर्शनं घटते' इति प्रतिवदति च राज्ञि, दशरथसुतविपुलभुजबल-

भज्यमानभर्गधनुर्ध्वानभाङ्गिभयंकरा जजृम्भिरे सेनापटहभांकाराः ॥

ततो विदूषकेण 'राजन्, मन्ये त्वदन्वेषि सैन्यमायाति । परिणतप्रायो दिवसः । आरुह्यतां तुरङ्गः' इति बलात्प्रेर्यमाणो राजा स्वपुराभिमुखं प्रतिष्ठमानः, क्रीडाकरिकुलकर्णतालपवनकम्पिताङ्गण-चम्पकलताकुसुमकेसरविसरधूसरमात्मभवनं प्रविवेश ॥

अथ नरपतिर्विदूषकेण सह कन्यकागतमेव किमपि चिन्तयन्, प्रबलया मदनवेदनया क्रीडाचक्रवाकैः सममुदश्रुरुन्निद्रलोचन-स्तां क्षपां क्षपितवान् ॥

तदनु चक्रवाकमिथुनानन्दनाडिंधमे समुत्पतति हरिदश्वे, राजा कथंकथमपि निर्वर्त्य तत्कालसमुचितां क्रियाम्, आरूढतुरगः कतिपयाप्तजनपरिवृतो विदूषकेण सह मृगयाव्यपदेशी पुनरपि तद-न्वेषणाय लीलोद्यानं प्रत्ययासीत् ॥

ततस्तमेव डोलाविहारदेशमासाद्य तत्र तामदृष्ट्वा 'हा कष्टमापतितम् । पूर्वेद्युरनुभूतमवलोकनादि स्वप्नविलसितमिव विभाव्यते । अतः परं किं करोमि । क्व गवेषयामि । किं कार्यम् । क उपायः । का गतिः । हा हतोऽस्मि' इति विलपन्, अदूरत एव अतिमनोहरमखिलेन्द्रियाह्लादनं किमपि कमलसरो दृष्टवान् ॥

तदनु वसन्तवासररमणीयासु तस्य कमलसरसस्तीरस्थलीषु तां हरिणलोचनामन्विष्य विचरन्, तत्र वसन्तवासभवनस्येव कमनीयस्य कस्यापि लतामण्डपस्य मध्यभागे कलितशोषविरसकह्लार-कुमुदकुवलयदलपरिगतं लुलितलुलितं किमपि शयनीयतलमद्राक्षीत् ।

दृष्ट्वा च तत् 'स्मरपरितापशंसिनी किसलयशय्येयमस्या एव'

इति निश्चितधिया कस्या इति च संदिहानेन चेतसा विचिन्त्य, तत इतः पश्यन्नन्तिकभुवि विचित्राकृति किमपि चित्रफलकं पश्यन्, तदादाय बलवदालोक्य हर्षपरवशस्तस्मिन्नात्मानमभिलिखितमजानात् ॥

ततो राजा तदभिमुखचलितहृदयतयेव चेतनाशून्यत्वमुद्वहन्, तत्रैव लतामण्टपे पतन्, कमलकुमुदकुवलयकह्लारदलैर्विरचिते शयने शाययता मकरन्दलववर्षिणीभिः पाटलीकुसुममञ्जरीभिः संचारयता पवनमानने विदूषकेण शनैरपगतमूर्च्छश्चक्रे ॥

तस्मिन्नेव समये सख्या मदनतापवैचित्त्यविस्मृतं चित्रफलकमादातुकामेन मनसा सत्वरपदमापतन्ती परिचारिकाद्वितीया तस्याः सखी समाजगाम ॥

तां दूरत एव दृष्ट्वा पार्थिवकुमारोऽपि कुसुमशयनात्सरभसमुत्थाय, सविनयमंसस्रंसमानावतंसं प्रणमन्तीं समीपे तामुपवेश्य 'आयुष्मति! अपि कुशलिनी ते सखी ससखीजना' इति प्रणयपेशलमपृच्छत् ॥

तच्छ्रुत्वा सापि 'कथमिव कुशलिनी सा प्रत्यक्षतः प्राणिनः प्राणरक्षाधुरंधरे त्वय्यप्रसन्ने' इति वदन्ती 'कथय भद्रे तव सख्याः कुशलेतरस्य कारणम्' इति राज्ञा पृष्टा 'तद्विदितमेव देवेन' इति कथयन्ती 'इयं कस्य' इति पुनश्च पृष्टा प्रत्यवादीत्—

'अस्ति दक्षिणापथे विक्रमसिंहाभिधानायां नगर्यां चतुर्थान्ववायचक्रवर्तिनो भूपतेः स्कन्देन दत्ता अनन्तगुणलक्षणा अनन्ताख्या सुता ॥

(क्रमशः)

# माणवकानुवाकः ॥

( पूर्वतोऽनुवृत्तम् । )

---

अथ व्युष्टायां उषसि वरः सुमतिशर्मा विवाहदीक्षायै वपनमाचरत् । इदानीं वरो ब्रह्मचारिणो वेषमाचारं च विसृजति । गृहीव वपनमाचरति । उपसंव्यानमुत्तरीयं च धत्ते । गात्रं चन्दनेनानुलिम्पति । तिलकेन फालं मण्डयति । अञ्जनेन चक्षुषी अनक्ति । पुष्पस्रजा शिखां वेष्टयति । ग्रीवां हारेणासज्जयति । मुकुरे आत्मानमीक्षते च । इमाः क्रिया गृहस्थाश्रमे वरस्य प्रवेशं सूचयन्ति । एतत्सर्वं चरित्वा सुमतिशर्मा कन्यामादातुं कल्याणमण्डपं प्रति यातुं प्रावर्तत । यत्र कन्यायाः पिता माधवः स्वस्यागमनं प्रतीक्षमाण आस्ते स्म । अस्मिंश्च सन्दर्भे जनानां विनोदकारिणी काचन छलप्रवृत्तिरनुष्ठीयते । कन्यां परिणेतुं विवाहमण्डपं प्रति गमने प्रक्रान्ते सति, वरस्तदुत्सृज्यान्यदाचरति । विविधैर्विधिभिर्निषेधैश्चोपरुद्धं गृहस्थाश्रममिदानीं विद्विषन्निव नटति । उपानहौ पादयोः छत्रं वामहस्ते वैणवं दण्डं दक्षिणे च गृहीत्वा वेष्टितशिराः सत्पाथेयं वामांसे आसज्य दूरयात्रां प्रस्थित इव व्रजति । हित्वा च तां दिशं यतः कल्याणमण्डपं वर्तते । तथा व्रजन्तं वरं दृष्ट्वा कन्यायाः पिता स्वजनैस्तं प्रार्थयते । मम कन्या तुभ्यं दीयते । प्रवासं मा व्राजीः । कन्यां परिणीय सुखं चिरं वसेति । तां प्रार्थनामनुसरन्निव वरः प्रतिनिवर्तते । यात्रिकस्य वेषं च परित्यजति ॥

इत्थंप्रकारं सर्वं सुमतिशर्मा वरो नटित्वा पितृभ्यां बन्धुभिरुपद्रष्टृभिः परिवृतः पुरन्ध्रीणां मङ्गलगानान् तैर्यत्रिकघोषांश्च शृण्वन्कल्याणमण्डपमगात् । यत्र श्रोत्रिया अन्ये च महाजनाः पुरन्ध्रच्य उत्सवस्य वेलां प्रतीक्षमाणा अवर्तन्त । वरस्य मण्डपे प्रवेशवेलायां वेदघोषा भूयो मङ्गलगानानि च प्रावर्तन्त । वेणून्दध्मुः । मार्दङ्गिकैर्मृदङ्गा आहन्यन्त । अन्यानि च मङ्गलाशंसीनि विविधानि वाद्यानि श्रोतॄणां मनांस्याह्लादयन् । आगतं सुमतिशर्माणं वरं माधवशर्मा पत्न्या सहार्घ्यादिभिः समच्यापूजयत् । तदनु पत्न्या सहासन उपविश्य गौरीनाम्नीं कन्यामङ्के निधाय प्राङ्मुखः सन्प्रत्यङ्मुखाय वराय सुमतिशर्मणे दातुं प्रारेभे । आदौ च सदस्यान्सर्वानशब्दं रक्षितुं प्रार्थयामास । तत्समकाले गीतानि वाद्यघोषाश्च समस्थाप्यन्त यथा कल्याणमण्डपं निःशब्दमभवत् । ततः पुरोधसोपदिष्टो माधवशर्मा स्वस्य गोत्रं पितामहादिशर्माणि चेत्थमुच्चैरकीर्तयत् । आत्रेयगोत्रोद्भवां मुकुन्दशर्मणः प्रपौत्रीं चक्रधरशर्मणः पौत्रीं माधवशर्मणः पुत्रीं गौरीनाम्नीमिमां कन्यामिति निगद्य वरस्य गोत्रमन्वकीर्तयत् । गविष्ठिरगोत्रोद्भवायेति वरस्य गोत्रोच्चारणसमनन्तरमेव सदस्येषु श्रौतज्ञः कश्चनोपश्रोता सहसोत्थायैवं न्यषेधत् । विरम विरम भोः पुरोधः । इमौ कन्यावरौ समानगोत्रजौ । कथमनयोः [illegible]हः कार्यते । इति उच्चैरुद्घोषयन्हस्तेन रुन्धन्निवागत्य दक्षिणं हस्तं प्र[illegible]सार । पुरोधसः श्रौतज्ञस्य च क्रोधाक्षरैः विशङ्कटः कलहः समजनि । त्रिप्रवरेषु एकेन मुनिना न सगोत्रतेत्येकः । एकप्रवरसाम्येपि सगो[illegible]तेत्यपरश्चाब्रवीत् । उभावपि प्रमाणतया वाक्यानि न्यदर्शयताम् । इदमत्रावगन्तव्यम् । आत्रेयगोत्राः, आत्रेय, आर्चनानस, श्यावाश्व, इ[illegible] त्रयार्षेयप्रवराः । गविष्ठिरगोत्राश्च,

आत्रेय, गविष्ठिर, पौर्वातिथ, इति त्रयार्षेयप्रवराः। उभयत्र गोत्रयोः प्रवरे आत्रेयः साधारणः। अतोऽत्र विवादः अनयोरेवं विघटमानयोः सतोः विवादमुपशृण्वंश्चित्रगुशर्मा इत्थमवोचत्। कर्मणि प्रस्तुते अतर्कितं झटित्याविर्भूतं विघ्नमिव प्रतिभान्तं वीक्ष्य विवाहं नानुमन्यामहे। अहो माधवशर्मन् अस्यां स्मर्तृपुरोधसोः विप्रतिपत्तौ जाग्रत्यां तत्वनिर्णयादिविचारो न प्रवर्तितव्यः। अस्य स्मर्तुः प्रतिषेध असाधुर्वा भवतु। आहोस्वित्साधुर्वा। ब्राह्मणस्य प्रतिषेधः स्वयमेव प्रक्रान्तस्य परिपूतविशुभं द्योतयति। अतो नास्माकमस्मिन्विवाहेऽभिरुचिः। इमे वयं निवृत्ताः स इति। एवमुक्त्वा चित्रगुशर्मा पुत्रेणान्यैश्चानुयायिभिरनुसृतः स्वस्य वसथं प्रतिपेदे। ततोऽपराह्णे कावेर्यास्तटे निषण्णं ग्रामान्तरमव्राजीत् संकल्पितं माखस्नानं निर्वर्तयितुमिच्छुः॥

माधवशर्मापि प्रदर्शितेन विघ्नेन संभाराणां संभरणं महतो धनस्य व्ययं स्वस्य चामात्यानां च महान्तं शरीरक्लेशं सर्वं निष्फलीकृतं विचिन्तयन्ननन्तरकर्तव्यतां न प्रत्यपद्यत॥

एवं माधवशर्मणि मूढचित्ते सति कश्चित्सर्वशास्त्रवित्तत्रा जगाम। यद्वृत्तं तच्छ्रुत्वा माधवस्य समीपमागम्य तं सान्त्वयामास। अहो आर्यात्र त्वया न विषदनीयमेतस्मिन्कार्ये। शकुनानि निपुणं परिचिन्तयता मया तवाचिरादेवानुकूलस्य फलस्य प्राप्तिर्ज्ञाता। अयं विघ्नो दैवसंमतः। तं मा चिन्तयतु भवान्। अस्मिन्मण्डप एव त्रिचतुरादिनादर्वाक्तव कन्याया उद्वाहो भविष्यति। वरः स्वयमेव एष्यति च। नात्र भवता किंचिदपि परिचिन्तनीयम्। श्वः परश्वो वा तव कन्यामर्थयमानो वरः सदृश आगामिष्यति। मम वचनं श्रद्ध-

धस्व । त्वया कृतं देवतानामाराधनं न व्यर्थीभविष्यति । 'न वै देवा नमस्कारमति...' इति हि श्रुतिः। नमस्कृता देवताश्च त्वयाराधिताः तुभ्यं प्रसीदन्त्यो वर्तन्त इति लक्षयामि । उपस्थितोयं प्रत्यूहः ताभिरेव प्रेषित इति मन्ये। चित्रगोः कुले काचन पितृदेवताबाधा प्रत्यवतिष्ठन्ती दृश्यते । अतोयं प्रत्यूह आगामिनं शुभं शंसतीत्युक्त्वा शकुनज्ञ अगात् । शकुनज्ञं तथ्यवचनं स्मृत्वा माधवः अर्धमपकृष्टमोहो बभूव । शकुनज्ञं च यथार्हमपूजयत् ॥

## अष्टमं सूक्तम् ॥

अथ तृतीयेह्नि अपराह्णे यात्रिकः कश्चिद्ब्राह्मणः माधवस्य कल्याणमण्डपमाजगाम । स च गम्भीरगमनेन सस्मितवदनेन धीरदर्शनेन महिततमयाऽऽकृत्या च स्वस्य कुलीनतामृद्धिमतां च शंसन्निवालक्ष्यत । पार्श्वतश्च तस्य सदृशाकृतिः विनीतवेषः वयःस्थतामारूढो ब्रह्मचार्यनुव्रजति स्म । त्रिचतुराः पुरुषाश्च तस्य पृष्ठत अन्वाययुः । एवं परिवृत आगन्तुकः कल्याणशालायाः शोभां निर्वर्णयन्माधवस्य गृहं प्रति प्रससार । एवमायातस्यागन्तुकस्य वीक्षणमात्रेण माधवशर्मा शकुनविदः प्रवचनं स्मरन्सोत्कण्ठं सहसोत्थाय प्रतिजगाम । आगन्तुकं सपरिवारं बहुमानपुरःसरं यथा तथा स्वगृहस्याङ्गणं प्रावेशयत् । अथ सर्वेषु सुखासीनेषु सत्सु कुशलप्रश्नपूर्वकं माधवो बभाषे । अहमद्य धन्योऽस्मि । यतो मां महाश्रोत्रियो महानुभावश्च त्वमतर्कितेन सन्दर्शनेन हर्षयसि । तव पादविन्यासेन मम गृहमद्य परिपूयते । विविदिषामि चाहं यन्मया तव साधनीयमस्तीति ॥

इत्थं सादरं सबहुमानं च परिपृष्टः परः स्वस्य कार्यसिद्धिमासन्नां मन्यमानः प्रत्याह । भो माधवशर्मन् । जानीहि मां दध्यङ्शर्माणं वसन्तं च भवानीनाम्नि पत्तने, यत्पूर्वपाश्चिमयोः पार्श्वयोः कावेरीभवानीभ्यां परिपूयते । यस्य च दक्षिणतः संश्लिष्यन्त्यौ नद्यौ सीमानमातनुतः । मम पुत्रस्यायुष्मतो रुचिदाशर्मणो विवाहाय ग्रामाद्ग्रामं गत्वा सदृशीं कन्यां गवेषयन्नवागमम् शोभनाङ्गी विदुषी कन्या तवास्ते । तस्या विवाहो गोत्रकीर्तनकाले निश्चितस्य वरस्य सगोत्रत्वं प्रख्यापयित्रा केन चित्स्मर्त्रा परिरुद्धो बभूवेति । ध्रुवं सदृशाय वराय तव कन्यां दातुमिच्छा वर्तत इति मन्ये । पान्थेभ्यश्चेदमश्रौषम् । त्वमात्रेयगोत्रोद्भवोसीति । अहं च भृगुगोत्रः । अतोऽस्मदपत्ययोः विवाहसंबन्धे सगोत्रत्वरूपदोषो न जागर्तीति । अतस्तव कन्यां मम पुत्राय वरीक्षा आगतोऽस्मि । पथिकेभ्यश्चेदमप्यधिगतोऽस्मि । तव कन्याया जनिकालिकमृक्षं राशिं लग्नं च यत्नेन विदित्वाऽऽप्तं ज्योतिर्विदमाहूय मत्पुत्रस्य जातकपत्रिकया सह पर्यालोचनेनानयोः ऋक्षादीनां परमा मैत्री वर्तते । अनयोरेव विवाहो वर्तिष्यत इति ज्योतिर्विदः प्रोक्त्या संजातविश्वासश्चाहमस्मि । यद्यावयोः संबन्धनिर्वृत्तौ तवाक्षेपो न भवति तर्हि तथा कर्तव्यमित्यभिलषामीति ॥

एतत्सर्वं श्रुत्वा माधवशर्मा बभाण । भो दध्यङ्शर्मन्! तव नामधेयं मया श्रुतपूर्वम् । त्वं महाश्रोत्रियो महानुभावश्चासीति मम श्रुतिपथं गतोऽसि । कृच्छ्रगतानां विशामुपकर्ता त्वदभ्यधिकः त्वत्समो वा दुर्लभ इति सर्वे जनाः कीर्तयन्ति । एतत्पत्तनस्था बहवः श्रोत्रियाः पूर्वस्मिन्काले त्वत्पित्रानुष्ठितेषु बहुदक्षिणेष्वनेकेषु यागेषु

आर्त्विज्यं चरित्वा पुष्कलानि हिरण्यानि बह्वीर्गाश्च दक्षिणाः गृहीत्वा सुखिन आसन्निति अमीषु ग्रामेषु प्रशस्तिर्भवति । एतादृशेन महापुरुषेण विवाहसंबन्धः कस्य न प्रियो भवेत् । नूनं मयाऽराधितानां देवतानां प्रसादवशादेव तव पुत्राय मत्कन्यां वरीतुमागच्छः । ज्योतिर्विदनुमते शुभे मुहूर्ते समयबन्धं करिष्ये ध्रुवमिति माधव आचख्यौ । तदानीं दधीचोऽनुयायिषु कश्चिदुत्थाय दध्यञ्चं न्यवेदयत् । इदानीमृषभो राशिः प्रवर्तते । यस्याधिपः शुक्रः नवमे राशौ बुधेन सह वर्तते । बृहस्पतिश्च सप्तमात्स्थानाद्वृषभमीक्षते । अगुणोऽपि वृषः श्रेष्ठ इति ज्योतिर्विदो वदन्ति । इदानीं वृषभस्य राशेः बहवो गुणाः सन्ति । अतः शुभस्य शीघ्रमिति न्यायमनुसृत्यास्यामेव वेलायां कृतः समयबन्धः फलवत्तां न व्यभिचरेदिति ॥

इदं च वचनमुपशृण्वन्माधवः तद्वचने श्रददधत् । तर्ह्यद्यैव समयबन्धं करवाणीति च अवोचत् । अथोचितान्संभारान्झटित्येव संभृत्य तद्ग्रामस्थान्महाजनांश्चाहूय स्वस्य पत्न्या बन्धूनां चानुमते यथान्यायं कन्याया दाने सन्धां चकार । नियमस्य सद्यः क्रियमाणतया तत्काले चरितुं शक्येन विधानेन सङ्करकरणमभूत् । वरस्य पितुर्द्वावाप्तौ द्वाभ्यां पुरन्ध्रीभ्यां समेतौ प्रत्यङ्मुखतयाऽऽसीनौ सन्तौ पितृभ्यां बन्धुभिश्चोपेतायाः प्राङ्मुखतया आसीनायाः कन्यायाः पाणौ मङ्गलगीतिषु तैर्यादिघोषेषु च प्रवर्तमानेषु सत्सु फलं प्रदाय प्रथमं वरस्य गोत्रं त्रिपुरुषं संकीर्त्य रुचिदाशर्मण अमुष्मै वरायेति निगद्य कन्याया गोत्रादीननुकीर्त्य गौरीनाम्नीमिमां कन्यां भार्यात्वाय वृणीवह इत्यब्रूताम् । माधवशर्मापि यथोक्तमनूद्य वृणाथामित्यब्रवीत् । एवं त्रिः प्रयुज्य प्रदास्यामीत्युच्चैर्माधवशर्माऽवोचत् ॥

अथ ब्राह्मणाः समवेताः स्वस्त्यस्तु, दीर्घमायुरस्तु एतद्वः सत्यमस्तु, इत्यनूद्य मङ्गलकालस्योचितान्मन्त्रानपठन् ॥

निरुक्तं नियममागूर्य माधवेन सम्बन्धिना परिकल्पितं स्फीतं विचित्रैरासनैः शयनाद्यैश्चोपकरणैरुपेतं परिजनसङ्घैः परिचर्यायामायत्तचित्तैः पालितं निवेशनं दध्यङ्शर्मा सपरिवारः सन्तुष्टहृदय इयाय । उपयमस्य पूर्वाङ्गतया कर्तव्यानामाचरणे प्रववृते च । माधवशर्माऽपि शकुनविदो वचनमामन्त्रफलं विमृश्य हृष्टरोमा सन् नूतनस्य संबन्धिनः प्रीतिवर्धकानुचितान्कल्याणसंभारान्भूयोऽपि संबभार । यथा दधीचः संबन्धिनः समृद्धिमनुसरेत् । ततस्तृतीयेऽहनि विवाहस्य कालं ज्योतिर्विदादिदेश । तदनुसारेण त्वरया युक्ताः सर्वे व्याप्रियमाणा बभूवुः । अथ विदुष्याः संजातमत्या गौर्या मनोवृत्तिरिदानीं कीदृशी बभूव । एषा हि शैशवात्प्रभृति पितृभ्यामतिवत्सलतया संवर्धिता क्षुद्रेऽप्यर्थे आशायाः प्रतिहतिं नाजानात् । स्त्रीणां योग्यासु कलासु, इतिहासे पुराणेषु स्मृतिषु गणितशास्त्रे गीतिविद्यायां काव्येषु व्याकरणे च सुशिक्षितासीत् । संजातबुद्धयः कन्या यद्यपि प्रायशः प्रथमं वरस्य संपदं रूपमाकृतिसौन्दर्यं च वीक्षन्ते । वरस्य वैदुष्यन्तु तासां दृष्टावुपसर्जनतयैव भाति । गौरी तु साधारणाभ्यः कन्याभ्यो विशिष्टा सती वरस्य वैदुष्यमेव प्रधानतयाऽवैक्षत । अन्ये गुणास्तस्याः दृष्टावानुषङ्गिका एव बभासिरे । प्रस्तुतो वरो रुचिदाशर्माऽऽनुषङ्गिकेषु पुरुषगुणेष्वनूनो यद्यप्यदृश्यत । वैदुष्यमपि तस्यान्यैर्गुणैरुन्नीयमानमभूत् । तथाऽपि तमर्थं विस्पष्टीकर्तुं गौरी स्पृहयालुर्बभूव । तदा किमकरोत्सा । इत्थमकरोत् । विवाहस्य नियम यदा झटित्येव चकार तदा स्वाभिला-

षस्य प्रकटनमप्राप्तकालममन्यत । अथ समयबन्धस्यानन्तरे प्रातर्वरस्य निकेतनं निपुणां स्वसखीं प्रेष्य तेन सह संभाषणेच्छया स्वगृहमानिनाय । अथ सखीसमक्षं द्राविड्या भाषया वरेण सह गौरी संबभाषे । रुचिदाऽव्यवह्रियमाणायां भाषायां याः कलाः तासु स्वनैपुण्यं प्राकटयत् । तेन वरस्य कलानैपुण्येन त्रिपादमिव सन्तुष्टा गौरी, आर्याणां या विद्या गैर्वाणी, तस्यामस्य वरस्य कीदृशी शिक्षेति अन्तः जिज्ञासमाना किञ्चिदिव तूष्णीमास्त । तथा वर्तमानां तां वीक्ष्य रुचिदा ऊचिवान् । भद्रे किमपि मां प्रष्टुकामेव प्रतिभासि । अविशङ्कं पृच्छेति । तच्छ्रुत्वा गौरी जगाद ! भोः सौम्य तवोदारता मां चपलयति । आर्याणां गैर्वाणी विद्या प्रशस्ततरा हीति । वरः प्रत्यूचे । 'आम् । ततः किमिति ।' तां चाधिकृत्य विद्यां किञ्चिदापृच्छेयमिति कन्या अवोचत् । वर आह पृच्छ स्वच्छन्दं भद्रे यदि ज्ञास्यामि तर्हि तवोत्तरं दास्यामीति । कन्या— तर्हि प्रसीद विभक्तीरेषां पदानां निरूपयितुमित्युक्त्वाऽमूनि चत्वारि पदानि पपाठ । विहस्य, विहाय, अहम्, कथम्; इति । शब्दशास्त्रे निष्णातो रुचिदा इमं क्षुद्रतमं प्रश्नं निशम्य चिन्तयामास । इयं विदुषी सती कथमेवं मामतिबालमिवाप्राक्षीदिति । भवतु, एवमस्या उत्तरं दास्यामीति निश्चित्य तां प्रत्यवोचत् । भद्रे विहस्येति पदं षष्ठीविभक्त्यन्तं जानीहि । विहायेति च चतुर्थ्यन्तम् । द्वितीयाविभक्त्यन्ते तृतीयतुरीयपदे इति । एवं प्रत्युक्ता ऋजुबुद्धिर्गौरी किञ्चिदिवोत्स्मयमाना कंचन कार्योपरोधं व्याजीकृत्य स्वमाकारं गोपयन्ती सत्यङ्गणान्तः प्रससार ।

( क्रमशः । )

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्षे आश्विनमासः । [संचि. ७.

## सुभाषितानि ॥



पानीयमानीय परिश्रमेण
पाथोद पाथोनिधिमध्यतस्त्वम् ।
कल्पद्रुमे सीदति साभिलाषे
महीधरे मुञ्चसि किं निमित्तम् ॥ १ ॥

वितर वारिद वारि दवातुरे
चिरपिपासितचातकपोतके ।
प्रचलिते मरुति क्षणमन्यथा
क च भवान् क पयः क च चातकः ॥ २ ॥

पयोद हे वारि ददासि वा न वा
त्वदेकचित्तः पुनरेष चातकः ।
वरं महत्या म्रियते पिपासया
तथापि नान्यस्य करोत्युपासनाम् ॥ ३ ॥

## गैर्वाणी ॥

(पूर्वतोऽनुवृत्तम् ।)

---

**राम**— काव्यमिदमनवलोक्य दोषोद्घाटनसाहसेन आत्मनो बुद्धिमान्द्यमेव त्वया प्रकाशितं भवति ।

**कृष्ण**— प्रथमं तावत्कथय कुत्रास्मिन्काव्ये पुण्यश्लोकसंकीर्तनमिति ।

**राम**— महेश्वरेण शिरसि निहितो लालितश्च भगवान्मृगलाञ्छनः पुण्यश्लोक एव किल ।

**कृष्ण**— कः संशयः? द्विजराजः खल्वसौ ।

**राम**— नरपतिरयं नाम्ना शूद्रकः साक्षाद्विजराजस्यावतार एव ।

**कृष्ण**— कथमिदं ज्ञायते?

**राम**— कविनैवोत्तरभागे तथा प्रोक्तम् । तमेवाशयं मनसि निधाय शूद्रकं लोकपालैः साक्षान्नारायणेन चादावेवोपमिमीते भट्टबाणः ।

**कृष्ण**— नाविष्णुः पृथिवीपतिरिति प्रमाणमवलम्ब्यैवं वर्णितं स्यात् । नरपतिरसौ आश्रयो रसिकानामन्तरान्तरा स्वयमारब्धमृदङ्गवाद्यः संगीतकप्रसङ्गेन, कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन च कालमतिवाहयन्कथं पुण्यश्लोको भवितुमर्हतीत्यद्यापि मे संशयो हृदयान्नापयाति ।

**राम**— किं तावता? स हि राजर्षितुल्यः तृणमिव लघुवृत्ति स्त्रैणमाकलयासेति किल वर्णितं कविना ।

**कृष्ण**— तथा चेत्पुण्यश्लोक एवायम् ।

**राम**— पुनश्च अगस्त्याश्रमवर्णनावसरे 'यत्र च दशरथवचनमनु-

पालयन्नुत्सृष्टराज्यो दशवदनलक्ष्मीविभ्रमविरामो राम:—' इत्यारभ्य 'जनकतनया च.... रामनिवासदर्शनोत्सुका पुनरिव धरणितलादुल्लसन्ती वनचरैरद्याप्यालोक्यते' इत्यन्तं अतिरमणीयया सुधास्यन्दिन्या वाग्धोरण्या श्रीरामकथानादं श्रावयन् अत्यन्तं वन्दनीयो भवति भट्टबाणः ।

**कृष्ण**— कवेरस्य भक्तिः कां देवतां विषयीकरोति ?

**राम**— तरुणेन्दुशेखर एवास्याचञ्चला भक्तिरासीदिति ज्ञायते ।

**कृष्ण**— कथमिव ?.

**राम**— कैलासवर्णनावसरे 'अद्राक्षीदमलमुक्ताशिलाघटितालङ्कमशेषत्रिभुवनवन्दितचरणं चराचरगुरुं चतुर्मुखं त्र्यम्बकम्' इति भक्तिपरवशो गायति भट्टबाणः ।

**कृष्ण**— न मया ज्ञातपूर्वमिदम् । सत्यमिहात्मनो नामानुरूपं गायति कविः । अथ पुनः किंनिमित्तमसौ भुजङ्ग इति हर्षेण निर्दिष्ट इति जिज्ञासे ।

**राम**— केचनातत्त्वविदः आत्मनश्चारित्रविषये संदिहानाः असूयया 'महानयं भुजङ्गः' इति राजसंनिधौ उपह्वरेऽकथयन्निति विज्ञायास्मिन्सन्दर्भे व्याजमुत्पाद्य निपुणमुत्तरं दत्तवान् 'का मे भुजङ्गता' इति ।

**कृष्ण**— कीदृशमत्रानिपुणमुत्तरमनुपश्यसि ?

**राम**— का मे भुजङ्गता ? का मे भुजं गता ? कामे भुजङ्गता इत्यनेकार्थपदविन्यासरमणीयया सरण्या— नाहं भुजङ्गः, न कापि वनिता मया आश्लिष्टा, कामपरे खलु तादृशी मनोवृत्तिः— इति उत्तरमदान्महाकविः

**कृष्ण**— हन्त! ज्ञानराशिरयं कविः शास्त्रपरिचयं विनैव साहित्यरसास्वादेन कालमनीनयदिति दूयते मे मनः ।

**राम**— यायजूकानां कुले जातोऽसौ कविः मीमांसायामेवात्मनो रसानुभवमन्यादृशमनुवदति हर्षचरिते ।

**कृष्ण**— काव्यज्ञानां मीमांसकानां च मिथो विरोध एव खलु । तदिह विरुद्धधर्माणां सामानाधिकरण्यमुपश्रुत्य चित्रीयते मे चेतः ।

**राम**— काव्यज्ञमीमांसकयोर्मिथो विरोध इति कथं त्वयावगतः?

**कृष्ण**— 'मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्यादरात् काव्यालङ्करणज्ञमेव कविताकन्या वृणीते स्वयम्' इति व्याहरन्बिल्हणः काव्यज्ञमीमांसकयोर्मिथः कलहमजीजनत् ।

**राम**— मीमांसकानां मनः काव्यादिषु सर्वथा नानुरज्यति इत्येव बिल्हणेनोक्तम् प्रकारान्तरेण । 'दूरात्संकुचितेव गच्छति पुनश्चाण्डालवच्छान्दसम्' इति वदन्नेष कविः 'तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेदतां वेदजडः स वक्राम्' इति श्रीहर्षमतमेवानूदितवान् । एतादृशाशयाविष्करणेन वैदिकानां मीमांसकानां वा कवीनामुपरि द्वेषः कथमाविर्भवेत्?

**कृष्ण**— मीमांसका वैदिकाश्च भगवतीं त्रयीमुपासते । कवयश्च वरवर्णिनीम् । द्वयोरपि मैत्री कथं घटेत?

**राम**— भोः, किमिति वृथा मदीयां वाचमेवानुवदसि । कवितावरवर्णिनी मीमांसकवैदिकयोरात्मनः प्रसादं न दर्शयति । तावता कथमुभयोर्द्वेषस्यावकाशः? कविभिरुपास्यमाना वरवर्णिनी केवलं मनोमयी राजति । वेधसा सृज्यमाना मांसवसादिविकारभूता

मानुषी तस्याः शततमीं कलामपि न स्पृशति, इत्ययं विषयस्तव मनसोऽप्यगोचरः । तत्किमित्यत्र वृथा कण्ठक्षोभं वहसि?

**कृष्ण**— न खल्ववगच्छामि । मनोमयी वनिता न कदाप्यस्माभिराचार्यैर्वा साक्षात्कृता । ब्रह्मसृष्टेर्बहिर्भूता काचिदस्तीत्यश्रद्धेयमिदं वचः ।

**राम**— 'वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश' इत्यनेन वाक्येन कीदृशो बोधो जायते भवताम्?

**कृष्ण**— उन्मत्तप्रलापसदृशोऽयमसंबद्धार्थः पदसमूहः— इति बोधः ।

**राम**— केनचिद्विरहिणा अनिलमुद्दिश्य एतादृशी प्रार्थना क्रियते इति सुस्पष्टोऽर्थः कथमसंबद्धः स्यात्?

**कृष्ण**— वातेनाचेतनेन 'कास्य कान्ता? कुत्रेयं वसति? इति स्वयमेवान्विष्य प्रथमं तत्स्पर्शेनात्मन्यपूर्वं संपाद्य तादृशमपूर्वं पुनरप्यस्मिन्संक्रमय्यानन्दो जनयितव्य इत्यभिलाषः उन्मादपर्यायेण मोहावेशेनैव जायते— उक्तं चाचार्यपादैः

'नारीस्तनभरनाभीदेशं दृष्ट्वा मा गा मोहावेशम् ।
एतन्मांसवसादिविकारं मनसि विचिन्तय वारं वारम् ॥ इति ।

**राम**— अहो! ऋजुकस्त्वं ब्राह्मणः । कविभिरनुवर्ण्यमानाया वरवर्णिन्याः स्वरूपमविज्ञायैवं विकत्थसे ॥

**कृष्ण**— तर्हि तादृशमनोमय्या वनितायाः स्पर्श एवासंबद्धः ।

**राम**— ब्रह्मविषयकानुध्यानेन कथमात्मन्यानन्दो जायेत? निर्गुणं खल्विदं ब्रह्म । कथमिव तन्मनसो गोचरीभविष्यति?

**कृष्ण**— अत एवावाङ्मनसगोचरमिदमिति वदन्ति ब्रह्मवादिनः ।

राम— तर्हि किं त्वया ध्यायतेऽनुदिवसम् ?

कृष्ण— शुभाश्रयं कंचिद्दिव्याकारं विग्रहं ब्रह्माधिष्ठितत्वेन मनसैव परिकल्प्य तमेव ध्यानस्य विषयीकुर्वन्त्युपासकाः इत्युपदिशन्त्याचार्याः ।

राम— तादृशी मनोवृत्तिः कदा त्वयासादिता ?

कृष्ण— देवालये प्रतिष्ठिता मूर्तिरेव मे मनसि स्फुरति । सैव ध्यायतेऽहर्निशम् ।

राम— तादृशानुध्यानेन कीदृश आनन्द अनुभूयते ।

कृष्ण— तत्वतो विचार्यमाणे चित्तस्यैकाग्र्यमेव न भवति संसारिणामस्माकम् । अजस्रं देहयात्रोपायमन्विष्यता मया संसारचिन्तयैव कालो नीयते । जपादिकमप्यन्येषां मनसि वैशिष्ट्यगौरवमुत्पाद्य नित्यनैमित्तिकेषु कर्मसु दक्षिणामधिकामधिगन्तुमुपायत्वेनानुष्ठीयते ।

राम— एवं चेत्तव न कदापि ब्रह्मसाक्षात्कारो भविष्यति । तदुभयलोकभ्रष्टोऽसीति अतिदुःखाकरमिदम् ।

कृष्ण— आचार्याणामनुग्रहेणापवर्गः करस्थ इति मे निश्चयः ।

राम— कीदृशोऽयमपवर्गः ?

कृष्ण— कैलासे अगजारमणपादपरिचर्यैव ।

राम— श्रीमच्छङ्करभगवत्पादैर्भाष्ये समुपदिष्टा मुक्तिरियमेवेति ते विश्वासः ।

कृष्ण— शंकरोऽयं साक्षाच्छङ्करस्यावतार एव । कैलासप्राप्तिरेव तस्याभिमता मुक्तिरित्यत्र का वा विप्रतिपत्तिरास्तिकानाम् ?

( क्रमशः )

## माणवकाद्वाकः ॥

रुचिदस्तु गौर्या हृद्गतं निश्चेतुमक्षमः एवं समचिन्तयत् । भवतु, नायमवसरो ममाभिप्रायममुष्यै प्रख्यापयितुम् । अयं सल्लापः कथं परिणंस्यतीति प्रतीक्षे इति संकल्प्य सखीमापृच्छय स्वनिकेतनमगात् । सप्रश्रयं सबहुमानं वरं च विसृज्य सखी कन्याया गौर्या निकटं प्राप । अथ तयोरेकान्ते संवादोऽजनि । बाढमयं वरो वयसा रूपेण संपदा च प्राकृतासु कलासु प्रावीण्येन च कन्याया वरणार्हः । इयद्गुणशालिनो युवानो न सन्ति हि । कथं पुनरयं श्रोत्रियस्य कुले जातः सन् वेदाङ्गानामध्ययनमुपैक्षतेति निरूपयितुं न पारये । यद्ययमार्याणां कुलविद्यायामपि प्राकृतकलास्विव सुशिक्षितः स्यात्तदाऽयं वर उत्तमो भवेत् ॥

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च
अहं कथं द्वितीया स्यात् द्वितीया स्यामहं कथम् ॥

इति पुरा कयाचिद्विदुष्या कन्यया मूर्खाय वरायात्मानं दातुमिच्छते पित्रे उक्तं निषेधवचनं स्मृतिं प्राप्य मां बाधते । वरोऽयं निषेधं नार्हतीति च मम मनः शंसदिव वर्तते । अनया च मनोवृत्त्या शङ्के, वरेण रुचिदा दत्तमुत्तरमपि नाम परिहासविजृम्भितं न भवेत्कथमत्र निश्चयमधिगच्छेयमिति सख्यै गौरी जगाद । तथैव भवेदिति ममापि मतिः । कथमन्यथा तस्य संभाषणे स्वरे वर्णानामुच्चारणे वा विकृततायाः गन्धमपि नोपालक्षयमिति सखी अन्वाह । भवतु अपराह्णे परीक्षानिकषस्य सन्दर्भं सम्पादयिष्ये इति च ।

अथ जलाहरणार्थं गच्छन्तीव दधीचो निकेतनस्य प्रान्तदेशे सखी संचचार । तथा संचरन्ती रुचिदःप्रेमास्पदं कंचन वयस्यं

वीक्ष्य तेन सह नियमितमुद्वाहमधिकृत्योत्सुका पथिकेव सल्लापमकरोत् । सल्लापवेलायां 'वरस्य मूर्खतां विचिन्तयन्ती गौरी विवाहसंबन्धेऽस्मिन्विमनायत' इत्युपाश्रृणवम् । तत्तथ्यं वा मिथ्या वेति न जान इत्युक्त्वा सखी यथागतमगच्छत् ॥

एतच्छृण्वन्नुचिदो वयस्य ईषत्कलुषितहृदयः दधीचो निकटं गत्वा सावेगं यथा तथा यथाश्रुतं प्रोवाच । दध्यङ् तु तन्न श्रदद्धत् । अथापि विवाहमधिकृत्य संशयस्य छायामप्यपनेतुं कामयमानोऽपराह्णे पुत्रेण रुचिदा सह दध्यङ् शर्मा संबान्धिनो वृत्तिमनुसृत्य माधवशर्मणो गृहमाजगाम । यथापूर्वं सादरमुपचरितः सन्माधवेन सह कथाः कुर्वन्नास्त । अस्मिन्नवसरे विट्प्रियनामा ग्रामणीस्तत्र समागच्छत् । आसनादिनाऽभ्यर्चितः सभ्यतां लेभे । यदा माधव्यो ग्रामण्यो गुणान्दधीचे अकथयत् एतादृशीं च सङ्गतिमाश्रित्य विट्प्रियनामा ग्रामणीमधिवस्य कुलीनतादि कन्यायाः सौशील्यादि च दधीचे प्रशशंस । अथ तत्र बहुश उपश्रुतान् दधीचो महात्मतादिगुणांश्च प्रशंसति स्म । तदनु च दध्यञ्चं ग्रामणीरेवमन्वयुङ्क्त—भो! महात्मन्कथमिव भवतः पुत्र आयुष्मानयं रुचिदा मङ्गलाकृतिः वेदे वेदाङ्गेषु च रुचिन्न भजत इव दृश्यत इति ॥

आकस्मिकेनानेन मिथ्यावादेन विस्मयं प्राप्नुवन्दध्यङ् प्रोवाच । अहो! ग्रामणीः केनापि त्वं प्रतारितोऽसि । मम पुत्रस्तु वेदे वेदाङ्गेषु चानेकैर्गुरुभिः सम्यक् शिक्षित इति जानीहि । इति । एवं संवादं निशमयन्नुचिदाः पितरमामन्त्रयामास भगवन्निति । तदनु चास्या विपरीताया जनश्रुतेः अहमेव कारणं समपद्य इत्यवादीत् ॥

(क्रमशः)

# वेमभूपालचरितम् ।

( पूर्वतोऽनुवृत्तम् । )

---

सा पुनरतिक्रम्य शैशवमिक्षुलतेव यौवनेन माधुर्यमुद्वहन्ती, चन्द्रकलेव वर्धमाना, सखीभिः परिवृता लीलोद्यानमिदमुपगम्य वसन्तोत्सवडोलया चिरं विजहार ॥

तदानीमनङ्गमिव पुनर्देहवन्तं देवमागतमानन्दलुलितेन चक्षुषा विलोकयन्त्या देव एव जानात्यनन्यसंवेद्यरसां तादृशीं स्थितिं तस्याः ॥

ततो राक्षसगृहीतस्य करुणमाक्रन्दनमाकर्ण्य कस्यचिदार्तत्राणपरायणे त्वयि गतवति, राक्षसोदन्तभीताभिः सखीभिरनिच्छन्त्यापि कथंकथमपि नीयमाना शून्यशून्येन मनसा कन्यान्तःपुरमाससाद ॥

आसाद्य च विसर्जितसखीजना अद्वितीया किमपि किमपि चिन्तयन्ती, पुनः पुनरनिबद्धलक्ष्यमूर्ध्वमालोकयन्ती, अश्रुचाविच्छिन्नधारमुत्सृजन्ती, 'किमिदम्' इति मया पृष्टा देवे सर्वात्मनासक्तामात्मनो मनःप्रवृत्तिमाचचक्षे ॥

'अयि कल्याणाभिनिवेशिनि! स तु राजकुमारः पुण्डरीकाक्षसदृक्षः, त्वं च लक्ष्मीसदृशलावण्या । एवमन्योन्यसदृशयोर्युवयोः सकलभुवनकुशलाय संगमः सहसा भवेदेव' इति मया व्याहृता किंचिदुच्छ्वसत्यपि कन्दर्पकलुषा चिन्ताशतशिथिलहृदया शयनतले निपतन्ती कथं कथमपि कल्पशतायमानां तां क्षपां क्षपितवती ॥

क्रमेण च चरमगिरिशिखरमवतरति शशाङ्कबिम्बे, कृशोदरी सा मत्करावलम्बिनी, त्वदन्वेषणकौतुकिनी, विहारव्याजालीलावनमिदमाजगाम ॥

आगम्य च भृशमुदीर्णकन्दर्पा, भवदन्वेषणाय शनैः शनैश्चरन्ती, तानि तानि तरुलतानिकुञ्जानि निरूप्य त्वामपश्यन्ती, बिभ्रती भूयस्तरां वेदनाम्, तदनु सरभसमासन्नमिमं लतामण्टपमलंचकार ।

अत्र पुनरिदं चन्द्रकान्तशिलावेदिकातलमधिशयाना तापतरलाङ्गी सा, 'चित्रात् ऋते न पश्यामि दर्शनोपायम् । तदानय तूलिकासनाथं चित्रफलकम्' इत्यभिहितया मया सत्वरमुपनीतं चित्रफलकमादाय, क्षणं चिन्तातूलिकया चित्तफलके निलिख्यानुसंदधती कथं कथमपि विलिख्य त्वां हृदयतले निवेश्य निमीलितलोचना किमपि किमपि निर्विशन्ती मदनपरवशा बभूव ॥

तदनु सखीभिः 'अस्याः शिशिरोपचारमन्तरेण न किमपि मन्मथवेदनानिर्वापणौषधम्' इति निश्चित्य क्रियमाणतदुचितद्रव्यसंग्रहे चन्द्रिकामय इव चन्दनमय इव प्रावृण्मय इव दृश्यमाने लतामण्टपेऽस्मिन् तापसमुचिते शयनेऽत्र पतन्ती, किमपि किमपि प्रलपन्ती, प्रतिक्षणं मूर्च्छन्ती, संतापस्य परां कोटिमुपागतवती ॥

तस्मिन्नेव समये निर्गत्य नगरात्, 'मानुषघाती मत्तो वारणपतिरयमनिवारितगतिराजिहीते; सरभसमपसर्पतापसर्पत' इत्युच्चैरुद्घोषयता हस्तिपकनिवहेन अनुबध्यमानमागतं कमपि दुष्टवारणं विलोक्य, वयं स्त्रीस्वभावसुलभेन भूयसा भयेन वेपितहृदया, तदवस्थामपि राजकन्यकामारोप्य शिबिकामानयन्त्यः कन्यान्तःपुरम्, तत्र तां शाययित्वा समाचराम शिशिरोपचारक्रियाम् ॥

ततः शनैः शनैः समुपजातसंज्ञा सा संभ्रमप्रसारितेन चक्षुषा तत इतो विलोक्य चित्रफलकमपश्यन्ती, सखि चक्षुरानन्दसंदायि चित्रफलकं क्वापि' इति समीपवर्तिनीं मामवादीत् ॥

अहं तु तदत्यन्तमुत्कण्ठाचित्रफलकस्मृतिः, 'कल्याणि केलीवने दुष्टवारणदर्शनभयचकिताभिरस्माभिर्विस्मृतचित्रफलकाभिरागतम् । किमत्र विषादेन । एकया कालकलया सत्वरमुपगम्य केलीवनमानेष्यामि चित्रफलकम्' इत्याख्याय तदङ्गीकृतगमना द्रुततरगतिरागत्य लीलावनमिदम् मूर्तमिव भागधेयं प्रजानामालोक्य त्वां विस्मयोत्तानमतिरतिष्ठम् । अतः परं देवः प्रमाणम्' इत्युक्त्वा विरराम ॥

अनन्तरम् 'अघटनीयाप्येतदागतिर्दैवादुपनता । तदियमखननक्लेशसुलभा निधिप्राप्तिः' इति चिन्तयन् नृपतिः, 'धनमिव परहस्तपतितमिदमपि दातव्यमेव' इति वदन्, तदादाय चित्रफलकम्, तस्मिन्—

जानासि वा न वा त्वं बहुधा मम हृदयमदयसंरम्भः ।
ताडयति चन्द्रवदने त्वदपाङ्गनिदेशकिंकरो मदनः ॥

इतीमामार्यां विलिख्य, तस्मै समर्प्य चित्रफलकम्, 'अयि भद्रे अविलम्बितमेव कन्यागुरुसमीपमहं जनं प्रेषयामि परिणयनप्रसङ्गाय । त्वमपि सरभसमेव गत्वा त्वत्सखीमपि विदितवृत्तान्तां विधेहि' इत्युक्त्वा तां विसृज्य विदूषकेण सह निजनगरं प्राविशत् ॥

इति द्वितीय उच्छ्वासः ॥

अथ धरापतिः परिणयनप्रसङ्गाय कन्यकाजनकं प्रति समुचितवस्तुपुरःसरमभिजातजनप्रेषणेन संपादितमनोरथफलः, मौहूर्ति-

कानुमते प्रत्यासन्ने परिणयदिने, चामीकरमयसर्वोपकरणां नक्षत्रमालाहारिणीं करिणीमधिरूढ, उत्तुङ्गमातङ्गाधिरूढैः समानवयोभिरनेकैः राजन्यपुत्रैरनुक्षणक्रियमाणजयजीवशब्दः, विरचितविवाहवेषः पुरा निर्जगाम ॥

ततः कर्पूरपांसुसिकतिलेन रत्नराशिशर्करावता पट्टांशुकविरचितविततवितानमण्डलेन वर्त्मना गच्छन्, कुङ्कुमपङ्कलिप्तवेदिकासु जम्भरिपुशिलास्तम्भसमुत्तम्भितासु उपकार्यास्वन्तरान्तरा निवसन्, श्वशुरपुरीमाससाद ॥

श्वशुरोऽपि जामातरमुपतोरणमागतं समाकर्ण्य, सबन्धुजनश्चरणाभ्यामेव प्रत्युज्जगाम । औपवाह्यकरेणोरवरुह्य प्रणमन्तं जामातरमुत्थाप्य गाढमालिलिङ्ग । पुनरारूढकरेणुं तमलंकृतेन राजमार्गेण स्वभवनमानिनाय ॥

ततः शातकुम्भस्तम्भशतसमुत्तम्भितानि अनक्षिगोचरान्तान्यनेकानि कक्ष्यान्तराण्यतिक्रम्य, प्रवालमण्टपस्य मध्यमलंकुर्वाणे मणिमये महति भद्रासने निवेशयामास जामातरम् ॥

तत्र स गान्धर्वविद्यापारदृश्वभिर्गायकैर्गीयमानानि निजभुजविजयपद्यानि शृण्वन्, क्षणमासांचक्रे ॥

ततः पुरोधसा 'महाराज, प्रत्यासन्नं परिणयलग्नम्' इत्यभिहितः, परिसरवर्तिना मालवराजकुमारेण दत्तमवलम्ब्य हस्तम् उत्थाय, क्वचिन्मरकतशिलास्तम्भैर्विरचितरम्भावनविभ्रमम्, क्वचिन्मुक्तामणिमरीचिजालकैराविष्क्रियमाणराकानिशाप्रकाशम्, क्वचित्कनकमयमहीरुहप्रातैः कल्प्यमानकल्पतरुकाननचं तं कौतुकागारमविक्षत् ॥

अनन्तरम् उद्दीपितामुद्गतमरीचिजालकाभिर्मणिदीपिकाभिर्वधूवरौ विवाहवेदीमलंचक्रतुः ॥

तेजोनिधिरिव दीर्घिकापद्मसुषमा समर्पितम्, गीष्पतिप्रतिमेन पुरोधसा गृहीतमरुणाङ्गुलिदलकोमलं करेण जग्राह वरो वधूकरम् ॥

अथ यथाक्रममेवमनुष्ठिते विवाहकर्मणि, जामातरमात्मीयसंपदनुरूपेण हरणेन संयोज्य प्रस्थापयन्, दुहितृविरहविक्लवः श्वशुरः सह बन्धुभिरतिदूरमन्वगयौ ॥

अथ निवर्तितश्वशुरः पृथिवीपतिः, हिमजलसेकशीतलभुवा मार्गेण वधूसहायो जगाम । आससाद च परिष्कृतराजमार्गामात्मीयां राजधानीम् ॥

अनन्तरम् अतिशयितलक्ष्मीरूपसंपदा वध्वा सह समागतः, आत्मानमवलोकयितुमुत्सुकानामागतानां पुरयुवतीनामनेकविधानि चेष्टितानि पश्यन्, आविष्कृतमदनविकृतीनां तासां बहुप्रकाराणि सरागाणि वचांसि पल्लवानीव कर्णयोः कुर्वन्क्षितिपतिः, तदपाङ्गविक्षेपैः कुवलयितां राजवीथीमतिलङ्घ्य स्वभवनमयासीत् ॥

अथ मूर्तया राजलक्ष्म्येव नृपतिरनवद्यसर्वाङ्ग्या तया सह दयितया क्रीडागिरिषु लीलावनेषु केलीसरस्तीरलतामण्टपेष्वन्येष्वपि रमणीयेषु स्थानेषु रममाणः, सफलीचकार यौवनम् ॥

तस्माच्च भुवनमहितकीर्तेः प्रोलभूपालात्, कलितवितरणकेलयः कल्पद्रुमा इव कलशार्णवात्, माचनरेन्द्र इति, वेमभूप इति, दोड्डनरपतिरिति, अन्नभूप इति, मल्लमहीपाल इति भुवनमहितनामानः पञ्च कुमारा अजायन्त ॥

तेषामनुपमकीर्तिरादिमो महाभिमानितया वासमण्टपिकां व-

सुधां मन्यमानः, न्यक्कृतकुलशैलशक्तिना भुजेन भूषणमिव भुवनभारमुद्वहन्, वन्द्यो बभूव माचभूपालः ॥

यस्य च पुनरनुजो दुःशासनहृदयविदारणो युधिष्ठिरस्य भीमसेन इव, धर्म इव वपुष्मान्, धनुष्मतामग्रगण्यः, प्रतिच्छन्द इव हरिश्चन्द्रस्य, पर्याय इव भगीरथस्य, प्रतिबिम्बमिव अम्बरीषस्य, द्विर्भाव इव दुष्यन्तस्य, बृहस्पतिरिव वृषकार्यप्रवृत्तः, उत्तानपाद इव परिगृहीतसुनीतिः, जिष्णुरपि प्रचेताः, सुप्रतीकोऽप्यमदः, विश्वविख्यातभूमा वेमभूपालः सर्वमुर्वीमण्डलमजैषीत् ॥

तस्य च माचभूपतेरजनिषतामिव इव अमह्योजसः, रेड्डिप्रोतभूप इति, पेद्दकोमटीन्द्र इति, नागरेन्द्र इति, त्रिदशसदृशास्त्रयो नन्दनाः ॥

ततः क्रमेण गुणज्येष्ठो विशेषतः पालयिता बभूव चतुर्णववमेखलाया धरालक्ष्म्याः, अतन्द्रितप्रकृतिः भास्करमय इव पद्मोल्लासने, शशिमय इव सकलजनाह्लादने, लोहिताङ्गमय इव भूनन्दनत्वे, सौम्यमय इव सकलशास्त्रावबोधे, धिषणमय इव देवकार्यप्रवर्तने, भार्गवमय इव वृषपर्वप्रसक्तौ, शनैश्चरमय इव छायाप्रभवत्वे, राहुमय इव सकलराजमण्डलग्रहणे, केतुमय इव परविनाशने, पेद्दकोमटीन्द्र इति रजनिकरकरावदातचरितो राजराजसभासदो राजा ॥

तस्य खलु महाकुलभूभृत्प्रभवा भवानीव परमेश्वरस्य, नालीकवसतिर्लक्ष्मीरिव पुरुषोत्तमस्य, भुवनपावनी भागीरथीव रत्नाकरस्य, कलावती, कारुण्यवती, कान्तिमती, शान्तिमती, विनयवती, विलासवती, विज्ञानवती, त्रपावती, नयवती, सत्यवती, पुनःसृष्टिरिव अरुन्धत्याः, साक्षात्कृतिरिव सरस्वत्याः, प्रदीपशिखा पापतिमिरस्य,

वितानवेदी विवेकपावकस्य, सर्गसमाप्तिरिव सौन्दर्यसारस्य, तपःसिद्धिरिव सौभाग्यस्य, अनन्तगुणलक्षणा अभूदनन्ता नाम महिषी ॥

चन्द्र इव चन्द्रिकया, तरणिरिव दीप्त्या, राजीवदृशा तया व्यराजत राजचूडामणिः ॥

अधिगतसकलैश्वर्योऽपि स राजा सुबहूनि दिवसानि सुतमुखावलोकनसुकृतस्य दूरे बभूव ॥

तस्मिंश्च शासति चतुर्णवमेखलां वसुंधराम्, कदाचिन्मयूरनटननाट्याचार्या, नारायणनिद्रानिशा, रागराजक्षत्रियाणी, कमलवनबोधतन्द्रा, प्रावृडाविरासीत् ॥

क्रमेण च कदम्बनिलयगण्ठापथे, मुषितमृगतृष्णाविमोहे, विद्युन्नटीनटनसूत्रधारे, जगदेकनेत्रकान्तिके, वञ्चितपथिकजनसंचारे, परिणतिमामेदुरि पयोधरानेहसि, संतानकाङ्क्षी धरणिपतिरमरपूजां रचयितुमारेभे ॥

ततो महीपतिः स्नातानुलिप्तः सितकुसुमवसनधारी, बाह्याङ्गनमध्यमणिवेदिकास्थापितम, अट्टालिकागोचराच्छ्रायम्, मध्यभागविलिखितं कर्पूरधवलद्युतिमैरावतमधिरूढं तैजसेन धनुषा दीप्यमानस्वाहनं पश्चाद्भागस्थितायाः देव्याः पुलोमजायाः मन्दस्मितमधुरमाननमपाङ्गितया दृशा स्मितविकसितकपोलमीक्षमाणं बलासुरवधूविलापाचार्येण वृत्रासुरापमृत्युना वज्रायुधेन सनाथीकृतपाणिं शतमखमुद्वहता पताकापटेन कामपि कान्तिं कन्दलयन्तम्, काञ्चनमयमिन्द्रध्वजमर्चयितुमासमाद ॥

तदनु कमलकल्हारचम्पकमालतीकुटजप्रायैः कुसुमनिचयैरभ्यर्च्य पुरन्दरं परमया भक्त्या प्रणम्य पुरस्तिष्ठन्, भगवन् भक्त-

सुधां मन्यमानः, न्यक्कृतकुलशैलशक्तिना भुजेन भूषणमिव भुवन-भारमुद्वहन्, वन्द्यो बभूव माचभूपालः ॥

यस्य च पुनरनुजो दुःशासनहृदयविदारणो युधिष्ठिरस्य भीमसेन इव, धर्म इव वपुष्मान्, धनुष्मताम्ग्रगण्यः, प्रतिच्छन्द इव हरिश्चन्द्रस्य, पर्याय इव भगीरथस्य, प्रतिबिम्बमिव अम्बरीषस्य, द्विर्भाव इव दुष्यन्तस्य, बृहस्पतिरिव बृषकार्यप्रवृत्तः, उत्तानपाद इव परिगृहीतसुनीतिः, जिष्णुरपि प्रचेताः, सुप्रतीकोऽप्यमदः, विश्वविख्यातभूमा वेमभूपालः सर्वमुर्वीमण्डलमजैषीत् ॥

तस्य च माचभूपतेरवनिपतामग्र इव अमह्योरजयः, रेड्डिप्रोतभूप इति, पेद्दकोमटीन्द्र इति, नागरेन्द्र इति, त्रिदशसदृशास्त्रयो नन्दनाः ॥

ततः क्रमेण गुणज्येष्ठो विशेषतः पालयिता बभूव चतुर्णव-मेखलाया धरालक्ष्म्याः, अतन्द्रितप्रकृतिः, भास्करमय इव पद्मोल्लासने, शशिमय इव सकलजनाह्लादने, लोहिताङ्गमय इव भूनन्दनत्वे, सौम्यमय इव सकलशास्त्रावबोधे, धिषणमय इव देवकार्यप्रवर्तने, भार्गवमय इव वृषपर्वप्रसक्तौ, शनैश्चरमय इव छायाप्रभवत्वे, राहुमय इव सकलराजमण्डलग्रहणे, केतुमय इव परविनाशने, पेद्दकोमटीन्द्र इति रजनिकरकरावदातचरितो राजराजसभासदो राजा ॥

तस्य खलु महाकुलभूभृतस्तथा भवानीव परमेश्वरस्य, नालीकवसतिर्लक्ष्मीरिव पुरुषोत्तमस्य, मुक्तनायकी भागीरथीव रत्नाकरस्य, कलावती, कारुण्यवती, कान्तिमती, शान्तिमती, विनयवती, विलासवती, विज्ञानवती, त्रपावती, नयवती, सत्यवती, पुनःसृष्टिरिव अरुन्धत्याः, साक्षात्कृतिरिव सरस्वत्याः, प्रदीपशिखा पापतिमिरस्य,

वितानवेदी विवेकपावकस्य, सर्गसमाप्तिरिव सौन्दर्यसारस्य, तपःसिद्धिरिव सौभाग्यस्य, अनन्तगुणलक्षणा अभूदनन्ता नाम महिषी ॥

चन्द्र इव चन्द्रिकया, तरणिरिव दीप्त्या, राजीवदृशा तया व्यराजत राजचूडामणिः ॥

अधिगतसकलैश्वर्योऽपि स राजा सुबहूनि दिवसानि सुतमुखावलोकनसुकृतस्य दूरे बभूव ॥

तस्मिंश्च शासति चतुरर्णवमेखलां वसुंधराम्, कदाचिन्मयूरनटननाट्याचार्या, नारायणनिद्रानिशा, रागराजक्षत्रियाणी, कमलवनबोधतन्द्रा, प्रावृडाविरासीत् ॥

क्रमेण च कदम्बनिलयपण्ठापथे, मुषितमृगतृष्णाविमोहे, विद्युन्नटीनटनसूत्रधारे, जगदेकनेयकर्णान्तिके, वञ्चितपथिकजनसंचारे, परिणतिमासेदुषि पयोधरानेहसि, संतानकाङ्क्षी धरणिपतिरमरपूजां रचयितुमारेभे ॥

ततो महीपतिः स्नातानुलिप्तः सितकुसुमवसनधारी, बाह्याङ्गनमध्यमणिवेदिकास्थापितम्, अद्रिगोचरोच्छ्रायम्, मध्यभागविलम्बितं कर्पूरधवलघुसृणैरावतनिरूढं तेजसेन धनुषा दीप्यमानस्ववाहनं पश्चाद्भागस्थिताया देव्याः पुलोमजाया मन्दस्मितमधुरमाननमपाङ्गितया दृशा सितविकसितकपोलमीक्षमाणं बलासुरवधूविलापाचार्येण वृत्रासुरापमृत्युना वज्रायुधेन सनाथीकृतपाणिं शतमखमुद्धृतपताकापटेन कामपि कान्तिं कन्दलयन्तम्, काञ्चनमयमिन्द्रध्वजमर्चयितुमारेभे ॥

तदनु कमलकल्हारचम्पकमालतीकुटजप्रायैः कुसुमनिचयैरभ्यर्च्य पुरन्दरं परमया भक्त्या प्रणम्य पुरस्तिष्ठन्, भगवन् भक्त-

सुधां मन्यमानः, न्यक्कृतकुलशैलशक्तिना भुजेन भूषणमिव भुवनभारमुद्वहन्, वन्द्यो बभूव माचभूपालः ॥

यस्य च पुनरनुजो दुःशासनहृदयविदारणो युधिष्ठिरस्य भीमसेन इव, धर्म इव वपुष्मान्, धनुष्मतामग्रगण्यः, प्रतिच्छन्द इव हरिश्चन्द्रस्य, पर्याय इव भगीरथस्य, प्रतिबिम्बमिव अम्बरीषस्य, द्विर्भाव इव दुष्यन्तस्य, बृहस्पतिरिव वृषकार्यप्रवृत्तः, उत्तानपाद इव परिगृहीतसुनीतिः, जिष्णुरपि प्रचेताः, सुप्रतीकोऽप्यमदः, विश्वविख्यातभूमा वेमभूपालः सर्वमुर्वीमण्डलमजैषीत् ॥

तस्य च माचभूपतेरजनिषतामित इव अमहीनजवः, रेड्डिप्रोतभूप इति, पेद्दकोमटीन्द्र इति, नागरेन्द्र इति, त्रिदशमहशास्त्रयो नन्दनाः ॥

ततः क्रमेण गुणज्येष्ठो विशेषतः पालयिता बभूव चतुर्णवमेखलाया धरालक्ष्म्याः, अतन्द्रितप्रकृतिः, भास्करमय इव पद्मोल्लासने, शशिमय इव सकलजनाह्लादने, लोहिताङ्गमय इव भूनन्दनत्वे, सौम्यमय इव सकलशास्त्रावबोधे, धिषणमय इव देवकार्यप्रवर्तने, भार्गवमय इव वृषपर्वप्रसक्तौ, शनैश्चरमय इव छायाप्रभवत्वे, राहुमय इव सकलराजमण्डलग्रहणे, केतुमय इव परविनाशने, पेद्दकोमटीन्द्र इति रजनिकरकरावदातचरितो राजराजप्रभावो राजा ॥

तस्य खलु महाकुलभूभृत्प्रभवा भवानीव परमेश्वरस्य, नालीकवसतिर्लक्ष्मीरिव पुरुषोत्तमस्य, भुवनपावनी भागीरथीव रत्नाकरस्य, कलावती, कारुण्यवती, कान्तिमती, शान्तिमती, विनयवती, विलासवती, विज्ञानवती, त्रपावती, नयवती, सत्यवती, पुनःसृष्टिरिव अरुन्धत्याः, साक्षात्कृतिरिव सरस्वत्याः, प्रदीपशिखा पापतिमिरस्य,

वितानवेदी विवेकपावकस्य, सर्गसमाप्तिरिव सौन्दर्यसारस्य, तपःसिद्धिरिव सौभाग्यस्य, अनन्तगुणलक्षणा अभूदनन्ता नाम महिषी ॥

चन्द्र इव चन्द्रिकया, तरणिरिव दीप्त्या, राजीवदृशा तया व्यराजत राजचूडामणिः ॥

अधिगतसकलैश्वर्योऽपि स राजा सुबहूनि दिवसानि सुतमुखावलोकनसुकृतस्य दूरे बभूव ॥

तस्मिंश्च शासति चतुर्णवमेखलां वसुंधराम्, कदाचिन्मयूरनटननाट्याचार्या, नारायणनिद्रानिशा, रागराजक्षत्रियाणी, कमलवनबोधतन्द्रा, प्रावृडाविरासीत् ॥

क्रमेण च कदम्बनिलयगन्धपथे, मुषितमृगतृष्णाविमोहे, विद्युन्नटीनटनसूत्रधारे, जगदेकनेयकर्णान्तिके, वञ्चितपथिकजनसंचारे, परिणतिमामेदुरि पयोधरानेहसि, संतानकाङ्क्षी धरणिपतिरमरपूजां रचयितुमारेभे ॥

ततो महीपतिः स्नातानुलिप्तः सितकुसुमवसनधारी, बाह्याङ्गनमध्यमणिवेदिकामधिष्ठितम्, अद्रीन्द्रगोचरोच्छ्रायम्, मध्यभागविलिखितं कर्पूरधवलच्छविनैरावतमधिरूढं तैजसेन धनुषा दीप्यमानस्ववाहनं पश्चाद्भागाधिष्ठिताया देव्याः पुलोमजाया मन्दस्मितमधुरमाननमपाङ्गितया दृशा स्मितविकसितकपोलमीक्षमाणं बलासुरवधूविलापाचार्येण वृत्रासुरापमृत्युना वज्रायुधेन सनाथीकृतपाणिं शतमखमुद्वहता पताकापटेन कामपि कान्तिं कलयन्तम्, काञ्चनमयमिन्द्रध्वजमर्चयितुमासमाद ॥

तदनु कमलकल्हारचम्पकमालतीकुटजाद्यैः कुसुमनिचयैरभ्यर्च्य पुरन्दरं परमया भक्त्या प्रणम्य पुरस्तिष्ठन्, भगवन् भक्त-

वत्सल देवेन्द्र, योजय मां कुलप्रदीपेन कुमारेण, इति पुनः प्रार्थयामास ॥

अत्रान्तरे केलिमयूरमुपलालयन्ती मयूरपालिका पुनरिमामार्यां पपाठ—

'अनुभव मयूर सौख्यं
तव हृदयं भवतु सान्द्रसंतोषम् ।
मेघोदयं बिडौजा
दिष्ट्या जगदवनहेतुमातनुते ॥'

राजा तु तामुपश्रुतिमाकर्ण्य हर्षपरवशः, शुद्धान्तमुपेत्य, देवीं विदितवृत्तान्तामकरोत् । देवी च जहर्ष तेन भर्तृवचनेन ॥

ततः शतमखप्रसादेन कतिपयदिनापगमे, समुन्मिषति मधुमासे, आसेदिवत्सूच्चस्थानानि ग्रहेषु, निखिलभुवनाभ्युदयनिदाने पुण्ये लग्ने, मणिमिव रोहणस्थली, विवेकमिव विद्या, विभातवेलेव विभावसुम्, सुतमसूत देवी ॥

ततः समुचिते दिवसे, धर्मविदां मध्यं गतो नृपतिरात्मजस्य सकलभुवनकण्टकाभिचारमन्त्रं 'श्रीत्रेमभूपः' इति नामधेयमकरोत् ॥

अथ जन्मनस्तृतीये वर्षे गुरुरवनिभृतां गुरुवत्सलं गुरुधियं कुमारं गुरुभिरक्षरशिक्षामकारयत् ॥

ततः सकलभुवनभागधेयजीवातौ पञ्चमं वर्षमवतरति कुमारे, भूयोऽपि देवी माचभूपालं द्वितीयं कुमारमसूत ॥

ताभ्यां च सहजतेजःप्रसराभ्यां धरणिपतिकुमाराभ्यां त्रिसूर्यमिव भुवनमासीत् ॥

(क्रमशः ।)

# ॥ शंकराभ्युदयः ॥



(अत्यद्भुतवाग्विलासास्वादनीयमिदं काव्यं सर्गषट्कपर्यन्तमेवास्माभिरधिगतं प्रकाशितं चेति ज्ञातचरमेव सहृदयानाम् । अद्य श्रीकुम्भघोणनगरविराजमानदिव्यश्रीकाञ्चीकामकोटिपीठाधिपैः देववाण्युभ्युदयबद्धदीक्षैः श्रीमच्छङ्करयतिसार्वभौमैः श्रीवाणीविलासाध्यक्षस्य गुरुभक्तशिखामणेः बालसुब्रह्मण्यार्यस्य प्राचीनग्रन्थमुद्रणपरिश्रममन्यादृशमभिनन्द्य स्वीयसरस्वतीनिलयात् प्रदत्तेषु ग्रन्थरत्नेषु एकतमात् श्रीशंकराभ्युदयकोशात्सप्तमाष्टमसर्गौ समुपलभ्य तमिमं भागं सांप्रतं सहृदयायां प्रकाशयितुमुपक्रान्ता वयं लोकगुरावस्मिन् कार्तज्ञं वहामः ।)

## सप्तमः सर्गः ॥



अथाप्लुतः संपुरनूपुरापगा-
सदानदीमातृकशक्रनिष्कुटे ।
वृषाचले वीक्ष्य स सुन्दरं हरिं
शनैरयं सह्यसुतामुदैक्षत ॥ १ ॥

समीरणालोलसरोजवाटिका-
नितान्तनिष्यन्दि मरन्दनिर्झरैः ।
पदे पदे या परिवृद्धिमेयुषी
प्रयाति लोकेषु मरुद्वृधाभिधा ॥ २ ।

सुधारसस्वादिमधिक्क्रियाकृतः
   स्वपाथसो वैवधिकैः सुधान्धसाम् ।
विलम्बिताग्रैः फलभारभङ्गुरै-
   र्विराजते या तटकेरभूरुहैः ॥ ३ ॥

सुधारसस्यास्य च भो सुधान्धसः
   समीक्ष्यतां तारतमीति या स्वयम् ।
उदस्तकेरद्रुभुजोच्चकैर्दिश-
   त्यदः फलेष्वम्बु गृहीतमात्मनः ॥ ४ ॥

प्रमत्तचिक्रोचकदष्टयस्तट-
   प्ररूढकेरद्रुफलाम्बुनिर्झरः ।
प्रसर्पिणी सत्पथसीम्नि सारिणी
   सुरस्रवन्तीत्यभिमन्यते सुरैः ॥ ५ ॥

अजस्रसस्यास्थितरोचिषि क्षमा-
   मुधावधूमूर्धनि चोलसीमनि ।
चकास्ति या सारसधूलिधूसरा
   मनोज्ञसिन्दूरमयीव रेखिका ॥ ६ ॥

द्विधा भवन्त्याथ कवेरकन्यया
   दृढोपगूढे धुरि रङ्गमन्दिरे ।
असौ निमज्जन्नधिचन्द्रपुष्करि-
   ण्यहीन्द्रतल्पं हरिमित्यवन्दत ॥ ७ ॥

पितामहस्यापि पितामहो भवा-
न्प्रभो न किंचिद्भवतोऽस्ति कारणम् ।
बिभर्ति रूपाणि बहून्यपि स्वयं
जनावनैषी जगदीश मायया ॥ ८ ॥

पुराणवाणीमपहृत्य वारिधौ
पुरा मुरारे दनुजे तिरोहिते ।
कटाक्षवीक्षोपचितात्मभूर्भवान्
रमाक्षिलक्ष्मीमवहज्झषाकृतिः ॥ ९ ॥

परिभ्रमन्मन्दरघर्षणोदय-
त्किणोपमैर्बिन्दुभिराङ्किताकृतिः ।
सुधान्धसां स्वस्तिनिमित्तमादधे
पयोधिकन्याप्रपदश्रियं भवान् ॥ १० ॥

पयोधिकन्याकुचपर्वतद्वयी-
भरं विसोढुं खुरलीपरिश्रमम् ।
विधातुकामो नियतं विभो भवा-
न्बभार किं मन्दरमम्भसां निधौ ॥ ११ ॥

कठोरघोणाहतिभिर्द्विषत्तनुं
दिशासु मुस्तामिव धुन्वतस्तव ।
रदाग्रलग्ना जलराशिपल्वले
क्ष्मा दधौ कर्दमलेशविभ्रमम् ॥ १२ ॥

भवन्नखाङ्कूरमयूखकन्दले
पुरा निमग्ने दनुजाधिपोरसि ।
व्यपेतसंव्यानदुकूलपल्लवा
किल ह्रियातिष्ठत नासुरेन्दिरा ॥ १३ ॥

पुरा वलारातिमुखामरावली-
हिताय बल्याहरणे दृढव्रतः ।
पलाशदण्डप्रणयी वटुर्भवन्
पदक्रमासक्तरुचिर्भवानभूत् ॥ १४ ॥

बलिस्त्रिलोकीं भवते दिशन्नपि
व्यधत्त मन्युं विधिचोदितो यतः ।
फलप्रदेनाखिलकर्मणां ततः
प्रसह्य पातालतले कृतस्त्वया ॥ १५ ॥

वरूथिनीपादरजोभिरम्बरं
वितन्वतो भूमितलं दुरीश्वरान् ।
कुठारतेजोजलदान् प्रकल्पयन्
व्यधत्त नक्षत्रपथं भुवं भवान् ॥ १६ ॥

क्षणेन शस्त्रक्षतमेदिनीभृति
त्वयीश तादृग्भृगुवंशमौक्तिके ।
अभावि धात्र्या व्यपराजहंसया-
प्यहो विराजत्तरराजहंसया ॥ १७ ॥

करोदरे यस्य निशाचरप्रभो-
गिरिशशैलेन च कन्तुकायितम् ।
शिरांसि तस्यापि भवज्जयश्रियः
प्रपेदिरे कन्दुकतां रणाङ्गणे ॥ १८ ॥

प्ररूढवेलाटविशिञ्जिनीलतं
प्रभो पुरा वारिधिकूटकार्मुकं
निहन्तुकामेन निशाचरप्रभुं
नियोजितः सेतुशिलीमुखस्त्वया ॥ १९ ॥

मुकुन्द हालाहलसादरोऽपि सन्
भवानुपाश्रित्य तु कामपालताम् ।
निनाय धात्रीं बत विप्रलम्भतां
द्विषद्वधूनामपि कुन्तलावलिम् ॥ २० ॥

ऊरीकृताभीरकिशोरवत्सका-
कृतिर्भवान्वञ्चयितुं विरिञ्चनम् ।
श्रुतिप्रतीतां चिदचित्स्वरूपतां
स्फुटीकृतामीश पुरा व्यतन्तनीत् ॥ २१ ॥

अनादिनाप्यादधतेश सादितां
त्वयाधिरूढस्त्वरितस्तुरंगमः ।
कलेरपाये कृतघासकौतुको-
प्यघाससंसक्तमना भविष्यति ॥ २२ ॥

इति स्तुतिप्रीणितरङ्गनायको
भजन् क्रमात्पश्चनदेश्वरादिकान् ।
समाश्रितो द्वारवतीमनुत्तरां
स राजगोपालमवन्दत स्तुवन् ॥ २३ ॥

अभूषयं संततिमुष्णदीधिते-
रहं पुरेत्याहितधीरधीश्वर ।
विभूषयत्यन्यविधोः कुलं भवान्
दृशोः कचिन्नो ममता खलूचिता ॥ २४ ॥

क्रमात्पुरा जन्मयुगेऽपि किं प्रसू-
सुकेतुजासूदनवासनावशात् ।
अनीक्षमाणेन घृणादृशाप्यहो
हृता त्वया पूतनिकावधूरपि ॥ २५ ॥

कराम्बुजातं करजाङ्कशत्रुट-
त्तनुं तनोति स्म पुरा सुराहितम् ।
इतीर्ष्यया त्वच्चरणाम्बुजं ध्रुवं
विलासघातैः शकटं व्यसुं व्यधात् ॥ २६ ॥

पुरन्दरारातिशरात्मतां गताः
पुरा बभूवुर्भुजगा इति ध्रुवम् ।
तदीयजातौ सरुषा सुवासो
हृतस्त्वयामार्दि च हन्त कालियः ॥ २७ ॥

उदूढतत्तादृशमन्दरोर्वरा-
भृतो गभीरे पयसां निधौ तव ।
मुकुन्द गोवर्धनभूभृदुद्धृति-
र्मनःसु नः स्मेरयते न विस्मयम् ॥ २८ ॥

तवेश धत्ते पठितैकपाठता
तदुग्रबाणासनदण्डखण्डनम् ।
करेणुरुन्मस्तकरेणुरण्यरेः
करेऽणुरासीदिति नाद्भुताय नः ॥ २९ ॥

द्विपेन्द्रसंरक्षणदीक्षितो भवान्
द्विपेन्द्रमीश द्विषतोऽवधीत्कथम् ।
तवाथवा तादृशसिंहनाटिका
महानटस्येदमवैमि सांप्रतम् ॥ ३० ॥

पदारविन्दैकपरागतः पुरा
शिलामपि श्रीसदृशीं भवान्व्यधात् ।
करेण कुब्जां चिबुके पदा पदे
स्पृशन् व्यधत्तेश तथेति कः स्मयः ॥ ३१ ॥

निहत्य निःशेषमशेषराजकं
मही द्विजेभ्यो मखदक्षिणीकृता ।
करग्रहार्हा न ममेति किं विभो
तमुग्रसेनं धरणीपतिं व्यधाः ॥ ३२ ॥

पयोनिधिर्देव भवान्तरद्वये
भवत्प्रतापज्वलनानुभाववित् ।
अदत्त वीतानुशयं प्रसादयन्
पदं तव द्वारवतीपदास्पदम् ॥ ३३ ॥

पुरा व्यरौत्सं पुरुहूतजं सुधा
सुहृत्त्वमुष्णांशुसुतेन शीलयन् ।
इतीश जातानुशयो ध्रुवं भवा-
निहावतारे कृतवान् विपर्ययम् ॥ ३४ ॥

रसोत्तरङ्गां त्वयि रागसंपदं
विधाय वंशीमधरे विशृण्वति ।
मनोभवो वल्लवपल्लवाधरा-
मनःस्वतानीदनुरागसंपदम् ॥ ३५ ॥

रसोत्तरं धन्व रणन्मधुव्रतं
शरं सृणिं पाशमपीश बिभ्रतम् ।
कारद्वयीकल्पितवेणुकं च यो
भवन्तमन्तर्भजते स भाग्यभाक् ॥ ३६ ॥

इति स्तुवन्नेत्य यतिश्चिदम्बरं
तं नीलकण्ठं सदसि व्यलोकत ।
अवेक्ष्य यः स्वापजुषं हरिं घनं
सलोकपालश्चतुरं प्रनृत्यति ॥ ३७ ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष कार्तिकमासः । [संचि. ८.

## सुभाषितानि ॥



सगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः ।
नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥ १ ॥

यदपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य ।
जयति तथापि विवेको दानं पात्रानुमानेन ॥ २ ॥

चित्रं न तद्यदयमम्बुधिरम्बुदौघ-
सिन्धुप्रवाहपरिपूरणया महीयान् ।
त्वं त्वार्थिनामुपकरोषि यदल्पकूप
निष्पीड्य कुक्षिकुहरं हि महत्त्वमेतत् ॥ ३ ॥

# कै. अप्पाशास्त्रीराशीवडेकरमुद्दिश्य विलापः ॥

धिगिमां नियतिं शरीरभृन्मनुजानां वसुधाभिवंदितं ।
कवलीकुरुते परेतराड् बुधमप्याशु न तृप्तिमागतः ॥ १ ॥

बत जीवसहायकं निजाहितसक्ता ननु निर्घृणाः सुराः ।
अनयन् विबुधं द्रुतं दिवमुपवाचस्पतिमेवमादरात् ॥ २ ॥

लिखिता वरचंद्रिका त्वया भ्रियते सूनृतवादिनी च सा ।
तव तत्तु मनोहरं वपुः क गतं भो सुकवे बताधुना ॥ ३ ॥

अविहा त्वदधीनजीवितां सुरवाणीं विधवां विधाय नः ।
द्रुतमेव गतोऽसि वाक्पते त्रिदिशं युक्तमिदं न ते प्रभो ॥ ४ ॥

समुदेति बुधाः पुनः क्षितावचिरात्संस्कृतचंद्रिका मम ।
तव तच्चरमं वचोधुना हृदयं पण्डित दंदहीति नः ॥ ५ ॥

शतधा हृदयं विदारितं विकलं नेत्रयुगं च वारिणा ।
विधुरं किल मानसं गुणिन् विगतं धैर्यमपि प्रभोऽधुना ॥ ६ ॥

अयि निष्ठुर पंडिताग्रिमं जगदानंदकरं दिवं नयन् ।
वरसूनृतवादिनीपतिं त्रपसे त्वं न कथं विधेऽधम ॥ ७ ॥

अयसा घटितं मनो विधेर्विहृतं भारतरत्नमाशु हा ।
अमुया मृतिना युरोपगा अपि दुःख्यन्ति बुधेश संप्रति ॥ ८ ॥

भट्टकेशवशर्मा.
गळगलि.

|| श्रीः ||

# || हरिश्चन्द्रोपाख्यानम् ||

---

एवं किल ऐतरेयाः समामनन्ति— पूर्वमिहासीत् भारते वर्षे कोसलेषु ब्रह्मसरसः समुत्पन्नया सरय्वा परिगतप्रान्तायां समस्तनगरीवतंसायमानायामरिगणदुष्प्रवेश्यायामयोध्यायाममरपतिसमानवैभवः अखिलसुरासुरमुनिजनाभिनन्दितगुणग्राम इक्ष्वाकुकुलतिलको राजा हरिश्चन्द्रो नाम। स हि देवतातिथिपूजकः ऋषिजनसपर्यासु दर्शितादरः धर्मेण प्रजाः पर्यपालयत्। तस्य नरपतेः सत्यपि प्रेयसीनां शते सुताभिधानं ज्योतिर्नोदियाय। एवमनपत्यतादूयमानमानसः स राजा कदाचित्सह पर्वतेन महर्षिणा समुपागतं नारदमप्राक्षीत्— 'ब्रह्मन्, सदसद्विवेचननिष्णातमतयो मनुजाः तिर्यग्धर्माणः पशवश्च सन्तानकाङ्क्षिणो दृश्यन्ते। किन्विह पुत्रेण लभ्यते फलं जगति' इति।

नारद उवाच— भो राजन्, श्रूयतां पुत्रेण के गुणाः संपद्यन्ते इति। प्रथमं तावज्जीवत्सुतमुखावलोकनेन मनुजः पितॄणां ऋणमपनयति अमृतत्वं च गच्छति। यावन्तः पृथिव्यां भोगाः यावन्तो जातवेदसि यावन्तश्चाप्सु प्राणिनामुपलभ्यन्ते ततोऽप्यधिकमानन्दं विन्दत्यात्मजमुखावलोकनेन जनकः। पुत्रेण पितरो रक्ष्यन्ते ह्यापदः। आत्मा वै पुत्रनामा जायते। स हि संतरणहेतुर्जनकस्य। किं ब्रह्मचर्येण? किमजिनधारणेन? किं श्मश्रुवर्धनेन? किं तपसा? प्रजननेन गुणवन्तमात्मजमुपलभ्य भवार्णवं तरितुं यत्नवता

भाव्यमभिज्ञेन इति लोकप्रवादः श्रूयते। अन्नेन प्राणाः परिरक्ष्यन्ते। वस्त्रेण शीतमपनीयते। सुवर्णेन रूपं संपाद्यते। विवाहेन पशवः संपदश्चोपलभ्यन्ते। भार्या नामेयं वयस्याभवति। दुहिता ह्यानृशंसभाजनं पितुः। पुत्रस्तु परमे व्योमनि ज्योतिरिति परिगण्यते। बीजात्मना पतिर्जायां प्रविशति। तस्याश्च गर्भे पुनर्नवो भूत्वा दशमे मासि जायते। देवा ऋषयश्च जातां स्त्रियं क्रमेण तेजस्विनीं कृत्वा मनुष्यानब्रुवन् 'एषा वो जननी पुनः' इति। नापुत्रस्य लोकोऽस्तीत्येतत्पशवः पक्षिणश्च जानन्ति। अतस्त्वमद्य वरुणं राजानमुपास्व 'पुत्रो मे जायताम्, तेनैव पशुना त्वां यक्ष्ये' इति।

अथ हरिश्चन्द्रस्तन्निष्टयैव सरण्या वरुणमुपससार। सोऽपि प्रसन्नो भूत्वा 'पुत्रस्ते भविष्यति; परं तु अनेन पशुना मां यजेथाः' इति समयबन्धं कृत्वान्तरधात्।

कालेन प्रधाना महिषी दौहृदलक्षणान्याबिभ्रती निखिलजनानन्दकरमखिललक्षणोपेतं कुमारं सुषुवे। तस्य च रोहित इति नाम चकारानन्दतुन्दिलहृदयो हरिश्चन्द्रः। नामकरणोत्सवावसाने वरुणस्तं राजानमभ्येत्य 'पुत्रस्ते जातः पशूकृत्य तं सद्य एव मां यजस्व' इत्यवादीत्। आत्मजस्नेहाकुलितहृदयो नरपतिः पुरोहितैः संमन्त्र्य 'भगवन् वरुण, पशुरयमद्य सूतिकागृह एव शेते, अतीत्य दश दिनानि यावत्पुण्याहजलेन समुक्षिप्यते तावदेवासौ मेध्यो भवति; तावन्त्यहानि सोढुमर्हसि' इति सप्रश्रयमवदत्। सोऽपि तथेति प्रतिपद्य पुनः पुण्याहदिवसावसाने समागत्य 'प्रारभ्यतां यज्ञः' इत्यचोदयत्। भूपतिस्तु अनुक्षणं समेधमानतेजोबलसमन्वितस्य बालकस्यालम्भने विमुखः 'रे वरुण, पशोरस्य

दन्ता न समुत्पन्नाः तन्मृष्यतां यावदस्य दन्ता जायन्ते' इति प्रत्यवादीत्। 'अस्तु, को दोषः?' इत्युक्त्वा यथागतमगाद्यादसां पतिः। अथ कालेन गच्छता रोहितस्य दन्ता जज्ञिरे। वरुणोऽपि 'महाराज, दन्ता जाता बालकस्य; यथाश्रुतमनुतिष्ठ' इति निरबध्नात्। सुतस्नेहानुबद्धहृदयो हरिश्चन्द्रः 'अशुद्धास्तनंधयस्य दन्ताः, यावदिमे पतन्ति तावदेवासौ मेध्यो भवेत्' इति अवोचत्। तथेत्युक्त्वा अदर्शनं गतः प्रचेताः पुनर्दन्तपतनावधिकं कालं प्रतीक्ष्य राजानमभ्येत्य 'सांप्रतं पतिता बालकस्य दन्ताः, कथमद्यापि विलम्बसे' इत्यभाणीत्। राजा च 'बालस्य दन्ताः पुनर्जायन्तामथ तं यजेय' इत्यवादीत्। विस्मितो वरुणः वर्षद्वयं विलम्ब्य पुनरपि भूपतेः सविधमागत्य 'पशोरद्य दन्ताः पुनः प्ररूढाः किमद्यावधि न सज्जः' इत्यप्राक्षीत्। भवनाङ्गणेषु परिभ्रमन्तं काकपक्षधरं सुन्दरं कुमारमालब्धुं विमुखान्तरङ्गो राजा मन्त्रिभिरुपह्वरे संमन्त्र्य 'भगवन् वरुण, यदा वै क्षत्रियः कवचधरो भवति अथ स मेध्यो भवति इत्यभिज्ञाः कथयन्ति; क्षमस्व तावन्तं कालम्— इत्युक्त्वा वरुणं प्राहिणोत्। कालेन स रोहितः अष्टादशवर्षदेशीयः सन्नाहं प्रापत् सद्य एवागतं वरुणं निरीक्ष्य न किमप्युत्तरं दातुं पारयन् राजा पुत्रमामन्त्र्य यथावृत्तमकथयत्। सोऽपि रोषारुणितनयनः 'नाहमभिलषाम्यात्मनो विनाशम्, एतादृशसमयबन्धः अश्रुतचरः' इति व्याहरन् धनुरादायारण्यमुपातिष्ठत्। पर्यभ्राम च तत्रैव संवत्सरमेकम्॥

हन्त! प्रतारितोऽहमनेन क्षुद्रबुद्धिना राजन्येन इत्यभिक्रुद्धो वरुणस्तमैक्ष्वाकं जग्राह। अनुपदमेवोदरव्याधिना पीडितोऽभूत्

हरिश्चन्द्रः । महोदरेणासह्येन भूमौ परिलुठन्तं जनकमाकर्ण्य रोहितः अरण्यान्निवृत्तः ग्राममाजगाम । मार्गे च इन्द्रस्तं पुरुषरूपेणोपेत्य 'रोहित, देशाटनं कृत्वा अपरिश्रान्तस्य श्रीर्नास्तीति श्रूयते ; जनानां सङ्गे निवासेन सात्त्विकोऽपि पापीयान् भवति ; अतो विजनेऽरण्ये चरतः सत्त्वोन्मेषो दृश्यते ; तादृश एवेन्द्रस्यानुग्रहभाजनं भवति ; तद्वने एव ते संचारः युक्तरूपः' इत्युक्त्वान्तरधात् । ब्राह्मणेनैवमुपदिष्टम् कथं मोघीकुर्याम्' इति चिन्तयन् पुनरपि द्वितीयं संवत्सरमरण्ये चचार । आजगाम च वत्सरावसाने स्वीयां राजधानीं प्रति । तमिन्द्रः पुरुषरूपेणोपेत्य एवमुपादिक्षत्—

'पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः ।
अध्वक्लेशेन पाप्मानः स्वयमेव गलिता भवन्ति ॥'

अतो नगरगमनाद्विरज्य काननमेव पुनः प्रविश्य त्वया यथापूर्वं संचारः कर्तव्यः' इति ।

ब्राह्मणवाक्यं मानयन्रोहितस्तथेति तृतीयं संवत्सरमरण्ये चचार । अथारण्याद्ग्राममियाय । तमिन्द्रः पुरुषरूपेणोपेत्य 'भूमावासीनस्य भागधेयं भूमावेवान्तर्हितम् । उत्तिष्ठन्तमिदमनूत्तिष्ठति । शयानमनुशेते । गच्छन्तं चानुगच्छति । अतः पुनर्यात्रायामेव मन आधीयताम्' इत्युक्त्वा अदर्शनं जगाम ।

द्विजोत्तमस्य वचनं शिरसा वहन्रोहितः अरण्यमेवावगाह्य चतुर्थं संवत्सरं चचार । वर्षावसाने अटवीं परित्यज्यावसथमुपेयिवांसं तं राजकुमारमिन्द्रः पुनरप्युपेत्य 'कलिः शयानो भवति, संजिहानस्तु द्वापरः ; उत्तिष्ठंस्त्रेता भवति ; कृतं संपद्यते चरन्' इति गाथामुपदिश्यारण्यगमने एवाचोदयत् । अहो ! किं कुर्याम् ;

कथं ब्राह्मणवचनमवधीर्य गच्छेयम्' इत्याकलयन्मनसि पञ्चमं संवत्सरमरण्ये भ्रमन्नन्ते राजधानीमाजगाम । तमिन्द्रः पुरुषरूपेणोपेत्योवाच 'चरन्वै मधु विन्दति, चरन् स्वादुमुदुम्बरम्, सूर्यं पश्य श्रेमाणं यो न तन्द्रयते चरन्' इति । दैवमेव मामेवं ब्राह्मणरूपेणाभिभाषते इति निश्चिन्वन् षष्ठं संवत्सरमप्यरण्ये चरितुमुपचक्रमे रोहितः ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ वाल्मीकिश्च कालिदासश्च ॥

---

अस्ति पुनरस्माकमतिदृढो विश्वासः, यत्सहृदयायामवतीर्णान्यस्मदीयानि वाङ्मुखान्यनुकलमालोडयतामात्मना च विमर्शकानां भावुकमणीनां सरससरसे मनसि, श्रीवाल्मीकिकालिदासयोरसाधारणोऽयमुपजीव्योपजीवकभावो नियतमवगम्यमानो महान्तमानन्दमाविर्भावयिष्यतीति । तमेवेममाशयविशेषं विशेषतो विशदयितुं प्रवृत्ता वयं संप्रति कालिदासीयानखिलानपि प्रबन्धान् यथावसरं पृथक्पृथक् परिशीलयितुमभिलषामः ॥

न खलु, मन्यामहे, तादृशः कोऽपि देशः, यत्र परिष्कृतप्रथाभाजने न श्रूयते नामापि वा कालिदासस्य; सैव च भाषाणामितरासां परिष्कारपरिपूर्तिः, यदेतासु शब्दजालैः क्षम्यते कालिदास कविताविपरिणामः; एतदेव किल रम्यं रसिकस्य लक्षणम्, यदयं साक्षात्स्वदेशभाषया वा कालिदाससूक्तिसुधारसमनुकलमविकलमनु-

भवति, परिलघूनि खल्विमान्यक्षराणि, यदुच्यते— पुष्टिमापन्नासु नागरकभाषासु बह्वीष्वस्ति कालिदासकविताविपरिवर्त इति ; यतो वयमेकैकस्यापि तादृश्यां भाषायां प्रतिवर्षं प्रतिमासं प्रतिदिनम्, किं बहुना, प्रतिनिमिषमप्यवतीर्णानवतरतश्च सुबहूनुपलभामहे कालिदाससुभाषितसारविपरिणामान् ॥

अस्य हि महाकवेरनितरसाधारणं किल सूक्तिसुधास्रोतोविसरणम् । न खल्वयमंशतोऽपि शब्दाडम्बरेषु सादरो भवति ; नाप्यर्थेषु परैरनेकैः परिगृहीतां यत्र क्वाप्याश्रयति वक्रपदवीम्; न च क्वचिदपि बलादुल्लासयति कवितल्लजोऽयं रसपरिमलम् । प्रयोगप्रसङ्गे हि नूनमस्य पदमिव हृदयमपि प्रसीदति । यदा खलु कल्याणबुद्धिः कविसार्वभौमः कटाक्षयत्यर्थजातम्, तदा समसमयमेव सर्वतोऽपि समञ्चितमुदञ्चयत्यात्मनो विलासमन्यादृशं सा पुनरेकपत्नी रसदेवता । नियतमेतेन किल तमोपहेन भास्वता भारतभूदेव्या विकसति सांप्रतमपि मुग्धं मुखकमलकम् । अनेन खलु सर्वज्ञशेखरेण कलानिधिना नूनमधिष्ठितं जगदिदमद्याप्यवभासते द्विचन्द्रम् ॥

सहृदयाः, अत्र किल, मन्यामहे, महदस्मादृशां कुतूहलमाविर्भवति तत्त्वाधिगमाय, यदस्य महाकवेः परमन्यव्यावृत्तमन्यादृशं सर्वतः समुत्कर्षसौभाग्यं कुतस्तावदासादितमिति ॥

एतस्य खलु चोद्यस्य, जानीमः, परःशतानि प्रादुर्भविष्यन्ति परस्परविसंवादीन्युत्तराणि । वयं पुनरादिकवेरखिलोपजीव्यस्य भगवतो वाल्मीकेः सुभाषितरत्नाकर एव विगाह्यमानः समजनि सर्वात्मना हेतुरिति वदामः ॥

यदा किल प्रगल्भप्रकृतिर्भगवान्वेदपुरुषो भद्रासनमधिष्ठाय

गभीरेण स्वरेण नियतमास्तिकानामादिशति कर्तव्यम्, अथ च प्रतिषेधत्यकर्तव्यम्; तदैव खल्वेकतः प्रसन्नमना भगवान्वाल्मीकिरुपविशन्नुपशांतेन वचसा साधूनामुपदिशत्युपादेयम्, हेयं च हापयति; अन्यतश्च कालिदासगिरा मूर्तिमती मन्दस्मितसुन्दरमुखी सरसप्रकृतिः साहित्यदेवता सविलासमाश्लिष्य मृदुलमतीनां व्यञ्जयत्यञ्जसा परिग्राह्यम्, त्याज्यं च दूरतः कारयति ॥

इदंपुनरस्माकमनुभवसाक्षिकम्, यदुत जगति महोदधेर्मुक्तासारहेतौ ताम्रपर्णीसंगमे सत्यपि सर्वविदिते न खलु सर्वोऽपि तत्र मुक्तामणीनार्जयितुमभिलषति; अभिलषन्नपि न तदुपान्तमुपसर्पति; उपसर्पन्नपि न निःशङ्कमन्तर्मज्जति; मज्जन्नपि न तलं स्पृशति; स्पृशन्नपि न किंचिदासादयति; आसादयन्नपि न शुक्तीरशम्बूका अधिगच्छति; अधिगच्छन्नपि न बहिः पारमागन्तुं पारयति; पारयन्नपि न तानि मौक्तिकान्यापणे प्रसार्य परेषामभिरुचिमुत्पाद्य स्वयमात्मानं सार्थकं समर्थयतीति । तन्नेदमाश्चर्यावहमसंभावितं वा, यद्विश्वतो विजृम्भमाणेऽपि वाल्मीकीये सुभाषितसारसर्वस्वे, कवयः केचन ततो विदूराः, परे पुनराघ्रातास्वादमात्रमुषिताः, इतरे च स्वसंवेद्यैकविश्रान्ताः, सर्वथा संपन्नाः स्वेषामिव परेषामप्युपकारपराङ्मुखा इति, कालिदासः परं वाल्मीकिसूक्तिसुधारससारास्वादेन तत्प्रतिपादनेन च यत्सत्यमात्मानमजरामरधर्माणमाकलयामासेति च ॥

अस्य हि महाकवेरेकैकमपि दृश्यमुत वा श्रव्यं काव्यं वाल्मीकिसुभाषितरत्नाकरादुद्धृतैरनर्घैरतिचिरत्नै रत्नैरागुम्भिता सर्वसंभाविता रत्नावली खल्वेकैका । तत्र चान्यतमः कान्तिकमनीयः सुदृशां हृदयधार्यो मणिहारः खल्वयम्, यन्मेघसंदेशो नाम । अहो 'आ-

कारो ह्रस्वः कीर्तिश्च महती ।' अथ पुनः कस्य? नन्वस्यैव मेघसंदेशस्य । सर्षपान्तः किल सन्ति समवस्थिताः समुच्चिताः सप्तापि सागराः । मेघसंदेश इति कियानयमक्षरनिक्षेपः; कियच्चात्र सौष्ठवं शब्देन, सौन्दर्यमर्थेन, सौवादवं वर्णनया, गौरवं गुणेन, अलंकरणमलंकारेण रामणीयकं रसेन ॥

(क्रमशः)

॥ श्रीः ॥

# ॥ आधुनिकी संस्कृतस्थितिः ॥

---

[अयमुपन्यासः अनन्तशयने राजकीयमहापाठशालायां श्रीमतां पण्डितोत्तंसानाम् राजराजवर्मदेवानामाध्यक्ष्ये प्रवृत्ते सरस्वतीविजयनाम्नः समाजस्य प्रथमे वार्षिकोत्सवावसरे पण्डितसभायामनुवाचितः सरसया सरलया च वाग्धोरण्या सहृदयानाह्लादयति । प्रदर्शयति च रचयितुः श्रीमतो महोपाध्याय-सु-नारायणशास्त्रिणो रासिक्यमभिज्ञतां चेति सहृदयायां प्रकाश्यते ।]

अयि! भोः! सभास्ताराः! महामहिमानः! इह किल महीतले जनिमता मनुजेन सम्पादनीयोऽर्थः क्रियासमभिहारेण परमेणापि प्रयत्नेनाविवेकान्धतमसेनाविलस्य मानसस्य प्रसादनं नाम । येन खलु परावरतत्वज्ञाः पङ्क्तिपावनाः पावनचरिता विवेकचक्षुषोऽस्माकं पुराणपुरुषा दूरदर्शिनीयन्त्रसदृक्षेषु स्वकीयेषु निर्मलेषु स्वान्तेष्वतीन्द्रियानप्यर्थान् सन्निधाप्य निखिलमपीदं धरामण्डलं करतलामलकवदद्राक्षुः । येनैव चाधुनिकाः पौरस्त्या विद्वन्मणयोऽपि नूत्ननूत्नान्यव्युत्पन्नानामापातरमणीयानि व्युत्पन्नानां विचारमधुराणि सहृ-

दयहृदयमहयालूनि वस्तुतत्त्वान्युपजानते । यस्यैव च माहात्म्याज्जप्पान् देशीयाः प्रजाः संख्ययाल्पीयस्योऽपि शौर्येण धैर्येण नीत्या मत्या च परचक्राणि भाययन्त्यः फलानुमेयेन प्रारम्भेण स्वकीयस्य राष्ट्रस्याविच्छिन्नं कुशलमाशासानाः साम्प्रतं दशस्वपि दिक्षु आकल्पं विनिखातयशःपताकास्तम्भाः स्वातन्त्र्यमुपभुञ्जानाः परमां समृद्धेः काष्ठामासदन्निति विदितमेव ननु भावुकानां तत्रभवतां श्रावकेभ्यो वृत्तान्तपत्रेभ्यश्च ॥

तच्च प्रसादनं विदुषां गोष्ठीषु मेलनेन, तेषामुपदेशानामुपादानेन, तत्र स्वस्याभिप्रायप्रकाशनेन, स्वयं वाणीमुखप्रणयनेन च सिध्यतीति निश्चप्रचमेतत्सर्वेषामपि । एवं प्राप्तावसरे मनःप्रसादने प्रकृतया **सरस्वतीविजय**समाख्यया नाम्नैव व्याख्यातवैभवयानया समज्यया 'अस्माकमुपजीव्याया मङ्गलानामधिष्ठाव्याः संस्कृतभाषाया आधुनिकी स्थितिरुपवर्णनीया', इति समाज्ञप्तोऽयं जन उपन्यासकधौरेयेण पुरुषेण सुलभायाः पण्डितानां श्लाघाया लिप्सया चापलाय प्रचोदितः सन् सुधर्मासधर्मण्यस्यां परिषदि विबुधमणीनां सान्निधाने पञ्चषाणि वाक्यखण्डान्युपहृत्य युष्मान् सेविष्ये ।

विवेकचतुराः! महाभागाः तत्र भाषाया अस्या आधुनिकस्थितिवर्णनं पुरातनस्थितिवर्णनमपेक्षत इति किञ्चिदिव कालं विवेक्तुमाङ्गलेयैः पण्डितैः प्रहतेन पथा मनः सञ्चारयामः ॥

भाषाया अस्याः कालो **वेदकालः पुराणकालकाव्यशास्त्रकालश्चेति** त्रिधा विभक्तः परिकल्पितो वर्तते । अत्र वेदकालो नाम न केवलं चतुर्वेद्या उत्पत्तिकालो विवक्ष्यते, अपि तु ब्राह्मणोपनिषदादिकालोऽपि । तदानीञ्चेयं गैर्वाणी वराकी वाचकानां शब्दा-

नामल्पीयस्तया महत्तरान् हृदयङ्गमान् शास्त्रीयान् वादान् प्रतिष्ठापयितुमप्रगल्भा अपरिपुष्टाङ्गी कुलवधूरिव कोणे निलीयमाना स्वकीयं प्राभवं बहिः प्रदर्शयितुं नेष्टेस्म । अत एव खलु ‘ चतुर्वेदी केवलमतिप्राचीना, उपनिषदादयः सर्वे आगन्तुका आन्तरालिकाश्च, ऋग्वेदादिष्वग्निसूर्यादीनां स्तुतिरेव भूयिष्ठतया कृतोपलभ्यते न तु प्रणिहितमनोभिर्निर्धारणीया बृंहितया वाग्घोरण्या साटोपं ग्रथनीया वाचोयुक्तयः प्रतिपाद्यन्ते । उपनिषत्सु प्रतिपादिता अध्यात्मतत्वोपायाः सर्वे वैदेशिकेभ्यो विद्वद्भ्यः सकाशाद्भारतवर्षवासिभिः पण्डितैरुपात्ताः स्वकीयायामप्रौढायां सङ्कुचितायां भाषाया हठात्कारेण प्रवेशिता इत्यत्र तान् ग्रन्थान् परिशीलयतामन्तःकरणप्रवृत्तयः प्रमाणम् । अत एव भारतखण्डनिवासिनो विद्वांसः स्वेषां ज्ञानोपदेशेन बहूपकृतवतो वैदेशिकान् क्षत्रियसंज्ञितान् कृत्वा तेभ्यः स्थानमानादीन् दत्वा स्वसमानप्रतिपत्त्या भावयन्तस्तेषु सर्वदा कृतज्ञा आसन् । आगन्तुकत्वादेवोपनिषत्सु प्रायस्तत्रतत्र क्षत्रियाणामेव परस्परं संवादा उपलभ्यन्ते । अत एव च ज्ञानकाण्डं कर्मकाण्डमिति द्विधा विभक्तं दृश्यते । अन्यथा कथमेषाभाषा जीर्णाङ्गी अन्यत्र हैन्दवग्रन्थेष्वदृष्टश्रुतपूर्वान् बहुतरैर्वाग्विस्तरैरुत्प्रेक्षणीयान् नवनवान् विषयान् प्रतिपादयितुमीष्टाम्? नहि खल्वाङ्गलेयभाषायां प्रसिद्धं लब्धप्रतिष्ठं प्रकृतिशास्त्रं केरलकर्नाटादिभाषासु साम्प्रतं दृश्यत इति केरलैः कर्नाटैरन्यैर्वोपज्ञातमिति वक्तुं शक्यम् अन्यत्र प्रकृतिशास्त्रप्रतिष्ठाया अनुपलम्भात्तदुपादानकारणानाञ्चादर्शनात् ’ इति नवीनाः संस्कृतभाषाया आगममुत्पश्यन्तोऽभिप्रयन्ति ॥

एवञ्च पर्यालोच्यमाने वेदकाले गैर्वाण्या वाण्या अस्याः सर्व-

जनाशास्त्या परिपुष्टिर्नासीदिति सुप्रतिष्ठितमनुमानम् ॥

पुराणकालो नाम साहित्यव्याकरणशास्त्रकालात्प्राचीनो महाभारतरामायणादीनामुत्पत्तिकालः परिगण्यते संख्यावद्भिः। यतो रामायणमहाभारतादिपुराणानां तत्र तत्र प्रघट्टके काव्यप्रकाशादिसाहित्यप्रबन्धेषु निरुक्तानां नियमानामुल्लङ्घनं तानि परिशीलयतां काव्यपरिशीलनपरिपक्वमानसानां ब्रह्मानन्दसब्रह्मचारिसाहितीरसानन्दलीनानां कविवेदान्तिनामेवान्तरङ्गाणि परिचिन्वन्ति। तथा हि— पुराणेषु क्वचित्सन्दर्भे 'अमुकसन्दर्भेऽमुको रसो न स्फोरणीय' इति साहित्यशास्त्रेण यत्र निषिध्यते स एव रसः प्रबन्द्धा मूर्धाभिषिक्तः परिपोषितो हृदयपरिमलश्चोद्भासितः। क्वचित्प्रकोणे 'यादृशेन पात्रेण यादृशं वचनं न प्रयोक्तव्यमिति साहितीशास्त्रमनुशास्ति तेनैव पात्रेण तदेव वचनं प्रयुक्तं कविना। 'यस्य रसस्य स्फोरणाय यादृशं वृत्तं यादृशाश्च शब्दाः समाश्रयणीयमिति नियच्छति साहिती तेनैव वृत्तेन तैरेव च शब्दैः स एव च रसः परिबृंहितः संस्कृतचित्तान्विदुष आनन्दसागरे समवगाहयतीति च हेतोः साहित्यकालात्प्राचीनः पुराणकाल इति काव्यरसज्ञैः परिशीलितः पन्थाः। एवं 'लभेत्' 'निवसिष्यसि कौन्तेय' 'मानिषाद प्रतिष्ठान्त्वमगमः' इत्येवमादीनां पाणिनेरनभिमतानामुच्चावचानां प्रयोगाणां दर्शनात् 'शब्दानुशासनकालादपि प्राचीनः पुराणकालः' इत्यत्र संशीतिलेशस्यापि नावकाशः। यद्यपि बहुषु स्थलेषु रामायणादौ कवयित्रा अविचारितसमागताः शास्त्रानुरोधिनः सहृदयहृदयग्राहिणः शास्त्रानुशिष्टरसस्फोरका भूयांसः प्रघट्टकविशेषाः सन्ति, तथापि नह्येतावता तेषामर्वाचीनत्वं कल्पयितुं शक्यम्। यतस्तत्तदुचितसन्दर्भानुसारेण

संस्कृतमनसां निरङ्कुशानां रसिकरसिकानां कवीनां निर्मलमनोभित्तौ ते ते रसा नैसर्गिकाः स्वयं प्रकाशाः स्फुरन्तीति नहि तत्र गवेषणा कर्तव्या हेतूपन्यासस्य । यद्यपि क्वचिन्महाभारतादौ वाच्यमानेऽर्वाचां कवीनां कवनवदेवावभासते, तथापि स भागः कैश्चिदान्तरालिकैः स्वस्वाभीष्टसाधनचतुरैः स्वाभीप्सितस्य प्रमाणत्वसिद्धये मध्ये निवेशित इति केचनोहापोहकुशला आशेरते । निसर्गो हि नामायं मनुष्याणां समेषां स्वोक्तं प्रमाणयितुं लब्धप्रतिष्ठस्य प्रामाणिकस्य कस्यचित्कर्तृत्वेन लेखनम्, अन्यथा कथं नाम सर्वेष्वपि ग्रन्थेषु पाठभेदानां दर्शनावसरः? अधुनापि खलु ग्रामीणाः केचन पुराणरसिकाः 'भोजराजसभायामेकेन कविनैवमुपवर्णितं कालिदासेन त्वेवम्,' इत्येकं पद्यं वदन्तो व्यामोहयन्त्यव्युत्पन्नान् । एवं बहवो ग्रन्थाः कालिदासीयत्वेन परिकल्पिताः सहृदयानां मनांसि व्याकुलयन्तः कविसार्वभौमस्य तस्य यशः कलङ्कयन्तीव । एवं हौणभाषायामपि रसिकाग्रेसरस्य व्युत्पन्नमतेरगाधचित्तस्य लोकव्यवहारविदः 'षेक्स्पीयर्'समाह्वयस्य सुगृहीतनाम्नः कविकुलचक्रवर्तिनो बह्वीषु कृतिष्वन्यदीयानामान्तरालिकीनां कृतीनां तत्र तत्र मध्ये निवेशात् पाठभेदानां च बहूनामुपलम्भाद्व्याकुलीभावेन न पारितमद्यावधि निर्धारणाय तद्भाषाप्राज्ञैः । एवंच पुराणकालेऽपि भाषाया अस्या वैदिककालापेक्षयोत्कर्षस्य सत्त्वेऽपि स्वस्याः पोषकाणां शास्त्राणामभावान्नहि साम्प्रतमिव परिष्कृताभूदितीदं विशदं चर्चकानां पण्डितानाम् ॥

काव्यशास्त्रकालो नाम—पुराणकालादर्वाचीनः साहित्यादीनामुत्पत्तेरनन्तरश्चेत्यनुमिमते वैज्ञानिका भाषाचरित्रकाराः । तथाहि—साम्प्रतिकानां सर्वेषामपि कवयितॄणां कवनानि तत्तच्छास्त्रानुशिष्टानि-

यमानुरोधीन्येवास्माभिर्दृश्यन्ते— यथा अश्वघोषकालिदासप्रभृतीनां बुद्धचरितरघुवंशादीनि काव्यानि । एवं गच्छति काले पण्डितानां परस्परं प्रतिष्ठाप्राप्तिप्रयुक्तयेर्ष्यया 'प्राचीनमेव शास्त्रं माध्यस्थ्येन लब्धप्रतिष्ठं प्रमाणम् । पाणिनिमम्मटप्रभृतयः प्राचीनाः शास्त्र-द्रष्टार एव प्रामाणिकाः तदुपज्ञान्येव शास्त्राणि प्रमाणानि । यतस्ते सर्वज्ञाः तदुक्तनियमोल्लङ्घने प्रत्यवायः, इति वदन्तोऽर्वाचीनाः सर्वेऽपि विपश्चितः पूर्वोक्तैर्नियमैर्निगडिताः स्वान्तेषु स्वयं भासमान-मपि भावविशेषं शास्त्राननुसरणप्रयुक्तप्रत्यवायभियाऽनाविष्कुर्वन्तो गतानुगतिकतामेवावलम्बमानास्तथापि स्वबुद्धिकौशलेन स्वस्वकाव्या-नि तेनैव पथा परिष्कुर्वाणाः 'तान्येव शास्त्राणि सर्वसम्प्रतिपन्नानीति मत्वा सुदूरं प्रतानयन्तः स्वकीयानायुष्कालाननतिप्रयोजनानतानिषुः । अत्र च नाम भारतखण्डमधिवसतां विदुषां बलवान् प्रयत्नः । यत् सर्वेऽपि पण्डिताः साम्प्रतं 'स्वोक्तं लोकानामनादेयं माभूत्', इति प्रत्याशया स्वप्रतिभावैदग्ध्यं सर्वमपि प्राचीनशास्त्राणां व्याख्याकरणे-ष्वेवोपयुञ्जानाः 'व्याख्या' 'प्रव्याख्या प्रप्रव्याख्या' इति रीत्यैकस्यैव ग्रन्थस्य प्रत्येकमनुक्रमेण वा महता प्रयासेन शतशो व्याख्या निर्मि-माणाः स्वप्रतिभाकल्पितं मूलकारेणास्मृतमपि तस्याभिमतमेवेद-मिति वितण्डया युक्तिकोटिभिश्च साधयन्तोऽनार्षत्वापत्तिभिया स्वकीयं निरर्गलमाशयविशेषमनाविष्कुर्वन्तः स्वकीयमुद्यमं सर्वमल्पीयसे प्र-योजनाय समुपयुञ्जत इति कष्टं भारतवर्षवास्तव्यानां च्छात्राणां बालानां दौर्भाग्यम् । दृश्यते हि नाम न्यायशास्त्रस्य प्रकरणग्रन्थ एव 'कारिकावली, तस्या व्याख्या 'मुक्तावली' तस्या व्याख्या 'दिनकरीयं' तस्य व्याख्या 'रामरुद्रीयम्' इति । एवं व्याकरणेऽपि—

सिद्धान्तकौमुद्याः 'तत्त्वबोधिनी', 'मनोरमा' 'शेखरः' मनोरमायाः 'शब्दरत्नं', शेखरस्य 'भैरवी' 'शाङ्करी' इति क्रमेण । पुराकाले छात्राः सर्वे गुरुकुले वसन्तो व्याकरणाधिजिगांसया पाणिनेरष्टकं कण्ठस्थं कृत्वाऽचार्यस्य मुखाद्यां काशिकाख्यां पठित्वा महता प्रयासेन बहुना कालेन साधुशब्दानज्ञासिषुः । तमेतं दुरुदर्कं बालकानां परिजिहीर्षन् धर्मकीर्तिर्नामा महावैयाकरणः परिनिष्ठितरूपनिष्पत्तिसाधकानि सूत्राणि तत इत आवापोद्वापाभ्यामुद्धृत्यैकत्र सङ्कीर्य रूपावतारं नामानर्घं ग्रंथं निर्मायाध्येतृभ्यः परिनिष्ठितरूपसम्पादनपथे सुबहूपचकार । तदनन्तरं रूपावतारे प्रदर्शितेन वर्त्मना भट्टोजिदीक्षितः पाणिनेरष्टकमापादचूडं व्याकुलीकृत्य लोकोपयोगानुपयोगविवेकं विना विरक्तो योगीव काचान्मणींश्चेवोपयुक्ताननुपयुक्तांश्च भागान् समपक्षपातेनोपाददान एकस्मै प्रयोजनायाऽरमणीयेनापि पथा सञ्चरमाणो ग्रन्थवितानैकदृष्टिर्बालकानां प्रकृतिकोमलानि मनांसि व्यासञ्जयन् वैयाकरणधुरीणतासम्पिपादयिषया स्वाशयं निगिरन् सिद्धान्तकौमुदीं व्यररचत् । तदनन्तरं तदनुगामिनः पण्डिताः दीक्षितवरेण दृष्ट एव पन्थाः परिष्कारस्य परमोत्कर्षः, एषैव शैली रूपाणां निष्पत्तौ बालेभ्यः सुगमतयोपकर्तुं तेषां मनांसि वशीकर्तुञ्च युक्ततरा, सिद्धान्तकौमुदीकार एव पाणिनेराचार्यस्य हृदयं जानाति, इत्यादिभिर्बहुभिर्विकल्पैर्घूर्णमानमानसास्तमेव ग्रन्थं मूर्धन्यभिषिच्य प्रतिष्ठाप्रेप्सया स्वैर्निर्मितान् ग्रन्थान् तस्य सामन्तान् परिकल्प्य तन्महिमानं दिक्षु विदिक्षुच प्राचकटन् ।

(क्रमशः)

# ॥ शंकराभ्युदयः ॥

(पूर्वतोऽनुवृत्तम् ।)



गलत्करोदञ्चितकङ्कणोल्बणं
  निरीक्ष्य यं नृत्यति कालिका स्वयम् ।
तमद्भुतं वीक्ष्य स नीलकन्धरं
  ततस्तपस्वी गरुडापगामगात् ॥ ३८ ॥

वीणाभृतां पावयितुं स्वरालया-
  दुपैति यत्रोपतटं सुरापगा ।
निमज्ज्य तस्यां निखिलागमाकरं
  स कोट्टलंपाकमटीकताकरम् ॥ ३९ ॥

पवित्रयन्नत्र स भैक्षचर्यया
  स्वयंभवस्वामिसुधीनिकेतनम् ।
पिनाकिनीं प्राप धुनीं विवर्तते
  पिनाकिनी यत्र निमज्जतां तनुः ॥ ४० ॥

विधाय तस्यां विधिवन्निमज्जनं
  शुचिर्ययौ शोणगिरीशितुः पुरीम् ।
महानलस्तम्भवपुर्महेश्वरो
  व्युदास यस्यां विधुवेधसोर्मृगम् ॥ ४१ ॥

अगेन्द्रजा यत्र किलातिकोमलं
कलेबरार्धं ददती कपालिने ।
तदीयमर्धं परुषं ततोऽग्रही-
ज्जडात्मजन्मा किमु वेत्ति सांप्रतम् ॥ ४२ ॥

पितृप्रसूं वन्दितुमुद्यतो रुषा
पृथग्भवद्वामकरो यदञ्जलिः ।
क्षणेन भूषाहिफणेन पूर्यते
तमर्धनारीश्वरमभ्यवन्दत ॥ ४३ ॥

निरीक्षमाणः पथि सत्यमङ्गलं
निवासयोग्यं मणिखेटयज्वनः ।
पयोनदीं प्राप पयो यदम्भसा
विमिश्रितं वेत्तुमलं न सारसैः ॥ ४४ ॥

इहावगाह्य प्रयतो यतिः शनै-
रियाय सत्यव्रतमिन्दिरास्पदम् ।
रमाधरास्वादरतोऽपि माधवो
वपारसं यत्र स बहुमन्यत ॥ ४५ ॥

सरस्यनन्तस्य समाचरन् क्रियाः
निरस्य मोहं निबिडं तपोनिधिः ।
सपुण्यकोटीनिलयं समाश्रयन्
सपुण्यकोटीनिलयं स्वमप्यवैत् ॥ ४६ ॥

अवन्दतानिन्दितभक्तिरिन्दिरां
ततो महादेव्यभिधां तपोधनः ।
हरिः स्ववक्षःस्थयदीक्षणान्नृणा-
मभीष्टसिद्धौ वरदत्वमश्नुते ॥ ४७ ॥

चतुर्भुजस्तम्भचमत्कृते हरे-
रनर्घवक्षोहरिनीलमण्डपे ।
स्मरागमं कौस्तुभरत्नपीठिका-
स्थिरासिका व्याकुरुते सदैव या ॥ ४८ ॥

विधाय डोलां वनमालिकां विभो-
र्भुजान्तरे पुङ्खितभूरिकम्पिताम् ।
तदीयगन्धोत्तरलालिझंक्रिया-
विलासगीतीविहृतिं तनोति या ॥ ४९ ॥

स मस्करी काञ्चिपुरीं गरीयसी-
मथ क्षितेरद्भुतकाञ्चिमैक्षत ।
असावशेषश्रुतिनीविरादरात्
पुरारिराराधयते चिराय याम् ॥ ५० ॥

त्रयी यदद्वैतरसालवल्लिका-
व्यनेकशाखोपचितात्मके उभे ।
तयोरियत्येव भिदा यदादिमा
स्फुरत्फला मूर्ध्नि परा तु मूलतः ॥ ५१ ॥

कुतूहलेनाथ कुलाद्रिकन्यका-
कुचाग्रसीमैणमदेन मुद्रितम् ।
महोनिधिं तत्र महाहिसंगतं
विलोकयन्नित्यमसौ व्यजिज्ञपत् ॥ ५२ ॥

रसालमूले रचितासिकं तदा
गवेषमाणा गहनागमाञ्चले ।
विभो लभन्ते यदमी विपश्चितो
भवन्तमेषा तव वैभवोन्नतिः ॥ ५३ ॥

विमुञ्च चान्द्र्या कलया वियन्नदीं
विधेहि कम्पाधुनिमेव मूर्धनि ।
चिरेण ताभ्यामनपाहृतं च य-
त्तवाङ्गजं तापमपाजहार सा ॥ ५४ ॥

गिरीश मारग्लपिताशये यदा
कृतानुकम्पा समजायत त्वयि ।
तदादि कम्पेति नदीयमीर्यते
न भीमसेनः किमु भीमनामकः ॥ ५५ ॥

अगेन्द्रजाकम्पत कम्पया पुनः
प्रभो भवानप्यलमभ्यकम्पत ।
अथापि सा भीरुरितीर्यते भवा-
न्पुनर्न पुण्येन हि लभ्यते यशः ॥ ५६ ॥

भवन्तमेके पुरुषं पुरातनं
  परे त्रिलोकीतिलकं बभाषिरे ।
कुलाद्रिकन्याकुचकुम्भसंगते-
  र्बिभर्षि भूम्ना पुलकाङ्कुरं कथम् ॥ ५७ ॥

सुरस्रवन्तीसतताहत स्वभू-
  शिरःस्रगङ्कूरमुशन्ति केचन ।
शशाङ्करेखामहमीशपाण्डुभू-
  शरासनाघातकिणं तु साधये ॥ ५८ ॥

सुधांशुरेखोभयकोटिनिःसर-
  त्सुधाकणोदञ्चितमौक्तिकावलिः ।
कुलाचलाधीशकुमारिकाकर-
  ग्रहोत्सवे ते शुभिकाभवत् किमु ॥ ५९ ॥

धनंजयोदग्रधनुर्लताहति-
  प्ररूढगाढव्रणशान्तये प्रभो ।
शिरस्यहो शुभ्रदुकूलपट्टिका-
  सुरस्रवन्ती भवतोऽभवत् किमु ॥ ६० ॥

इति स्तुवन्निन्दुकलावतंसकं
  ... ... ... ...
पुरंदरप्रष्ठदिगीश्वरावली ।
  पुरन्ध्रिकालंक्रियमाणमण्डपम् ॥ ६१ ॥

निरन्तरोपान्तसुवर्णगोपुरं
चिरत्नचिन्तामणिजालनिर्मितम् ।
... ... ... ...
... ... ... ... ॥ ६२ ॥

कुरङ्गनाभिद्रवकुङ्कुमच्छटा
पटीरकर्पूर.... .... क्कणम् ।
मणीमयादर्शमनोज्ञझल्लिका-
कनद्वितानोज्ज्वलकायमानकम् ॥ ६३ ॥

तत्र क्वचिद्रुचिरतप्तसुवर्ण.... ...
... तादिबहुबाह्यमताध्वनीनान् ।
पश्यत्पदप्रमुखसूत्रकृतांश्च विद्या-
भद्रासनान्तिकगतानयमालुलोके ॥ ६४ ॥

तत्र स्थितान्निगमशेखरदेशिकेन्द्रो
वादेविजित्य विविधानपि बालमार्तिकान् ।
पाणौ सनन्दनमसाववलम्ब्य विद्या-
भद्रासनं तदधि ... हितुमुच्चचाल ॥ ६५ ॥

शृङ्गारसान्द्रकवितासरणावजित्वा
मामङ्ग साहसमिदं सहसा न कुर्याः ।
इत्यूचिषीं विधिवधूं च विजित्य विद्या-
भद्रासनं विधिरिव स्वयमभ्यरुक्षत् ॥ ६६ ॥

तथागतकथा मुधाजनि तथैव तौतातितं
मतं विधुतमाकुलाकुलमभूत्कुलं विद्विषाम् ।
क्षणेन नयवद्विदा हुतमदाः कणादादयः
समुल्लसति भङ्गुरेतरवचोङ्कुरे शंकरे ॥ ६७ ॥

ततो दिविषदध्वनिध्वनिनिवारिताशावली-
धुरंधरसमीरितत्रिदशपाणिकोणाहतः ।
अरुन्ध हरिदन्तरं स्वरभरैर्भ्रमत्सिन्धुभि-
र्घनाघनघनस्वनप्रथमबन्धुभिर्दुन्दुभिः ॥ ६८ ॥

कचभरनहनं पुलोमजायाः
कतिचिदहान्यपगर्भकं यथा स्यात् ।
गुरुशिरसि तथा सुधाशनाः स्व-
स्तरुकुसुमान्यथ हर्षतोऽभ्यवर्षन् ॥ ६९ ॥

अद्वैतसिद्धान्तरहस्यमित्थ-
माचन्द्रताराकमनाकुलं सः ।
कृत्वाविकुर्वाणमनाः प्रणम्य
तुष्टाव देवीं निगमान्तनीवीम् ॥ ७० ॥

करुणारससारसुधा-
वरुणालयविहरमाणदिक्कोणम् ।
अरुणाधरमवलम्बे
तरुणारुणकान्ति किमपि तारुण्यम् ॥ ७१ ॥

एणीदृशमैशानीं
शोणीकृतदशदिशं शरीररुचा ।
वाणीमधुरिपुरमणी-
वेणीकुसुमाङ्कितनखरुचिं वन्दे ॥ ७२ ॥

ईडामहे महेशीं
चूडाविन्यासभूषितसुधांशुम् ।
व्रीडानुरागशबल-
क्रीडावीक्षावशंवदमहेशाम् ॥ ७३ ॥

लवलीलतमतल्लीनव-
लीलागन्धिललिततनुयष्टौ ।
भव लीलाभूति मनो
लवलीढजपारुणिम्नि तरुणिम्नि ॥ ७४ ॥

ह्रींकारपञ्जरशुकी-
मोंकारोद्यानकेलिकलकण्ठीम् ।
शृङ्गारराजहाहा-
हुंकारनिदानमाश्रये देवीम् ॥ ७५ ॥

कुसुमविशिख-
शरहृतधैर्यं कटाक्षमात्रेण ।
स्मरहरमपि विदध-
न्मन्दहसितस्फुरितमस्तु वस्तु पुरः ॥ ७६ ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष चापमासः । [संचि. ९.

## सुभाषितानि ॥

*

येऽभिज्ञाः कुसुमोद्गमादनुदिनं त्वामाश्रिताः षट्पदाः
ते भ्राम्यन्ति फलाद्बहिर्बहिरहो दृष्ट्वा न संभाषसे ।
ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे
धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥

सौरभ्यगर्भमकरन्दकरम्बितानि
पङ्केरुहाण्यपि विहाय समागतस्त्वाम् ।
संसारसार सहकार तथा विधेहि
येनोपहासविषयो न भवेद्द्विरेफः ॥ २ ॥

कति कति न वसन्ते वल्लयः शाखिनो वा
किसलयसुमनोभिः शोभमाना बभूवुः ।
तदपि युवजनानां प्रीतये केवलोऽभूत्
अभिनवकलिकालीभारशाली रसालः ॥ ३ ॥

॥ श्रीः ॥

# हरिश्चन्द्रोपाख्यानम् ॥

(पूर्वतोऽनुवृत्तम् ।)

---

द्विजवचनगौरवात् षष्ठमपि हायनमरण्य एव पर्यटन्रोहितः कदाचिदजीगर्तं नाम मुनिं दुर्गतिमापन्नमनशनेन क्षामावयवं अद्राक्षीत् । तस्य च ऋषेस्त्रयः पुत्रा आसन् **शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल** इति । दारिद्र्याभिनम्रं आत्मानमात्मजन्मनश्च पोषयितुमुपायमलभमानमिमं मुनिमभिवीक्ष्य 'भो मुने, त्रिशतं गावस्तुभ्यमहं दित्सामि यदि कुमारेष्वन्यतमं मत्स्थाने पशुत्वेन परिकल्पयितुमभ्युपगच्छामि' इत्यवादीद्राजन्यकुमारः । ऋषिरपि ज्येष्ठं पुत्रमङ्गुल्या निर्दिश्य 'एतं न दास्यामि' इत्यवोचत् । सद्य एव नैनमपीति कनिष्ठं निरदिशत्तदीया धर्मपत्नी । अवशिष्टो मध्यमः शुनःशेपः 'दत्तोऽहमेताभ्यामिति स्पष्टमवगच्छसि किल; अतस्त्वामनुयास्यामि' इत्यवदत् । ततस्तं धेनुभिः क्रीत्वा वनान्निर्गत्य रोहितः पितृसमीपमुपेत्य 'ब्राह्मणपुत्रेणानेनात्मानं निष्क्रीणामि' इत्यवोचत् ।

हरिश्चन्द्रोऽपि रोहितस्याभ्यर्थनां वरुणाय निवेदयामास । सोऽपि 'भूयान्वै ब्राह्मणः क्षत्रियात्; तथैवास्तु' इति तत्प्रार्थनामङ्गीकृत्य राजसूयक्रत्वनुष्ठानप्रकारं तस्मै उपदिश्य अभिषेचनीय दिवसे शुनःशेपः पशुत्वेनालम्भनीय इत्यादिश्यान्तरधात् । संतुष्टान्तरङ्गो हरिश्चन्द्रः तन्निष्टयैव सरण्या राजसूयमनुष्ठातुमुपचक्रमे । तस्य ह विश्वामित्रो होतासीत् जमदग्निरध्वर्युर्वसिष्ठो ब्रह्मा यास्य

उद्गाता । अथ निर्वृत्तेषु यथाविधि पूर्वाङ्गक्रियाकलापेषु शुनःशेपं यूपे पशुत्वेन बन्धुं वैमुख्यमावहत्सु सदस्येषु तत्र सौयवसिरजीगर्त एवोत्थाय 'कर्मण्यस्मिन्नहं सज्जो भवेयं यदि शतं धेनवो दीयेरन् यजमानेन' इत्यवादीत् । तथेति प्रत्यपद्यत राजा । अनुक्षणमेव गवां शतं गृहीत्वा पुत्रं यूपे दृढं बबन्धाजीगर्तः ।

अथाप्रीसूक्तोच्चारणपूर्वकं पर्यग्निकृते शुनःशेपे तस्य (पशोः) विशसितारं ऋत्विजो नाज्ञासिषुः । तदा स एवाजीगर्तः 'पुनरप्यन्यद्गोशतं मह्यं दीयते चेदहमेवैनं विशसिष्यामि' इति निर्घृणमभाणीत् । यजमानश्च गोशतं अविलम्बेन ददौ । यावत्सौयवसिः कृपाणपाणिः तनूजं हन्तुं यूपस्य परिसरमुपासरत् तावदात्मनो मरणमासन्नमवगच्छन् शुनःशेपः 'हन्त! पशुमारं मां पुरुषं घातयिष्यत्यसौ घातुकः, कं वा शरणं व्रजामि, सर्वथा देवताः स्वस्तिकरिष्यन्ति, नास्ति खल्वसाध्यं नाम मन्त्राणाम्, अतस्तैर्देवानुपासे' इति निश्चित्य देवेष्वग्रिमं प्रजापतिं मनसा ध्यायन् 'कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम' इति ऋचा (1-24-1) अस्तावीत् । सद्यः परितुष्टः प्रजापतिः 'अग्निर्वै देवानां नेदिष्ठः तमुपास्व इत्यवोचत् । सोऽग्निमुपससार 'अग्नेर्वयं प्रथमस्यामृतानां' (1-24-2) इत्येतयर्चा । तमग्निरुवाच— 'अङ्ग, सविता वै प्रसवानामीष्टे, अतस्तं प्रसादय' इति । अथ 'अभि त्वा देव सवितः' इत्यादिकया तृचा (1-24-3-5) सवितारमस्तौत् । प्रसन्नः सविता 'वत्स वरुणाय राज्ञे नियुक्तोऽसि, अतस्तं प्रार्थय' इत्युपादिक्षत् । ततः 'इमं मे वरुण श्रुधि हवम्' इत्याद्येकत्रिंशद्भिः ऋग्भिः (1, 24 6—25, 21) वरुणमुपासांचक्रे । तं वरुण उवाच 'अग्निर्वै देवानां

मुखं सहृदयतमः, तं नु स्तुह्यथ त्वोत्स्रक्ष्याम' इति। सोऽग्निं तुष्टाव द्वाविंत्या ऋचाम्। (1, 26, 1—27, 12) तमग्निरुवाच 'विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम' इति। स विश्वान्देवांस्तुष्टाव 'नमो महद्भ्यो नमो अर्भकेभ्यः' इति ऋचा। (1. 27, 13) तं विश्वे देवा ऊचुः 'इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमः, तं नु स्तुह्यथ त्वोत्स्रक्ष्याम' इति। स इन्द्रमस्तावीत् 'यच्चिद्धि सत्य सोमपाः' इत्यादिभिः (1, 30,1—15) षोडशभिर्मन्त्रैः। तेनोत्तमेन स्तवेन प्रीतः इन्द्रः तस्मै हिरण्यरथं ददौ। तं च रथं 'शश्वदिन्द्र' इति ऋचा (1, 30, 16) कृतज्ञतां प्रदर्शयन् सप्रश्रयं प्रतिजग्राह शुनःशेपः। तमिन्द्र उवाच 'अश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम' इति। सोऽश्विनौ तुष्टावोत्तरया तृचा। (1, 30, 17—19) तमश्विना ऊचतुः 'उषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम' इति। स उषसमुपससारोत्तरेण तृचेन। (1, 30, 17—19) प्रोच्यमानेऽस्मिन्मन्त्रे बन्धनरज्जवः एकैकशः स्वयमेव च्छिन्ना गलिताश्च ददृशिरे। ऐक्ष्वाकस्योदरमपि यथापूर्वमासीदगश्चास स राजा। वरुणपाशान्मुक्तः शुनःशेपश्चानन्दमभजत। ऋत्विजो महर्षयः विस्मितास्तन्माहात्म्यं बहुधा प्रशशंसुः।

(क्रमशः।)

## वेमभूपालचरितम् ॥

(पूर्वप्रकाशितात्परम्)

---

पृथ्वीपतिसार्वभौमः पेद्दकोमटीन्द्रोऽपि चक्रवर्तिलक्षणोपेतं ज्यायांसमंसलभुजं तनयमवनिभरणक्षममालोक्य, तस्मिन्नेवाससञ्ज

चतुरर्णवमेखलाया धुरं धरण्याः ॥

तस्मिंश्च शासति धरणीमण्डलम्, कदाचिज्जलधरपङ्कशोषेण दिवमहिमकरपादसंचारयोग्यां वितन्वन्, सूर्यकान्तपावकसमिन्धननाडिंधमः, सौदामनीनृत्तकालावधिः, समाजगाम शरत्समयः ॥

तस्मिंश्च शीर्यमाणजलदवीर्ये ताम्यत्तटिति, मदमन्थरसिन्धुरे, विकस्वरविवस्वति, परिणमति शरत्समये, नरपतिरलघुना दण्डेन दिग्विजयकौतूहली गन्तुमुदमनायिष्ट ॥

अथ नरपतेर्दिग्विजययात्रामुद्घोषयन्ती, गभीरभैरवं रराण भेरी ॥

तदा महामात्रो राजगृहद्वारि हस्तिपकैरानाययामास घनसंघातमिव करिरूपेण परिणतं अञ्जनगिरिमिव कुञ्जरत्वमुपगतम्, आहवकोलाहलं नाम वारणेन्द्रम् ॥

ततः सैन्यसरःपुण्डरीकेण धवलातपत्रेण द्योतयन्नम्बरतलम्, गन्धकरिणमाहवकोलाहलमधिरूढः, अतिमहता बलसमुदायेन परिवृतो नरपतिर्नगरान्निरगात् ॥

एवं प्रचलति बले, 'पश्यतु महाराजः; प्रथममिव भवति पञ्चमं भूतमुत्पतिष्णुना पांसुपटलेन । इयमपि भवतः पतिप्रेम्णा बहुलरजोमण्डलनिभेन धारयतीवातपत्रं धरित्री' इत्येवमादीनि सततं पार्श्ववर्तिनः सकलशास्त्रपारदृश्वनो नर्मालापकुशलस्य स्वामिहृदयवेदिनः साहित्यारामवसन्तमाधवस्य माधवस्य वचनानि समाकर्णयन् प्रथमस्य पयोनिधेः प्रतीरभुवमनैषीत्पृथ्वीं पृथिवीपतिः पृतनाम् ॥

## इति तृतीय उच्छ्वासः ॥

अनन्तरमञ्जनगिरिकूटपटलरुचिपाटच्चरैरुद्धरध्वनिभिरुल्लोलैः

कल्लोलैर्मुखरितहरिदन्तरम्, अमन्दतरमन्दरपातशकलितैरस्थिभिरिवाम्भसस्ततस्ततस्तरद्भिरसंख्यैः शङ्खकुलैः संकुलान्तरम्, पूर्तं सगरस्य, आकरं कौस्तुभस्य, अभिषेकतीर्थमादिवराहस्य, अरहितशङ्खचक्रं कृष्णम्, प्रकाशितसोमग्रहोदयं सवनम्, षण्मुखमिव सुरवाहिनीनायकम्, समरमिव समकरव्यूहं समुद्रमद्राक्षीत् ॥

ततस्तरुणतमालषण्डच्छायामायारजनितारकायमाणशुक्तिपुटोदीर्णमुक्ताफलप्रकरे सौरभभृति वेलाकाननतले निवेशयामास बलानि ॥

तत्र राजभिर्द्वीपान्तरवर्तिभिरुपदीकृतानि यानपात्रोपनीतानि कनकमणिघुसृणकर्पूरकस्तूरिकाचमरवालचन्दनप्रभृतीनि धनानि पश्यन्, कतिपयान्यहानि यापयामास ॥

ततस्तस्मादुत्थाप्य सैन्यम्, कलिङ्गाभिमुखः प्रतस्थे ॥

कलिङ्गेश्वरोऽपि करिबलकम्पितमहीमण्डलेन दण्डचक्रेण परिवृतः, विधातुकामः समरम्, रूपनारायणमभ्याययौ ॥

ततश्चटुलतुरगशफमुखशकलितधरणितलपरागनिकुरुम्बपिहितमिहिरकरजालम्, परस्परकलहायमानकरिबलकरमुसलघट्टनस्फुलिङ्गैः संपाद्यमानरजोन्धकारखद्योतसंचारम्, खड्गविदलितकरिकुम्भमुक्तमौक्तिकप्रकरसंपाद्यमानसुरयुवतिसुभटपरिणयनविकीर्णलाजशङ्कम् - उभयोरपि सैन्ययोरभवदखिलजगदातङ्कजननमायोधनम् ॥

ततो नरपतिः, शरदमिव शरशतनिचिताम्, ग्रीष्मारण्यश्रियमिव निःशेषनिपतितपत्राम्, प्रलयमहीमिव रसातलपतितां प्रत्यर्थिवाहिनीमकरोत् ॥

कलिङ्गनाथोऽपि प्रहरणशतपतनत्रस्नुस्तादृशि समरभुवि न स्थास्नुर्महेन्द्रगिरिशिखरमारुरोह ॥

अत्रान्तरे सुरपदगामिशूरकदम्बकानुप्रवेशसंबाधबिम्बविदलनभियेव पश्चिमदिशि पपात पर्यस्तरथः पतङ्गः ॥

अथ जीवितेन सह विपक्षक्षितिभृतामक्षीयत क्षणदा ॥

उदिते च भगवति किरणमालिनि, कलिङ्गापहृतानां मदकरिणामनेकशतानि संगृह्य, दर्शितसरणिरुत्कलैरासमाद संपदुत्तुङ्गानङ्गान् ॥

अनन्तरमवनिपतिः, अङ्गान्विजित्य, वङ्गभङ्गालान् गङ्गासंगतसागरजलदुर्गदृप्तहृदयान्नौसाधनान्विजेतुम् , प्रवहणैः पृतनां प्राहिणोत् ॥

अधिरूढपोतमण्डलैः खण्डयितुकामैररातिभिरपि प्रतिजगृहे प्रवहणचारिणी पार्थिवध्वजिनी ॥

अथ तयोः सैन्ययोरितरेतरनिस्त्रिंशनिघर्षणविसृमरविस्फुलिङ्गनिकरासूत्रितानेकबाडबस्फुरणशङ्कम् , सुभटहठाक्कृष्टिनिष्ठ्यूतधनुष्टंकारपिहितविशङ्कटतरङ्गकूटकोलाहलम् , पावनभागीरथीसलिलपतितहतसुभटजायमानसगरसुतसभासंमर्दम् , अनवरताक्षिप्यमाणयन्त्रदृषदास्फालनफलत्फलकम्, उग्रमायोधनं बभूव ॥

प्रवहणचारिणा पराक्रमसहभुवा पार्थिवानीकेन भङ्गमनीयत वङ्गभङ्गालवाहिनी ॥

ततः सेनाधिपाः पराजयलज्जाकज्जलितमुखान्वङ्गभङ्गालपतीन् जीवग्राहं गृहीत्वा, प्रतीरवर्तिनः पार्थिवेन्द्रस्य पादयोः पातयामासुः ॥

प्रकृतिदयालुः पार्थिवोऽपिताननुकम्प्य, यथापुरं स्वपदेषु निवेशयामास ॥

अन्यांश्च महीभृतः पौरस्त्यानेवमाक्रामन्, तत्रैव गङ्गासागरसंगमपुण्यतले प्रदेशे महान्ति दानानि वितरन्विशिष्टाचारेभ्यो द्विजेभ्यः कतिपयानि दिनानि तत्रैव उवास ॥

ततः क्रमेण गाढहिमकवोष्णपूष्णि, हसन्तिकाधूपनिर्भरगर्भवेश्मनि, जनतादन्तवीणावादनवैणिके, मन्दचन्द्रप्रकाशे, उत्तरपवमानवैजनने, वनवराहमेदस्करे, वारिदसौभाग्यतस्करे, क्षपायुष्यभिषजि देवतादिनारम्भे जृम्भमाणे शिशिरसमये, वीरगोष्ठीमधितस्थुषो विश्वंभरापतेर्नातिदूरवर्ती मागधः कश्चिदिमामार्यामुच्चैरगायत् ॥

'भास्वन्ति कान्तिनिन्दितकुञ्जरमूर्धन्यमौक्तिकत्विषि ।
समयेऽत्र ताम्रपर्ण्यां मुक्तारत्नानि शुक्तयः सुवते ॥'

तां श्रुत्वा धरणिपालो यशांसीव भूभृतां दाक्षिणात्यानां ताम्रपर्णीमौक्तिकान्यादातुमाचकाङ्क्ष ॥

ततः सैन्येन महता षाड्गुण्यविचक्षणो दक्षिणाशामभिप्रतस्थे ॥

तरङ्गानिलताडनोद्भूतपूगकुहलीधूलिजायमानसैनिकायत्नपटवासेन फलभरनिबिडनालिकेरकलापेन पाकभिदुरकदलीफलरससिक्तकरतललेहनाकुलकपिकुलेन सागरतटाध्वना, लावण्यनिबिडानाससाद द्रविडान् ॥

(क्रमशः)

# आधुनिकी संस्कृतस्थितिः ॥

(पूर्वतोऽनुवृत्तम्)

---

एतद्ग्रन्थविस्तृतीच्छास्वीकृतग्रहिलताप्रयुक्तकाठिन्येन सर्वेऽपि व्याख्याग्रन्था विद्वद्भिरपि दुर्बोधाः समपत्सत। एतादृशीं बालकानां दुर्दशां परिहर्तुकामाः करुणावरुणालया मधुमयफणितीनां मार्गदर्शिनो विशालमनसः कविकुलसामन्तसार्वभौमाः प्रकृतपण्डितराजसभासिंहासनाधिकृताः श्रीमन्तः सुगृहीतनामानो राजराजवर्ममहादेवा व्याकरणग्रन्थान् समग्रानालोच्य प्रकृतोपयुक्तानंशान् परं तत उपादाय मधुरया वाग्भङ्ग्या तान् सविस्तरमुपपादयन्तो यावच्छक्ति प्रक्रियाकार्याणि कारिकारूपेण विरचय्याऽध्येतृणां शब्दापशब्दविवेके निर्वहणीयं भारं लघूचिकीर्षन्तो लघुपाणिनीयसमाह्वं वैयाकरणसर्वस्वं ग्रन्थरत्नमेकं ग्रथित्वा बालकैर्दुर्गमं कान्तारं घण्टापथं विरच्य ग्रन्थमिममाङ्गलेयभाषाध्येतृभ्यः च्छात्रेभ्योऽपि प्ररोचयन्तः पाणिनेरान्तरं तत्वमुपादिक्षन्निति सुबहु धारयामः सन्निधानाय तेषां श्रीमताम्। एवमलङ्काराणां बहुधा विभागप्रदर्शनेन तुन्दिलितैः सूक्ष्मेक्षिकया गवेषणायामैक्यमापद्यमानैर्लक्षणैः परिपूरितेष्वप्पय्यदीक्षितप्रभृतिभिर्निबद्धेषु कुवलयानन्दादिसाहित्यग्रन्थेषु, लोकप्रसिद्धानेवार्थानुपादायातिदुर्बोधगीर्वाणादिविरुदसम्पादितवैदुष्येण निरालम्बेऽम्बरतले सुदृढां भित्तिं रिरचयिषुभिः प्रतिष्ठां कामयमानैर्न्यायशास्त्रकारैर्विरचितेष्वाङ्गलेयविदुषां वैरस्यमुपजनयत्सु न्यायग्रन्थेषु चाधीतिषु विद्यार्थिष्वनुकम्पया श्रीमतामग्रासनाधिपतीनामेषां लघुपाणिनीयाद्यनेक-

प्रबन्धप्रणयनचणेनानेनैव सुभगेन कराग्रेणाङ्गलेयसिद्धान्तपरामर्शकमस्मच्छास्त्रतत्वसंवादकञ्चैकैकं ग्रन्थं निर्माय बालकानामज्ञानतिमिरान्धं चक्षुर्ज्ञानाञ्जनशलाकया समुन्मीलयतामिति सप्रश्रयं सोत्कण्ठञ्चाशंसामहे । एवञ्चैतस्मिन् काले गैर्वाण्याः अस्याः शुक्लदशायामिव सर्वत्र भूमण्डलेऽविच्छिन्नः सततमाधीयमानप्रयत्नः शुभोदर्कोऽभ्युदयः प्रसरीसरीतीति नहि ननु निवेदनीयमनुभवरसिकानां भवतां सन्निधाने । यतोऽधुनाऽस्या अभिजातायाः कोमलाङ्ग्या विबुधवाण्याः परिपोषकाणि शब्दानुशासनानि, प्रसाधकानि साहित्यशास्त्राणि, अन्तःशुद्धिजनकानि न्यायमीमांसादीनि, आमोदकारीणि मधुरललितानि कवनानि च प्रतिदिनं नैकभेदानि प्रवर्धमानानि दृश्यन्ते । बहवश्च पण्डिता अस्यां भाषायां कृतभूरिपरिश्रमा अन्यासु भाषासु स्थितान् रमणीयतमान् सारवत्तरानाशयविशेषान् प्रतिरूप्य सुरभिलानादधते । इदानीमेवचास्यां भाषायां लौकिकान् शास्त्रीयांश्च विषयान्व्यवहर्तुं चर्चयितुं चान्यासु भाषास्विवाऽखण्डा आर्हन्ती समुत्पन्ना । नवनवाश्च सङ्केतशब्दा झटिति तत्तदर्थप्रत्यायका आधुनिकसमयोचिताः सर्वपण्डितसम्मता विरचिता विरच्यमानाः सुश्रवा अग्राम्याश्च दृश्यन्त इति ननु जयति गैर्वाणवाणी । बहवश्च राजानः प्रभवोऽन्ये च महीयांसो व्युत्पन्नाः कवयः शास्त्रज्ञाश्च सन्तः स्वस्वजनपदेषु पाठशालां कलाशालां वा प्रतिष्ठाप्य विद्यार्थिभ्यः छात्रवृत्तिमशनवसनादीनि वा वितरन्तः शिवेतरविनाशिन्या आर्यभाषाणां वृद्धप्रपितामह्या अस्या गैर्वाण्याः मृतभाषेत्यपवादं परिमार्ष्टुकामा एतद्भाषाभिज्ञानां पण्डितानां यथोचितसाहाय्याचरणेन तान् प्रोत्साहयन्तः सततमादधते प्रयत्नमु-

द्धर्तुं भाषामिति हेम्नः परमामोदः । अन्यच्चास्मिन् काले विमलचरिता उदयत्सौभाग्यपूरा धीरशान्तस्वभावाः संस्कृतचेतसो व्युत्पन्नमतयो ज्ञानसुन्दरीमनोरमाप्रभृतयो नारीमणयः काश्चित् कवितायां शास्त्रेषु च पारदृश्वर्यो विरलविरला अपि भारतभूमेः सुकृतपूरपरिपाट्या लब्धजन्मानो दिगङ्गनाकचभारान् स्वकीययशोमल्लिकामालाभिरवतंसयन्त्यो भारतखण्डमिमलङ्कुर्वन्तीति कासारं खनितुमुद्युञ्जानस्य महानिधिलाभः । मान्याः! महनीयाः! यद्येवमेवास्माकं पुण्यभूमिवसन्त्यः सर्वा अपि नारीमणयः पूर्वमनुपदमुपश्लोकितानां विदुषीणां तरुणीमणीनां सर्वजनलोभनीयं व्यवसायं निपश्यन्त्यः सत्योऽपेक्षितेन कालेन गृहभरणकृत्यमशून्यं कुर्वत्योऽन्याभिः प्रातिवेशिकीभिः स्त्रीभिः साकं पैशुन्यकलहादिभिर्यापनीये समये मधुराणि मनःप्रसादकारीणि हितोपदेशकानि लौकिकव्यवहारविवेकज्ञानसम्पादनचतुराणि सत्काव्यानि परिशीलयन्त्योऽन्ततोऽप्रधृष्यं भाषाज्ञानं वा सम्पाद्य स्वकीयान् कोमलाङ्गान् मन्दस्मितचन्द्रिकार्द्रमुखचन्द्रान् स्तनन्धयान् स्तन्यपानसमये मधुरां कोमलवर्णां गैर्वाणीं वाङ्मयीं व्यवहारयन्त्यो बालकानां मविष्यन्तं भारं यदि लघूकुर्वीरन्, तदा कीदृशी नाम स्याद्बालकानां ज्यायसी व्युत्पत्तिशैली गैर्वाणभारत्यामधीतिबोधाचरणप्रचारणानां समये? कियती वा स्यात्प्रतिकलमभिवृद्धिर्भाषाया अस्याश्चान्द्रमास्याः कलाया इव पूर्णिमायाम्? 'मातुः स्तन्यमेव हि बालकानां निदानं भवति दैहिकानां सर्वेषामपि विकाराणाम्' इति समाम्नायतेऽभियुक्तैः । अतोऽध्यापकापेक्षया जननीनामेव बालकानां लोकव्यवहारशिक्षणे निष्कलङ्कं गौरवम् । सत्येवं जनयित्र्यः स्वयं संस्कृतभाषायां चातुरीं सम्पाद्य बाल-

कान् प्रतिदिनं द्वित्राणि वाक्यखण्डानि यदि व्यवहारयेयुस्तदा बालाः प्रौढाः सन्तो भाषाभ्यासे सञ्जायमानस्य क्लेशस्य वैधुर्येणाऽतिदूरूहेऽपि शास्त्राणां वादप्रतिवादपथे सुदृढं पदं निदधाना युक्तिगवेषणामात्रदत्तदृष्टयो विषयान् समग्रानपि देश्यभाषायामिवोपपादितानेकपदे गृह्णीरन् । जायते हि नामास्माकमायासोऽतिमहत्तरः प्रथमं बाल्ये देश्यभाषामभ्यस्य तदनन्तरमपरिचितां भाषामधिजिगांसूनाम् । न हि खलु किमपि शास्त्रं निषेधति स्त्रियोऽन्ये वा संस्कृतभाषां नाधीयीरन्निति । अपि तु पुरातनीनामपांसुलानां धुरि कीर्तनीयानां पुण्यश्रवणकीर्तनानां मैत्रेयीप्रभृतीनां नारीमणीनां विज्ञानघनानि विशिष्टानि कानिचिदुपाख्यानानि स्त्रीविद्याभ्यासस्य संवादकान्यनुकूलान्येव वर्तन्ते । एवं सत्यपि यदस्माकं सुवासिन्यो महानसेऽधिश्रयण्याः समीप एव सततमासीना धूमावृतलोचनाः क्लेशमनुभवन्त्योऽतिरिक्तञ्च समयं दुर्व्यवहारेण यापयन्त्योऽनशनेनाप्याभरणसम्पादनैकताना अविवेकमलीमसमानसाः द्वीपान्तरीयाणां विदुषीणां नारीणां निन्दाभाजनानि भवन्तीति हन्त दारुणो दुर्विपाको भारतवर्षवसतीनां हिन्दुबालकानां शिरोलिखितस्य दुर्भागधेयस्य । अरे! उत्तरोत्तरमनोरथाशंसक! चपल! मानस! हन्त! मन्ये प्रेक्षिष्यसे कदेयं गैर्वाणी सर्वेषां जनानां हृदयमावर्जयन्ती भोजराजादिकाल इव राजकीयभाषावत्सर्वतोमुखं प्रचारं प्रतिपत्स्यत इति? क्व तावत्त्वया सञ्चितं तावद्भाग्यमनुभवितुं पुरा जन्मनि सुकृतमिति प्रसङ्गानुप्रसङ्गेन सुदूरमाकृष्टाः स्मः । अयमन्यो गैर्वाण्या भाग्यातिरेकपिशुनः प्रकारः, यत् हौणीहिन्दीप्रभृतिषु विततासु प्रतिदिनमुदित्वरीषु भाषासु जनपदवृत्तान्तसूचिकाः पत्रिकाः सरसरम-

णीयोपन्यासादिभिर्ग्रथिता मासिकाश्च यथा प्रचाल्यन्ते तद्वदेतद्भाषा-प्रणयिभिः पण्डितप्रकाण्डैः कान्तदर्शिभी रसिकहृदयैः कैश्चित्प्रति-सप्ताहं प्रतिपक्षं प्रतिमासं वैकैकाः सरसोपन्यासगुम्फिता वैदेशिकीं वार्तां मधुरया वाण्या संसूचयन्त्यः इतराभिर्भाषाभिः सम्प्रहर्तुमभि-युञ्जाना इव निरन्तरायं दिगन्तेषु प्रचलन्तीति समङ्कुरितं गैर्वाण्या भाग्यबीजेन। तत्रापि साम्प्रतं भारतखण्डे प्रचलन्तीषु पत्रिकासु सहृ-दया' नाम्नी स्वीयामाख्यां व्युत्पादयन्ती रसिकचूडामणिना एम्. ए. उपाधिधारिणा परिष्कृतचेतोवृत्तिना विद्यानिधिबिरुदविराजमानेन कृष्णमाचार्येण प्रचार्यमाणा सुदर्शनैर्मनोहरैर्वर्णैर्दीप्यमाना समासेच-नकेषु स्निग्धकाकलेषु सुन्दरपदविन्यासमधितिष्ठन्ती सरससंलापच-तुरा समुत्प्रेक्ष्यमाणनवनववाग्विलासा दुर्बोधानपि शास्त्रीयान् वादान् प्रेयसीव मृदुना भाषितेनोदाहरन्ती आङ्गलयोषिदिव सर्वत्र भूखण्डे स्वातन्त्र्येण भ्राम्यन्ती लोकोत्तरा जगति विजयत इति श्लाघामहे वयं पत्राधिपस्य निर्व्याजं व्यवसायम्। महाशयाः! अयमन्यो भा-ग्यविलासस्यातिरेकः यत्— आदिजननीमिमां भाषां दौर्भाग्यान्ध-कूपात्समुद्धर्तुं कामयमानया प्राचीनशास्त्रतत्त्वानि समुद्भासयितुकाम-याऽनया सर्वत्र समपक्षपातयाऽत्युदारया गुणगृह्यया श्रीमत्याऽस्माक-माङ्गलराजधान्या विद्वच्छिरोमणिनाम्न्यौ द्वे परीक्षे परिकल्प्य तद-नुरोधेन सर्वत्र स्वाधीनासु विद्याशालासु पाठ्यपुस्तकानि विद्यार्थिनो-ऽध्यापयितुमन्यत्र पाठशालासु सहायधनदानेन तदधिकारिणः प्रो-त्साह्य पाठयितुञ्चाधिकृतान्नियुञ्जानया समुचितकारिण्या स्थाने कृतः प्रयत्नः फलवान् भविष्यतीति नितान्तं मोदामहे। अस्यां परीक्षाया-मुत्तितीर्षन्तो बहवः छात्रा अहमहमिकया परःशतं प्रयतमानाः केचि-

द्राजकीयकलाशालास्वन्ये केचित् प्रभूणां विद्यामन्दिरेष्वपरे केचन सामुदायिकविद्याशालासु परे केचित् स्वातन्त्र्येण चाधीयानाः परमं प्रयोजनमुद्दिशन्तस्तात्कालिकं क्लेशजालमगणयन्तोऽस्माकं भारतचक्रवर्तिनः समुद्यमं फलेग्रहिं चिकीर्षन्तो लोकानामुपकाराय बहवे कल्पिष्यन्त इति युक्तरूपमिदं गैर्वाणीभक्तानाम् । विशेषतश्च प्रथमपरिचयेनास्या हृदयमजानानया धीरोद्धतयाऽऽङ्गल्या चक्रवर्तिन्या सर्वत्र स्वमन्दिरेषु प्राक्दासीपदे प्रतिष्ठापितापीयं गैर्वाणी क्रमेण परिचीयमाना सौन्दर्यौदार्यादिभिर्गुणैर्महाराज्ञीमाङ्गलीं पदे पदे परितोषयन्ती मञ्जुलैर्भावगर्भितैश्चतुरैः संलापैर्मानसं वशीकुर्वती साम्प्रतं साभिमानं प्रियसख्याः पदव्यां समारोपिता वितानयति सौभाग्येन सर्वत्रापि दिगन्ते स्वस्या अभ्युदयपताकाम् । महाशयाः, किं बहुनोक्तेन यदियं गैर्वाणी सर्वमङ्गला स्वकीयैर्गुणैः सरसरासिकानावर्जयन्ती मत्तकाशिनीव गम्भीरमाशयविशेषं प्रकाशयन्ती जर्मनिप्रभृतिषु द्वीपान्तरेषु वास्तव्यानां विदुषामपि मानसं राजहंसीवाधितिष्ठन्ती स्वकीयं महिमानमनश्वरं द्राघयन्ती लोकोत्तरा जगति सौभाग्यकेतुदण्डमुन्नयतीति स्थाने सन्तुष्यामो वयम् । एतावता प्रबन्धेनास्मिन् काले भाषायाः परिपुष्टिः पोषयितार आदर्तारो जनानां तत्राभिरुचिस्तदभिव्याप्तिश्चोपवर्णिता । इदमन्यदावेदनीयमवशिष्यते सन्निधाने श्रीमन्तः! सहृदयाः! अस्या भाषायाः पोषकेषूच्चावचेषु जाग्रत्स्वपि श्रितजनदारिद्र्यान्धकारोन्मूलनतरणिरास्तिकशिरोमणिः करुणासृणितमूर्तिर्विश्वविख्यातकीर्तिर्विज्ञातसकलधर्ममर्मा स्वप्रजादत्तशर्माऽस्माकं श्रीमान् मूलकमहाराज एव कनिष्ठिकाधिष्ठानमर्हति । यत एष महाराज उदारचरितः स्वकीयायां राजधान्यां राज्यभरणप्राप्तिसनन्तरं भाषामिमां समुन्नतिं निनीषन् नू-

त्नतया काञ्चित्पाठशालां प्रतिष्ठाप्य तत्राध्येतृभ्यः छात्रेभ्योऽशनवसनादीनि वितरन्नुत्तमकक्ष्यायामुत्तीर्णान् विद्यार्थिनः पारितोषिकदानेन प्रोत्साहयन्नन्ते च तान् देश्यभाषापाठशालासु संस्कृताध्यापकपदव्यां विनियुञ्जानः पण्डितांश्च पदे पदे बहुमन्यमान आकल्पमुल्लसन्तीमभ्रंकषां कीर्तिपताकां भूमण्डलेऽस्मिन्निचखान । एवं क्रमेणाभिवर्ध्यमानायामस्यां पाठशालायां धीरोदात्तचरितैः शाणोल्लिखितपाण्डित्यैः सारस्वतोद्योतप्रसूतिभिरनुकरणीयकवनविलासैर्जाह्नवीवेणीमप्यधः कुर्वत्या स्वमुखारविन्दास्स्वरसवाहिन्या गीर्वाणवाणीसुधारसवर्षिण्याऽऽलोच्यमानमधुरयोल्लिख्यमाननवनवविलासया वाग्भङ्ग्या विबुधान् सर्वानप्येकपदे विस्माययद्भिः सिंहसंहननैर्बहुबिरुदविराजमानैः श्रीमद्भिः केरलवर्मदेवैरेतत्पाठशालाभ्युन्नतये परिष्कारप्रकारान् तदा तदा विनिवेद्यमानोऽस्माकं महाराजः सबहुमानमभिनन्दन् परमोत्कृष्टेन वेतनेनाध्यापकान् प्रतोषयन् इतरत्रासुलभया छात्रवृत्या अध्येतॄंश्च परोचयन् लब्धविजयानाञ्च छात्राणां साम्प्रतमाङ्गलविद्याशालास्वपि संस्कृताध्यापकतामनुजानानो महतौदार्येण भोजराजादीनपि महाराजान् विस्मारयत्यस्माभिरिति मुक्तकण्ठं कृतज्ञतां निवेदयामः ।

अपि च गैर्वाणवाण्यभ्युपदयाशंसकाः! उचितवेदिन्या अत्रत्यया राजधान्या रसिकाग्रगणनीया आङ्गलभाषातत्वसारग्राहिणः एम्. ए. उपाधिराजमाना अत्रत्यराजकीयाङ्गलकलाशालायां संस्कृतद्राविडादिभाषाप्रवक्तृपदेऽधिकृताः श्रीमन्तो राजराजवर्ममहादेवा अस्यां गैर्वाणकलाशालायां प्रत्यवेक्षकपदेऽधिकारितास्तदातदा शालामिमां सन्निधानेनालङ्कृत्यान्यैरपरिशीलितं परिष्कारपथमध्यापकानुपदिशन्तो विद्यार्थिनश्च तस्मिन्मार्गे प्ररुचिं जनयित्वा शिक्षयन्तः सर्वात्मना

पाठशालाभ्युन्नतिं कांक्षन्तो नितरां संस्कृतविद्यार्थिनो बालकाननुगृह्णन्तीति दिष्ट्या जितं महाभाग्येन छात्राणाम् ।

इदमन्यदामोदस्थानमस्माकं यत् -- कुलङ्कषावगाढपातञ्जलपारावाराः शास्त्रकाराणामान्तरं तत्त्वं सूक्ष्मेक्षिकया विन्दानाः प्रत्युत्पन्नमतयो नवनवोन्मेषप्रतिभापरिमिलितमानसा. श्रीमन्तोऽस्माकमाचार्यपादाः आर् नारायणशास्त्रिणोऽत्रत्यपाठशालायां अध्यक्षपदेऽधिकारिताः परिष्कृतेन पथा शास्त्राणां गूढमाशयमुपदिशन्तो देशिकेन्द्राणां धुरि प्रतिष्ठापयितव्या अध्यापनविषये पाठशालाया अभिवृद्धौ च नवनवान् परिष्कारानादधाना अभिनवया शैल्या गैर्वाणविद्यासमभ्यसनमुपदिशन्तः शिष्येभ्यो महद्विवेकधनं सम्पाद्य वितरन्तीति सर्वथा वयमधमर्णाः स्मः सन्निधानाय तेषाम् ।

एवमेतादृश्या अस्या अभिरूपाया विबुधगव्यादुरवस्थां समुन्मूल्य सर्वत्र प्रसृमरां गतिं वितनितुमेवायमुद्देशो भारतीविजयसमाख्यायाः सभाया अस्याः । सेयं परिषत् प्रतिपक्षं दशम्यां तिथौ प्रचार्यमाणा बहुभिः सामाजिकैः परिमण्ड्यमाना लौकिकान् शास्त्रीयांश्चोपन्यासान् सरलानुल्लासयन्ती वैयाकरणपण्डितैः स्पृहणीयवाग्विलासैर्निरन्तरपरिश्रमशालिभिः के. साम्बशिवशास्त्रिभिः स्थिराध्यक्ष्येण सश्रद्धमनुचिन्त्यमानयोगक्षेमा गीर्वाणभाषा प्रणयिनो जनाननितितरामुत्कयन्ती भूयसे श्रेयसे कल्पिष्यत इति समभिनन्दामो वयं समाजस्यास्य सततमवन्ध्यमुद्यमम् ।

(क्रमशः ।)

# ॥ शंकराभ्युदयः ॥

( पूर्वतोऽनुवृत्तम् । )



समयामीडे महतीं
  समया संवर्तमुल्लसन्तीं ताम् ।
समयानपेक्षमुत्पल-
  समया श्रेयो दृशैव वितरन्तीम् ॥ ७७ ॥

कनककनत्तनुवल्ली
  जनकसमच्छायतुङ्गवक्षोजा ।
सनकसनन्दध्येया
  घनकबरी पातु शैलराजसुता ॥ ७८ ॥

हस्तिमुखकठिनमस्तक-
  शक्तिहरस्तनभरं जपाशोणम् ।
अस्ति कुलदैवतं नः
  स्वस्ति परेभ्यः सुधाशेभ्यः ॥ ७९ ॥

लवतामघं नयन्ती
  नवतामरसश्रिया दृशा भजताम् ।
भववामतनुर्ममता-
  भवतापविमुक्तये भवतात् ॥ ८० ॥

ह्रीमतिजपतां दददती
सामितिरोभूतपौरुषं रूपम् ।
सा मितिविरहितमाहिमा
कामितसिद्धिं करोतु कामाक्षी ॥ ८१ ॥

संकुचदम्बुजसमकुच-
मङ्कुशपाशेषुचापपरिमिलितम् ।
कुङ्कुमसमरुचि दैवत-
मङ्कुरितं मम कुतूहलं कुरुतात् ॥ ८२ ॥

कलया पुषितचकोरी-
कुलया कोरकितहेमकोटीरम् ।
निलयायितमुनिहृदयं
कलयामः किमपि कटाक्षकारुण्यम् ॥ ८३

ललना शंभोस्त्रिजग-
त्कलनापालनतिरोधिकृतलीला ।
वलनानि दृशोरनिशं
तुलनादूराणि मयि तनुताम् ॥ ८४ ॥

ह्रींलेखार्थमबाधित-
मुल्लेखातीतसहजसौन्दर्यम् ।
तल्लेखावनतं शशभृ-
ल्लेखालाञ्छितं महो महये ॥ ८५ ॥

इत्थं पञ्चदशाक्षरीमनुगतैर्वर्णैः कृतोपक्रमैः
कामाक्षीं बहिराहितास्थितिमतीं पद्यैः समाराधयन् ।
कम्पातीरनिवासिनीं परिचितं नन्तुं बिलाभ्यन्तरं
गच्छन् द्वारि कृतासिकां भगवतीं तुष्टाव स श्यामलाम् ॥

ऐन्दव्या कलयाभिनन्द्यमकुटामैशीं कलामाश्रये
नीपानोकहमञ्जरीमधुझरीनीरन्ध्रसिक्ताङ्ककाम्
विन्यस्य स्तनमण्डले मणिमयीं वीणां मनोहारिणीं
श्रुत्यन्तानभिजातगीति...... त्यालपन्तीं मुहुः ॥ ८७ ॥

ह्रींमुद्रामपहाय वेगशिथिलह्रीवेरजातिस्रजं
.... सकान्परिगलत्काञ्च्या भजन्तीं स्वयम् ।
तामम्बामवलम्बतां मम मनस्तादृक्कदम्बाटवी-
मध्ये दिव्यमणीगृहे शिवमये मञ्चे समासेदुषीम् ॥ ८८ ॥

श्रीमत्यम्ब कदम्बकाननचरि श्रेयस्करि प्राणिनां
देवि त्वं मयि दीनतैकवसतौ दृष्टिं निधेहि क्षणम् ।
कारुण्यामृतसिन्धुबन्धुविलुठत्कल्लोलपारंपरी-
संभेदाप्लवकेलिकागुणनिकासंजातकौतूहलम् ॥ ८९ ॥

ऐन्द्रं भूतल एव भो वितरतादैश्वर्यमुच्चैः शिवा
कालोन्मीलितनीलनीरजवनीकान्तिच्छटाकोविदा ।
सद्यः फुल्लजपाविपाटलतमां शाटीं समाबिभ्रती
कीरं केचन पाठयन्त्यनुदिनं कीर्तिं पुरद्रोहिणः ॥ ९० ॥

क्लीमित्यक्षरमेकदापि गदति क्रीडावशेनापि य-
स्तस्य त्वं रसनाञ्चले कमलभूतन्वीं विधत्से शिवे ।
पाथोराशिसुतामपाङ्गवलने पार्श्वे शतं योषितां
पादाग्रे पृथिवीभुजोऽपि सकलान्पर्यायसेवासहान् ॥ ९१ ॥

सौरभ्यस्फुरमाणबाणजयदे सौन्दर्यसंपन्निधे
सौभाग्यैकनिवासभूमिपरतासौलभ्यसीमावधे ।
वश्याशेषचराचरे कुचजितावश्यायभूमीधरे
पश्यालीक...... यावश्यामले श्यामले ॥ ९२ ॥

इत्थं तामभिवन्द्य लोकजननीमीशामथान्तर्विशन्
कल्पानोकहकाननालिसुभगे कम्पानदीरोधसि ।
कामाक्षीपदपद्मपूतशिखरं कंचित् पुरः काञ्चन-
क्षोणीभृत्कुलधूर्वहं प्रमुमुदे पश्यन् सपद्यञ्जसा ॥ ९३ ॥

इति दन्तिद्योतिदिवाप्रदीपाद्वैतविद्याचार्य सर्वतन्त्रस्वतन्त्र-
लक्ष्मीभवस्वामिभट्टसुकृतपरिपाकविश्वामित्रवंशमुक्ताफ-
लसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामा-
क्षीगर्भसंभवस्य, श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदी-
क्षितस्य कृतिषु शंकराभ्युदयनाम्नि काव्ये
सप्तमः सर्गः ॥

# अष्टमः सर्गः ॥

---

इष्टामथ स योगीन्द्रश्चाष्टापदगिरिस्थिताम् ।
तुष्टाशयः सावरणां तुष्टाव परदेवताम् ॥ १

मेचकंकरमणिच्छायामेचकीकृतसत्पथः ।
मेरुरातनुताद्दूरे मेदुरा मे दुरापदः ॥

कूटत्रितयवास्तव्यकूटस्थपुरुषत्रयम् ।
कुरुतां मध्यमं शृङ्गं कुशलान्यस्य भूभृतः ॥ ३ ॥

काञ्चनार्कारनीपाम्रकाञ्चनाद्रिद्रुमामिह ।
काञ्चनश्रीपुराभिख्यां कामाक्ष्याः कलये पुरीम् ॥ ४ ॥

उच्चैरायससालाढ्यमुच्चावचतरूच्चयम् ।
उद्यानमस्य विद्यानामुद्योतयतु मर्म मे ॥ ५ ॥

कपिशाभं महाकालं कापिशायनलालसम् ।
कलयेऽत्र महाकालीकण्ठाश्लेषसकौतुकम् ॥ ६ ॥

दीव्यद्विन्दुत्रिपञ्चारद्विरष्टाष्टदलाम्बुजम् ।
दिश्यान्मे कालचक्राख्यं दीर्घमायुस्तदासनम् ॥ ७ ॥

वरीयसाभितः कांस्यवलयेन परिष्कृता ।
वरदास्तु वलद्भृङ्गवलया कल्पवाटिका ॥ ८ ॥

मधुमाधवलक्ष्मीभ्यां मानिनीभ्यामिहोल्लसन् ।
मारैकमन्त्री मे भूयान्मासः पुष्पाकरो मुदे ॥ ९ ॥

ताम्राकारेण सालेन तादृशीं प्रापितःश्रियम् ।
तन्वीत संतनाक्रीडस्तन्वीं संतापसंततिम् ॥ १० ॥

शुचिस्मिताभ्यां शुक्रश्रीशुचिश्रीभ्यामिहोल्लसन् ।
शुभानि मे निदाघर्तुः शुचमुन्मूलयन् क्रियात् ॥ ११

हारसीसापरिवृता हरिचन्दनवाटिका ।
हठादघनिदाघोघकोलाहलमपाक्रियात् ॥ १२ ॥

लक्ष्म्यो नाभसनाभस्य लक्ष्मीभ्यामिहसंततम् ।
लसयेन्मम साहित्यलालितीं जलदागमः ॥ १३ ॥

महारकूटप्राकारमहनीयोपकन्ठभूः ।
मनोरथं पूरयतान्मम मन्दारवाटिका ॥ १४ ॥

इन्धानमिह साकूतमिषोर्जश्रीकटाक्षितम् ।
ईशानपुरसेनान्यमीडे शरदृतुं सदा ॥ १५ ॥

प्रथीयसा पञ्चलोहप्रकारेण परिष्कृतः ।
पारिजातद्रुमारामः पातकानि व्यपोहतु ॥ १६ ॥

सहः सहस्य लक्ष्मीभ्यां सरसं संलपन्निह ।
स नो दिशतु सौभाग्यं समयो हिमिकामयः ॥ १७ ॥

कादम्बवाटिकापुष्पकदम्बास्थानमण्डपः ।
करोतु कलधौतेन कल्पितावरणो मुदम् ॥ १८ ॥

तत्रासीनं तपोलक्ष्मीतपस्यश्रीतपःफलम् ।
तमन्तिममृतुं चित्ते तनवै घनवैभवम् ॥ १९ ॥

क्लृप्तमब्जभुवा तस्यां लुप्तमोहं मणीगृहम् ।
तप्तचामीकरप्रायसप्तसालमुपास्महे ॥ २० ॥

भूरेखयास्मिन्वेदाशाभूपदिग्दशपङ्कजैः ।
भूत्यै पञ्चत्रिकोणाभ्यां भूषितं चक्रमस्तु वः ॥ २१ ॥

तत्र तारुण्यसर्वस्वतरङ्गिततनूलताम् ।
तापिञ्छकुसुमच्छायां तरुणेन्दुवतंसिनीम् ॥ २२ ॥

ताटङ्किनीं सुधाफेनतारशोभेन कम्बुना ।
तन्त्रीनादरसास्वादतत्परां नौमि चित्कलाम् ॥ २३ ॥

स्फुरत्सुवर्णप्राकारं भूषितं सिद्धसंपदा ।
पूजयामः पुष्यरागभूरुहप्रमदावनम् ॥ २४ ॥

पुष्यरागमणीसालपुङ्खितानन्दचारणा ।
पुण्या सरोजरागद्रुपुष्पवाटी पुनातु माम् ॥ २५ ॥

पायाद्गोमेदकमयैः पादपैः परिशोभितम् ।
पद्मरागमणीसालपरीतं प्रमदावनम् ॥ २६ ॥

सहिता भैरवैः कालसंकर्षणयुताधिकैः ।
साधयेदीहितं तत्र संवृता योगिनीशतैः ॥ २७ ॥

चारुगोमेदकमणीचमत्कृतनिजावृतिः ।
चकास्तु लीलारण्यानी चञ्चलद्द्रुमा हृदि ॥ २८ ॥

वज्राभिधायिनीमत्र वाहिनीमधितस्थुषीम् ।
वन्देय वल्गु गन्धर्वैर्वज्रेशीमुपवीणिताम् ॥ २९ ॥

वृत्तहीरमणीसाला प्रावृषेण्यमणिद्रुमा ।
वरपन्नगदैतेयपालिता पुष्पवाटिका ॥ ३० ॥

मध्ये वैडूर्यवरणां महानीलाश्मवेदिकाम् ।
मान्यामुपासनासिद्धैर्मनवे मानिनीसखैः ॥ ३१ ॥

मुग्धेन्द्रनीलप्राकारा मुक्ताकारोपवाटिका ।
मुदे भवतु सुत्राममुखदेवोपलालिता ॥ ३२ ॥

रत्नगारुत्मताकारराजतालद्रुवाटिका ।
राजन्मुक्तामणीसाला रञ्जयत्वञ्जसैव माम् ॥ ३३ ॥

कुटिलेन्दुसमच्छायक्रूरदंष्ट्राङ्कुरद्वयीम् ।
कुञ्चितभ्रूसमाज्ञप्तकुलिशास्त्रमुखामराम् ॥ ३४ ॥

(क्रमशः)

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष पौषमासः । [संचि. १०.

## सुभाषितानि ॥

अस्यां सखे बधिरलोकनिवासभूमौ
किं कूजितेन खलु कोकिल कोमलेन ।
एते हि दैवहतकास्तदभिन्नवर्णं
त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥

कोकिल कलमालापै-
रलमलमालोकसे रसालं किम् ।
शरनिकरभरितशराधिः
शबरः सरतीह परिसरे सधनुः ॥ २ ॥

येनोषितं रुचिरपल्लवमञ्जरीषु
श्रीकण्ठमण्डलरसालवने सदैव ।
दैवात्सकोकिलयुवा निपपात निम्बे
तत्रापि रुष्टबलिपुष्टकुलैर्विवादः ॥ ३ ॥

# हरिश्चन्द्रोपाख्यानम् ॥

(पूर्वतोऽनुवृत्तम् ।)

---

अथ शुनःशेपः तैः 'महर्षिकल्पो भवानस्मिन्नभिषेचनीये दिवसे सहास्माभिः संभूयार्त्विज्यकरणेन पुनातु यजमानम्' इति प्रार्थितः तथेत्यङ्गीकृत्य अञ्जःसवं नाम नूतनं सोमाभिषवप्रकारं तेभ्यः प्रदर्श्य 'यच्चिद्धि त्वं गृहे गृहे' (I. 28, 5—8) इति चतसृभीऋग्भिरभिसुषुवे सोमम् । अथैनं 'उच्छिष्टं चम्वोर्भर' (I. 28, 9) इत्येतयर्चा द्रोणकलशमभ्यववनिनाय । अनन्तरमन्वारब्धे यजमाने 'यत्र ग्रावा पृथुबुध्न' (I. 28, 1—4) इत्येताभिश्चतसृभिः स्वाहाकारसंयुताभिर्जुहवांचकार सोमं जातवेदसि । 'त्वं नो अग्ने वरुणस्य विद्वान्' (IV. 1, 4—5) इत्येताभ्यामवभृतं परिसमाप्य अत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार 'शुनःशेपं निदितं सहस्रात्' (5. 2, 7) इति ॥

एवमवसिते यज्ञे शुनःशेपः विश्वामित्रस्याङ्कमाससाद । सोऽयवसिरजीगर्तः 'ऋषे, पुनर्मे पुत्रं देहि' इत्यप्राक्षीत् । विश्वामित्रस्तु 'अपेहि, देवा एवेमं मह्यमरासत, अतो न दास्यामि' इत्यवोचत् । ततः प्रभृति देवरातो वैश्वामित्र आसीत् । तस्मात्कापिलेया बाभ्रव्याश्चोदभवन् ॥

अजीगर्तस्तु ; वत्स, ते जननी अहं च त्वामादरेणाह्वयाव ; अपरिमेयमहिमवतां मन्त्राणां द्रष्टा महर्षिरसि ; जन्मना आङ्गिरस अजीगर्तवंशोत्पन्नोऽसि ; पैतामहात्तन्तोरात्मानं पृथक्कृत्य कुलान्तर-

गमनं ते न युक्तरूपम' इति शुनःशेपमवादीत् ।

सोऽपि 'दारुणं कर्म कर्तुं व्यवसितोऽसि यच्छूद्रेष्वपि दुर्लभम्; अङ्गिरसो वंशे जातस्त्वं गवां त्रिशतं मत्तो वरममन्यथाः तत्कथमेवं भाषसे' इति प्रत्यवादीत् ।

'तात' महता दुःखेनाक्रान्तोऽहमद्यात्मानमनुशोचामि; मदीयमिदं कुत्सितं कर्मात्यन्तं लज्जां जनयति; गवां शतं ते दत्वा निष्कृतिं कुर्याम्' इति व्याहरदजीगर्तः ।

स होवाच पितरम 'यः सकृत्पापकं कुर्यात्कुर्यादेनस्ततोऽपरम्; यत्त्वयाद्य कृतं पापं निष्कृतिस्तस्य नास्ति हि' इति ।

'असंधेयमनेन कृतम् । कृपाणेन त्वां विशसितुं प्रवृत्तोऽयं सौयवसिदारुणो भीमश्च दृश्यते । अतो मैतस्य पुत्रो भूः । ममैवोपेहि पुत्रताम्' इत्यवोचाद्विश्वामित्रः ।

ततः शुनःशेपः 'गाथिनन्दन, ब्रूहि कथमहं जन्मना आङ्गिरसः कुलान्तरं प्रविशेयम्' इत्यप्राक्षीत् ।

विश्वामित्र उवाच—'ज्येष्ठस्त्वं मे पुत्राणां भव; तव श्रेष्ठा प्रज्ञा भूयात्; मे रिक्थभागी भव; तथैव त्वामुपमन्त्रये' इति ।

देवरातः 'भरतर्षभ यद्येवमेव ते पुत्रा औरसा अनुमन्येरन् मित्रभावेन च मामेते पुरस्कुर्युः नर्हि मे श्रेयो भविता' इति व्याजहार ।

विश्वामित्रः पुत्रानाहूय 'भो, मधुच्छन्दो— ऋषभ—रेणु-अष्टकप्रमुखाः सोदराः, अद्यप्रभृति युष्माभिः सर्वैरप्यैकमत्येनासौ देवरातः ज्येष्ठत्वेनाङ्गीक्रियताम्' इत्यभाणीत् ।

विश्वामित्रस्य एकशतं पुत्रा आसन् । तेषु मधुच्छन्दसो ज्यायांसः पञ्चाशत्संख्याकाः पितृवाक्यं नाभ्यनन्दन् । क्रुद्धः कौशिकस्तान् 'भ्रष्टा यूयमवरयोनिं भजत' इति शशाप । तेभ्यः शापग्रस्तेभ्यः आन्ध्राः पुण्ड्राः, शबराः, पुलिन्दाः मूतिबाश्च जज्ञिरे ।

मधुच्छन्दःप्रमुखाः पञ्चाशत्कनीयांसः 'यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम; पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्म' इति देवरातमङ्गचकुर्वन् ।

तुष्टो विश्वामित्रः 'आयुष्मन्तः, सह देवरातेन भवन्तः पशुमन्तो वीरवन्तो मन्त्रद्रष्टारश्च भविष्यथ' इत्याशशंस ।

अत एव 'देवराता रिक्थयोरुभयोः ऋषिः जह्नूनां चाधिपत्ये दैवे वेदे च गाधिनाम्' इत्यैतरेया अधीयते ॥

---

॥ श्रीः ॥

# ॥ गैर्वाण्यां जैनग्रन्थरत्नानि ॥

---

सुविदितमेव सर्वेषामिदं यत्पुरा कदाचिदस्मिन्देशे बहवो जिनसंप्रदायप्रवर्तकाः जैनाचार्याः गैर्वाण्यामनुपमं पाण्डित्यं संपाद्य अनेकानि सहृदयहृदयंगमानि काव्यान्यरचयन्निति ; त इमे वेदप्रामाण्यस्थिरीकरणबद्धदीक्षैर्वादाहवेषु निर्जिताः प्रोत्साहकानां राज्ञामभावेन दुर्दशामापन्नाः कुत्रचित्कोणेषु विद्राविताः सरस्वतीमेव शरणं मन्वानाः श्रीमज्जैनयशःप्रख्यापकानि ग्रन्थरत्नानि प्रथयन्तः

स्याद्वादपरिपाटीं शास्त्रीयनयानुसारेण दृढयन्तः जिनसंप्रदायसरणिमवतीर्णानामन्येषां च अत्यन्तोपकारकानि सुभाषितान्यवशमुद्गृणन्तः सुखेन कालमनयन्निति च ।

तानीमानि ग्रन्थरत्नानि चिराद्बहोरनादृतानि 'अहिंसा परमो धर्मः' इति वाक्यं जिनोक्तत्वादसाधु' इति निर्लज्जमुद्घोषयद्भिः मत्सरग्रस्तैर्द्विजवरैः गर्हितानि निर्भयमात्मनः सत्तां बहिः प्रकाशयितुमवसरमलभमानानि रसिकेनेश्वरेण एतावदवधि सुरक्षितानि सांप्रतं वाराणस्यां श्रीश्वेताम्बरजैनपाठशालातो बहिरवतार्यमाणायां श्रीमज्जैनयशोविजयग्रन्थमालायां दृढं रमणीये च पत्रे मुद्रापितानि द्वादशसंख्याकान्यस्मत्पत्रमन्दिरमायातान्यनुवाचितानि च आनन्दयन्त्यस्मान् ।

## प्रमाणनयतत्वालोकालङ्कारः ।

तेषु ग्रन्थोऽयं प्राथमिकं रत्नं विलसति । रचयिता चास्य सुगृहीतनामा मुनिचन्द्रशिष्यः वादिप्रवरो देवसूरिरिति ज्ञायते । स हि खिस्त्वब्दानामेकादशे शतके समुत्पन्नः जयसिंहदेवनरपतेरास्थाने समादृतः दिगम्बरचक्रवर्तिनं कुमुदचन्द्राचार्यं वादाहवे निर्जित्य श्रीपत्तने दिगम्बराणां प्रवेशं न्यवारयदित्याद्युदन्तः पुरावृत्तवेदिभिराख्यायते । ग्रन्थमिममधिकृत्य प्रस्तावनायां प्रकाशकैर्लिखिता वर्णावलिरिहानूद्यते सहृदयानुवाचकानामुपयोगाय—

'अमुं ग्रन्थं सुगृहीतनाम्नो वादिप्रवरदेवसुरेर्मुखाम्भोजनिर्गलितामृतधाराऽऽसारमिव प्रमाणनयतत्वालोकालङ्कारं अदृष्टपूर्वं जैनमतमन्तव्यप्रमाणविचारकरं दुर्वादिवादवासनानिर्यातनपरं विलक्षण-

भङ्गीकं सप्तभङ्गीतरङ्गरिङ्गितं निबन्धं निरीक्ष्य किमिदं कथमिदं कस्येदं कीदृक्षमिदमिति स्वभावेनैव जिज्ञासवः संपत्स्यन्ते तत्वग्रहाग्रहग्रहिलाः शास्त्रप्रियाप्रियाः। तदत्रावश्यकं किंचनोपन्यस्तुम्। तत्र प्रथममवधेयं धीमद्धौरेयैस्तत्रभवद्भिः यत्कस्यापि मतस्य तत्वमनाकलय्य खण्डनमण्डनबद्धपरिकरा ये यथाजाताः शलभा इव परिपतन्ति ते लभन्ते न स्वात्मविनाशादृते किंचिदपि भावुकम्।

न्यायशास्त्रस्यायमाद्वितीयो ग्रन्थः सुरामः प्रमाणस्यादर्शभूतः, बहवो हि विषयाःसमुपलभ्यन्तेऽत्र जैनशासनस्य, सन्ति चास्मिन्नष्टौ परिच्छेदाः प्रमाण— प्रत्यक्ष– स्मरणप्रत्यभिज्ञातर्कानुमान— आगमाख्यप्रमाण– विषय– फलप्रमाणस्वरूपाद्याभासनयात्मस्वरूप— वादिप्रतिवादिन्यायनिर्णयप्रतिपादकाः॥'

ग्रन्थस्यास्य श्रीदेवसूरिरेव रत्नाकरनाम्नीं महाव्याख्यां निर्ममे। तथाचोक्तम्—

'स्याद्वादरत्नाकरतर्कवेधा मुदे न केषां न हि देवसूरिः' इति॥ मूल्यं चास्याष्टावेव कलाः प्रेषणव्ययमन्तरा॥

## हैमालिङ्गानुशासनम्।

अथ श्रीहेमचन्द्राचार्यवर्यविरचितं लिङ्गानुशासनम् द्वितीयं रत्नं भवति। ग्रन्थेऽस्मिन् सप्तदशभिः श्लोकैः पुंलिङ्गशब्दाः त्रयस्त्रिंशता पद्यानां स्त्रीलिङ्गाः, द्वाविंशच्छलोकैर्नपुंसकलिङ्गाः, द्वादशभिः, पुंस्त्रीलिङ्गाः, षड्विंशैः पुंनपुंसकलिङ्गाः, षड्भिः स्त्रीक्लीबलिङ्गाः, षड्भिः स्वतः स्त्रीलिङ्गाः, पञ्चभिः परलिङ्गाश्च समनुशिष्टाः अत्यन्तमुपकुर्वन्ति गैर्वाणीपठनाभिलाषिणाम् मूल्यमस्य पञ्चैव कलाः, विना प्रेषणव्ययम्।

अनन्तरमस्यां ग्रन्थमालायां सूत्ररूपेण लिखितं सिद्धहेमशब्दानुशासनं नाम स्वोपज्ञलघुवृत्तिसहितं धातुपाठादिभिरुपबर्द्धितं च शब्दशास्त्रं तृतीयं रत्नं रसयति वशयति शाब्दिकान् । ग्रन्थमेतमधिकृत्य प्रकाशका एवं वदन्ति— 'इदं तदेवानुशासनं यस्य कृते बहवो विद्वांसश्चातकचेष्टामवलम्बमानास्तिष्ठन्ति । यतश्चैतदष्टानां व्याकरणामन्यतमरूपं कर्ता चास्य महार्णवन्यास बृहद्वृत्ति धातुपारायणप्रभृतिसपादलक्षपारिमितपञ्चाङ्गीव्याकरणनिर्माता श्रीकलिकालसर्वज्ञहेमचन्द्राचार्यवर्यः । तदिदं स्थूलतरसीसकाक्षरैर्मुम्बापुरीसमुत्पन्नैर्मुद्रितं काश्यां प्रसिद्धे चन्द्रप्रभायन्त्रालये । ये पुरुषा आयासादुद्विग्ना व्याकरणबोधविरहितास्ते अवश्यमेव सन्तोषं लप्स्यन्तेऽस्य पठनेन न चास्ति कश्चित्सन्देहः, ग्रन्थकृतातीव सरला रीतिरापादिता यथा सर्वस्यापि सौकर्यमापद्येत । अथ बालमतिप्रसङ्गेन द्रष्टारः स्वयमेव ज्ञास्यन्ति यो ह्येकं पुस्तकमगृहीष्यत् तस्योपहारभूतं लिङ्गानुशासनमभविष्यत् । मूल्यं मार्गव्ययमन्तरेण सार्द्धं रूप्यकद्वयम् ॥'

(क्रमशः ।)

# ॥ महाकाव्यानि अङ्काश्च ॥

---

सुप्रसिद्धमिदम्— यन्महाकविभिः कैश्चन स्वकीयेषु वाङ्मयेषु अन्तिमे पद्ये प्रतिसर्गं यस्य कस्यापि स्वाभिमतस्य पदस्य अङ्कतया निवेशनमारच्यत इति । अत एव तत्तत्काव्यस्य तत्तदङ्ककव्यपदेशोऽपि सर्वजनीनः । 'महाकवयश्च बिरुदानि च' इति कृतशीर्षकमवतारिते वाङ्मुखे यद्यपि केचनाङ्का मया निरूपिताः ; अथाप्यविशिष्टानपि संघट्य्य तादर्थ्येन प्रकाशयितुमयमिदानीमारम्भः ।

| | | |
|---|---|---|
| भारवेः | किरातार्जुनीये | लक्ष्मीपदमङ्कः । |
| माघस्य | शिशुपालवधे | श्रीपदमङ्कः । |
| श्रीहर्षस्य | नैषधीयचरिते | आनन्दपदमङ्कः । |
| रत्नाकरस्य | हरविजये | रत्नपदमङ्कः । |
| वीरनन्दिनः | चन्द्रप्रभचरिते | उदयपदमङ्कः । |

(चण्डपालस्य नलचम्पूप्रबन्धे हरचरणसरोजपदमङ्कः ।)

एतावता ज्ञाता अङ्का निवेदिताः तदा तदा च ज्ञायमानाः प्रकटीकरिष्यन्ते ।

---

## ॥ महाकवयश्च बिरुदानि च ॥

---

स्मरन्ति खलु पत्रसुहृदः, यदितः प्रागस्माभिः प्रत्यज्ञायि रत्नखेटादिविषये वक्तव्यं वास्तवं तु प्रसङ्गान्तरे प्रतिपादयिष्याम इति ।

संप्रति च तत्रैव प्रवर्तामहे ।

अयं खलु रत्नखेटदीक्षितस्तुण्डीरेषु श्रीशूरसमुद्राभिधाने अग्रहारे श्रीभवस्वामिभट्टस्य लक्ष्म्यम्बायामुत्पन्नः श्रीकृष्णभट्टारकपौत्रो विश्वामित्रवंशमुक्तामणिर्महाकवेः श्रीराजचूडामणिदीक्षितस्य जनकः स्वयं च महाकविर्बहूनां निबन्धानां प्रबन्धेति च ज्ञायते ॥

अस्य च महाकवेः पण्डिताग्रेसरस्य 'शतावधानी' इति प्रख्यातिरप्यासीदिति एतत्कृतभावनापुरुषोत्तमनाटकप्रस्तावनातोऽवगम्यते ।

इत्थं हि तत्र प्रस्तावना—

**सूत्रधारः**— अस्ति खलु कश्चित्तुण्डीरेषु श्रीसमुद्राभिधानोऽग्रहारः ।

तत्रास्ति कश्चित्तरुणाग्निहोत्री
षड्दर्शनीसागरपारदृश्वा ।
शतावधानीत्यपराभिधानः
श्री श्रीनिवासाध्वरिसार्वभौमः ॥ इति ।

अस्य हि महामतेः पितृकृतं नामधेयं श्रीनिवास इति। तस्यैतस्य महानुभावस्य संध्यावर्णनचातुर्या प्रमुदितेन राज्ञा कृतं तु नाम रत्नखेटाध्वरीति ।

एतत्, अन्यच्चैतदीयमितिवृत्तं राजचूडामणिदीक्षितकृतरुक्मिणीपरिणयाख्यमहाकाव्यव्याख्याने बालयज्ञवेदेश्वरकृते स्पष्टमुपलभ्यत इति तत्रत्यान्येव पद्यानि सहृदयानां पुरस्तात्कुर्मः ।

'यः षष्ठो भाष्यकर्तुः क्रतुवरमहितश्रीभवस्वामियष्टुः
श्रीकृष्णार्यस्य दैनंदिनकृतिकृतिनः सोमपः पञ्चमो यः ।
नप्ता योऽद्वैतचिन्तामणिविरचयितुः पौण्डरीकादियष्टुः
सर्वज्ञातुः कुमाराह्वयमिलितभवस्वामियज्वाभिधस्य ॥

श्रीकृष्णार्यस्य पौत्रः प्रतिदिवसमविश्रान्तमन्नप्रदातु-
र्ज्योतिष्टोमादियष्टुर्विविधकृतिकृतः सर्वविद्याधिकस्य ।
यः श्रीवैकुण्ठघण्टामणिरिति महितश्रीभवस्वामिभट्ट-
स्याद्वैतज्ञानधूताखिलकलुषगणस्यात्मजः स्वात्मवेत्तुः ॥

अद्वैतास्त्रकौस्तुभं व्यरचयद्यो वादतारावलीं
मध्वध्वंसनबौद्धतन्त्रमथने वेदान्तवादावलिम् ।
प्रख्यातं मणिदर्पणं समयसर्वस्वं विधेर्निर्णयं
तत्त्वानां परिशुद्धिबोधविमलं रत्नप्रदीपं स्मृतेः ॥

यो भावनापुरुषवर्यमुखान्यकार्षी-
दष्टादशापि च दशाद्भुतरूपकाणि ।
भावोत्तराणि शितिकण्ठजयादिमानि
काव्यानि षष्टिमतनोदमृतायितानि ॥

ध्वन्यध्वन्यमनोविनोदनिपुणाः साहित्यसंजीविनी-
भावोद्भेदरसासवादिकृतयः पारेशतं यत्कृताः ।
अन्ये क्षौद्ररसार्द्रसुन्दरगिरः क्षुद्रप्रबन्धाः शतं
छन्दोज्यौतिषमन्त्रतन्त्रविषया भाषाप्रबन्धास्तथा ॥

अन्याश्च यस्य कृतयो निखिलागमान्त-
सिद्धान्तितान्तरनिरन्तरसूक्तिगुम्भाः ।
षड्दर्शनीसकलमर्मविवेककर्म-
कर्मक्षमाः सुकृतिनां मुदमावहन्ति ॥

संध्यासंधुक्षिताम्भोधरनलिकगणादुद्गतान्सीसखण्डान्
ताराकारान्निरोद्धुं शशिरविकपटाद्बिभ्रतौ रत्नखेटौ ।
अन्योन्यं युध्यमानावुदयचरमभूभृत्प्रवीराविति द्रा-
गुक्त्या ख्यातापराख्यः क्षितिपतिवचसा रत्नखेटाध्वरीति ॥'

एतेन, उदयरक्तं चन्द्रबिम्बं रतिपतिरत्नखेटकत्वेनोत्प्रेक्ष्य रत्नखेटक इति प्रसिद्धो बभूवेति उत्तररामचरितव्याख्यातुः श्रीवीर-राघवसूरेर्वचनस्य मूलमालोचनीयतामर्हतीति विज्ञापयामः ।

अयं च रत्नखेटाध्वरिवृत्तान्तः सर्वोऽपि अस्मन्मित्रमणीनां तञ्जापुरवासिनां श्रीकुप्पस्वामिशास्त्रिवर्याणामनर्घेण सहकारेण ज्ञात इति सर्वात्मना तेषामुपकारं समये वयं स्मरामः ।

इयमपि चिराय चोलेषु कापि किंवदन्ती—

'पुरा किल कोऽपि पण्डिताग्रणीः श्रीरत्नखेटदीक्षितं वादे विजिगीषमाणः, तदीयमावासं प्रभात एव समागतः । तदानीं च बाह्याङ्गणशोधनाय सगोमयजलभाण्डं बहिरागतां कामपि मुग्धां तत्कुलस्नुषामवलोक्य 'अप्यास्ति रत्नखेटदीक्षितः ? तं वादेन जिगीषुरस्मि' इत्यभ्यधादागतः पण्डितः । सा चैतद्वचनाकर्णनासहा अश्रुतिमभिनयन्ती, स्वकार्यव्यग्रा, गोमयाम्बुसेचनावसरतालानुगुणतया

"विपश्चितामपश्चिमेऽथ रत्नखेटदीक्षिते
　सपत्नजित्ययत्नतो विवादकेलिमागते ।
बृहस्पतिः प्रजल्पति प्रसर्पति क सर्पराट्
　षडाननो नताननश्चतुर्मुखश्च दुर्मुखः ॥"

इति पद्यं पठन्ती अङ्गणसंमार्गादिकमकरोत् । श्रुत्वा चैतदागतो विपश्चित् 'अहो अस्य गृहस्य पाण्डित्यम्' इति प्रशंसन्, भयात्पलायनमेव शरणमाकलयामास ॥' इति ।

इदमपि पूर्वावशेषं प्रकटीकुर्मः सांप्रतम् ।

श्रीकण्ठचरिताख्यस्य हि महाकाव्यस्य रचयिता महाकविर्मङ्खः 'कर्णिकारमङ्खः' इति सुप्रसिद्धो बभूव । स हि शब्दार्थसंघटनादिभिरतिप्रौढे वक्रोक्तिविलासलालनीये स्वकीये श्रीकण्ठचरिताभिधे महाकाव्ये कर्णिकारस्य रूपं सौरभ्याभावं च सहृदयचमत्कारकारिणा प्रकारेण एवं वर्णयति—

'विवृण्वता सौरभरोरदोषं
　बन्दिव्रतं वर्णगुणैः स्पृशन्त्याः ।

विकस्वरे कस्य न कर्णिकारे
घ्राणेन दृष्टेर्ववृधे विवादः इति । (६— १३)

इदं च पद्यम्,

'वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥

इति कुमारसंभवस्थं श्लोकमनुस्मारयति ।

अस्य पद्यस्य व्याख्यानावसरे 'कर्णिकारस्य वर्णसौभाग्यं सौगन्ध्याभावश्च कविना युक्त्या प्रतिपादित इति **कर्णिकारमङ्ख** इति प्रसिद्धिः' इति जोनराजः ।

एवं बालभारतकाव्यस्य कर्ता श्रीमान् अमरचन्द्रसूरिरपि 'वेणीकृपाणोऽमरः' इति बिरुदेन प्रख्यातो बभूव । यतः सोऽयं महाकविरेवं किमपि रुचिरमुत्प्रेक्षते—

दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमुदयमनङ्गो विश्वविश्वैकजेता ।
भवपरिभवकोपत्यक्तबाणः कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥ (११–१६) इति ।

अन्येषामपि महाकवीनां बिरुदानि यावल्लाभं तदा तदा प्रस्तोष्यामि इति शुभम् ।

## ॥ आधुनिकी संस्कृतस्थितिः ॥

---

हितचिन्तकाः! अभिरूपमणयः एवमत्र सर्वत्र दिगन्तेष्व-

स्या भाषायाः संवर्धनार्थं नूत्ननूत्नाः सभाः समारभ्यन्तां युक्तिविचारकाः धीमन्तः । सर्वत्र वादकेलिप्रसङ्गे मृद्व्या मधुरया वाग्भङ्ग्या पण्डितसभा सम्भूष्यताम् । पुरातनान् तालपत्रलिखितान् पट्टसूत्रैः सुदृढं निबद्धान् संस्कृतग्रन्थान् वम्रिभिर्भक्ष्यमाणान्निर्मत्सराः सन्तो बहिरवतार्य तान् सर्वजनोपकाराय संमुद्र्य प्रकाश्यताम् ।

अत्र चास्माकं पण्डितानां महती जाग्रत्ता यत् प्राचीनपुस्तकानि पेटिकायां पूर्विकाणां न्यासानिव गाढान्धकारे जागरूकतया गोपायन्तीति । एवंभूतां दशां प्राप्ता बहवोऽस्माकं ग्रन्था अदर्शनंगताः, यत्, महाभाष्यकारेण पतञ्जलिना स्मृतिमात्रगोचरतां नीते कंसवधबलिबन्धननाम्नी नाटके नाद्यापि समुपलभ्येते मन्दभाग्यैरस्माभिः । महाशयाः! संस्कृतभाषाप्रणयिनः! एतादृशमस्माकं दुरुदर्कमाशयविशेषं दूरीकृत्य सर्वेऽपि ग्रन्थाः संमुद्र्यन्ताम् । सर्वेषामपि जनानां विबुधवाण्यामभिरुचिरुत्पाद्यताम् । सर्वत्र नवनवाः सरलसरलाश्च संस्कृतपत्रिकाः प्रचार्यन्तामिति सविनयं निवेदयामि भावत्कं सन्निधानम् ।

परजनक्लेशवेदिनः! पण्डिताः! इदमधुना मृगतृष्णिकायां पिपासोपशमं कर्तुं मनोरथप्रासादसमारोहणम्— यत् अतिविस्तृतायां लोकविश्रुतायामस्यां स्यानन्दूरपुरराजधान्यां साम्प्रतं गैर्वाणवाणीकलाशालाऽद्वितीयैव महाराजेनोदारप्रकृतिना विश्वजनीना प्रतिष्ठापिता दृश्यते । एतादृश्याश्चास्यां कलाशालायामेतद्राज्यान्तर्गतेषु दूरप्रदेशेषु विद्यमानानां धनिकानां बालका बहुलं धनमच्चयं व्यययन्तः प्रवासेन जायमानं क्लेशजातमजानानाः परःशतं पठन्तो यद्यपि दृश्यन्ते । अथापि दरिद्राणां बालका दैनन्दिनवृत्तिमपि महता कृच्छ्रेण निर्वर्तयन्तो

गैर्वाणविद्याभ्यसने समुत्कण्ठमानाः स्वकीयं दारिद्र्यमनुशोचन्तः परःसहस्रं वर्तन्त इत्यपि समाकर्णयामः किल कर्णाकर्णिकया । कथं वा सञ्चिन्वन्तु ते दयनीया बालकाः सर्वथा अस्वतन्त्राः संस्कृतविद्याभ्यासेन समुत्पत्स्यमानं परिष्कारविकासम्? कुत्रवागच्छन्त्वेतद्देशाभिजना दरिद्रा विद्यार्थिनो मनःकल्मषप्रक्षालनाय विवेकं सम्पादयितुम्? अत एतादृशं बालकानां दुर्दैवविलसितमुन्मूलयितुमस्माकं बहुप्रदो महाराजः स्वकीयजनपदे तत्र तत्र जनसङ्घाधिष्ठिते प्रदेशे विद्याशालामेकैकां वा प्रतिष्ठाप्य बालकानभ्यर्हिते पथि सञ्चारयन् तैश्च निर्णिक्तान्तरङ्गैः कृतज्ञैः 'जय जीव, इति प्रतिपदमाशास्यमानो गैर्वाण्या च परिपुष्टाङ्गया सततं बह्वीभिराशीर्भिरभिनन्द्यमानः शास्त्रसङ्घैश्च स्थितप्रतिष्ठैरविच्छिन्नाय कल्याणायानुध्यायमानोऽनश्वरां प्रशस्तिं विस्तारयन् नवोदितेनायुष्मता युवराजेन साकं वह्निवसुन्धरां सर्वसंपन्नां सत्यसन्धो हरिश्चन्द्र इव बिभ्राणः सकलकल्याणगुणपरिपूर्ण आरोग्यभाग्यसचिवः शतं समारारा(?)ष्ट्विति साञ्जलिपुटं सभक्ति च श्रीपद्मनाभं भक्ताभीष्टपूरकं सर्वदुरितविध्वंसिनं सततं भजाम इति ।शिवम् ।

---

अग्रश्चाध्यक्षाणामाशयः,—एवमुत्तरोत्तरं संस्कृतभाषाभिवृद्धये क्रियासमभिहारेण समुत्सहमानस्यास्य समाजस्य कृत्यमिदमशेषविद्वत्परिषदाराधनमुखेन फलिनं सम्पद्यताम् । मृतायामपि वस्तुतः सुरभणितावयमुद्यमः सर्वेषामपि विदुषां परस्मै मोदाय इयञ्च सु नारायणशास्त्रिणः सकलविबुधाह्लादनकरी ससाधुवादोपन्यसनसरणिरतिरमणीया इति ॥

---

# ॥ शंकराभ्युदयः ॥

(पूर्वतोऽनुवृत्तम् ।)



वराभये च खेटासि वल्गुं च मुसलं हलम् ।
वहन्तीं शङ्खचक्रे च वाराहीं पाटलाम्बराम् ॥ ३५ ॥

अश्वाननहयां तत्र पालितोन्मत्तभैरवाम् ।
पाकारिमणिसच्छायां भावये दण्डनायिकाम् ॥ ३६ ॥

पद्मरागमणीसाला प्रवालद्रुपरिष्कृता ।
पद्मासनसनाथा नः पातु प्रसववाटिका ॥ ३७ ॥

पालितं पद्मनाभेन पाञ्चजन्यादिलक्ष्मणा ।
प्रवालक्लृप्तप्राकारं भावये रत्नमण्डपम् ॥ ३८ ॥

सभा माणिक्यसालाढ्या सहस्रस्तम्भमण्डिता ।
षट्त्रिंशत्तत्त्वनाथेन सनाथा शंभुनावतात् ॥ ३९ ॥

नवरत्नोल्लसत्सालां नमाम्यमृतवापिकाम् ।
नवाकाराम्बिका नित्यं नव्यया यत्र खेलति ॥ ४० ॥

आश्रयामो मनःसालामानन्दमयवापिकाम् ।
अस्यामनर्घ्यां तरुणीमारूढां वारुणीमपि ॥ ४१ ॥

विमर्शवापिकां ध्याये विशुद्धावरणावृतिम् ।
विहरम्यामाणितया साभान्तीं कुरुकुल्लयया ॥ ४२ ॥

आतपोद्गारिणीं कक्ष्यामहंकारकतावृतिम् ।
अधितिष्ठन्नजस्रं मामव्यानन्दय भैरवः ॥ ४३ ॥

चन्द्रिकोद्गारिणीं कक्ष्यां चारुभानुमयावृतिम् ।
चमत्करोतु श्रेयांसि चन्द्रो नित्यं समाश्रयन् ॥ ४४ ॥

शिशिरांशुमहासालां शृङ्गाररसवापिकाम् ।
श्रितः शृङ्गारराजोऽसौ श्रियमङ्कुरितां क्रियात् ॥ ४५ ॥

मञ्जुशृङ्गारसालाया महापद्माटवीमणेः ।
महीयमानः प्राग्भागे मङ्गलायास्तु पावकः ॥ ४६ ॥

तत्र पात्रात्मके भानौ तरङ्गितसुधारसे ।
तरीविहारिणीश्चान्द्रीः स्तवानि सकलाः कलाः ॥ ४७ ॥

भजे तत्रैव खेलन्तीः पञ्च ब्रह्मात्मकाः कलाः ।
प्रागादिषु दिशास्वर्यभाजनं च प्रतिष्ठितम् ॥ ४८ ॥

आश्रये सदनं दिव्यमनर्घमणिनिर्मितम् ।
तत्राग्निदिशि कुण्डस्थं हव्यवाहं च चिन्मयम् ॥ ४९ ॥

संश्रयेऽस्यान्यकोणेषु शाश्वच्छक्रात्मकं रथम् ।
शताङ्गावपि वार्ताली समयेशान्याधिष्ठितम् ॥ ५० ॥

त्रिजगत्पावनी तत्र त्रिपुरा रश्मिमालिका ।
तृणेढु मम पापौघतृण्यां मे मन्त्ररूपिणी ॥ ५१ ॥

पञ्चमश्यामलादेवो भवने मणिनिर्मिते ।
प्राग्भारसीम्नि धाम्नोऽस्य भावये पार्श्वतः स्थिते ॥ ५२ ॥

चित्रद्वारचतुष्कोणचिरत्नवचनात्मना ।
चिन्तामणिमयं धाम चिन्तये चिन्तितार्थदम् ॥ ५३ ॥

जपाकुसुमदायादैर्जगन्मातुर्महोभरैः ।
जाज्वल्यमानेऽथान्यस्मिंश्चक्रं किमपि चिन्तये ॥ ५४ ॥

आदिमावरणे तस्य हसन्मुखसरोरुहाः ।
असभश्चिन्तामणिभृगो हरन्तामणिमादयः ॥ ५५ ॥

तासामुपरि धिष्ण्येषु तादृशेषु कृतासिकाः ।
तन्वन्तु भद्रं ब्राह्म्याद्यास्तास्ताः सप्तापि मातरः ॥ ५६ ॥

मूर्तिमत्यस्ततोऽप्यूच्चैर्मूल्यापेतासु वेदिषु ।
मुद्राः संकर्षणीमुख्याः सदा सत्यं दिशन्तु नः ॥ ५७ ॥

त्रैलोक्यमोहनं चक्रं तृचं तदधितस्थुषी ।
त्रायतां प्रकटाख्याभिस्त्रिपुराशक्तिरावृता ॥ ५८ ॥

कनन्त्य....... ऊर्ध्वकनकासनपङ्क्तिषु ।
कामाकर्षणिकामुख्याः कामदोग्ध्र्यो भवन्तु नः ५९ ॥

सर्वाशापूरकं चक्रं समया त्रिपुरेश्वरीम् ।
साक्ष... सासन्नमद्गुप्तयोगिनी ॥ ६० ॥

अवस्थितास्ततोऽप्युच्चैर्हाटकासनपङ्क्तिषु ।
अर्चयामो वयं देवीरनङ्गकुसुमादिमाः ॥ ६१ ॥

सर्वसंक्षोभणे चक्रे सांनिध्यं समुपेयुषीं ।
सह त्रिपुरसुन्दर्या शक्तीर्गुप्ततराः स्तुमः ॥ ६२ ॥

अनङ्गकुसुमादीनामासामूर्ध्वमवस्थिताः ।
अवन्तु सर्वसंक्षोभिण्यादिमाः शक्तयः सदा ॥ ६३

सर्वसौभाग्यदे चक्रे सर्वदाहितसंनिधिम् ।
संस्तुमः संप्रदायेऽमी साकं त्रिपुरवासिनीम् ॥ ६४ ॥

वसन्तीरूर्ध्वमेतासां वल... स्थानवेदिषु ।
वरदाः सर्वसिद्धादीर्वन्देमहि वयं कलाः ॥ ६५ ॥

शक्तिभिस्तु कुलोत्तीर्णसभ्याभिस्त्रिपुराश्रियम ।
सर्वार्थसाधके चक्रे समिन्धानामुपास्महे ॥ ६६ ॥

सर्वज्ञाद्याः कुलोत्तीर्णाः सदनस्योपरि स्थिताः ।
संपदं सकलाशास्यां शक्तयः साधयन्तु वः ॥ ६७ ॥

कलयन्ती सर्वरक्षाकरचक्रान्तरे स्थितिम् ।
करोतु मे निगर्भेड्या कामांस्त्रिपुरमालिनी ॥ ६८ ॥

सर्वज्ञाद्यासनस्योर्ध्वं स्यन्दनेषु कृतासिकाः ।
शक्तयो वशिनीमुख्याः संसारार्तिं हरन्तु नः ॥ ६९ ॥

सार्धं चक्रे रहस्याभिः सर्वरोगहराभिधे ।
साधये त्रिपुरा सिद्धा संचरन्ती शुभानि नः ॥ ७० ॥

सम्यक्क्लृप्तनिषङ्गस्थान्वन्देय शिवयोः शरान् ।
वरदाश्च ततोऽप्युच्चैर्वलये समयेश्वरीः ॥ ७१ ॥

प्रतिष्ठितां सर्वसिद्धिप्रदचक्रान्तरे सदा ।
प्रणमोतिरहस्याभिः परीतां त्रिपुराम्बिकाम् ॥ ७२ ॥

उपविष्टास्ततोऽप्युच्चैर्युगनाथादिमान् गुरून् ।
ऊरीकुर्मोऽथ नित्यास्तदूर्ध्वं कामेश्वरीमुखाः ॥ ७३ ॥

कामेश्वर्यासनादूर्ध्वं कलितावसथा मुदा ।
कल्याणानि निषङ्गानां कलयन्त्वधिदेवताः ॥ ७४ ॥

आसां षडङ्गदेवीनामालयस्योपरि स्थितम् ।
आसनं बिन्दुरूपं तदम्बायाः समुपास्महे ॥ ७५ ॥

अङ्घ्रिभिर्विधृतं धातृहरिरुद्रेश्वरात्मभिः ।
अहं शिवैक... फलकं मञ्चमाश्रये ॥ ७६ ॥

महानीलशिलानीलमायायवनिकावृते ।
मञ्चे तत्रारुणच्छायमहनीयवितानिके ॥ ७७ ॥

अनर्घपट्टोपबर्हमच्छाच्छमिचयावृतम ।
हंसतूलाञ्चितं तल्पमाकल्पं कल्पतां मुदे ॥ ७८ ॥

तत्र मञ्चे समासीनं तरुणेन्दुशिखामणिम् ।
तापिञ्छापिञ्छसच्छायं तत्तादृशकचोच्चयम् ॥ ७९ ॥

मकुटेन्दुकलाशेषमोहदायिललाटकम ।
मुखाब्जलोललोलम्बमुग्धैणमदचित्रकम् ॥ ८० ॥

विजितानङ्गकोदण्डविभ्रमभ्रूविराजितम् ।
विशृङ्खलदयासिन्धुपञ्चिकाविहरद्दृशम ॥ ८१ ॥

कनत्कनकचाम्पेयकान्तिलुण्टाकनासिकम् ।
कर्पूरवीटिकास्थिसकपोलालोलकुण्डलम् ॥ ८२ ॥

मन्दस्मितमहःपुञ्जमधुराधरपल्लवम् ।
मनोज्ञकुन्दकोशश्रीमालिम्लुचरदाङ्कुरम् ॥ ८४ ॥

पाञ्चजन्यमदाटोपपरिभावुककन्धरम् ।
प्रसवास्त्रेषु कोदण्डपाशाङ्कुशलसत्करम् ॥ ८४ ॥

भुजान्तरालसंलोलपृथुमुक्तामणीसरम् ।
पुष्पास्त्रमौर्वीलालित्यपुष्टरोमलताञ्चितम् ॥ ८५ ॥

कुसुम्भकुङ्कुमारक्त...... कटिम् ।
कूलंकषात्मसौभाग्यकुत्सितेभकरोरुकम् ॥ ८६ ॥

जातरूपमयादर्शजडिमावहजानुकम् ।
ज...... जयकाहलवैभवम् ॥ ८७ ॥

कूटस्थकमठेन्द्रश्रीकुट्टाकप्रपदद्वयम् ।
कुतुकानतलोकेशकोटीरविलुठत्पदम् ॥ ८८ ॥

कन्दर्पकाङ्क्षणीयोच्चैः कामनीयकशेवधिम् ।
कलयामि जपाशोणं कामेश्वरमयेश्वरम् ॥ ८९ ॥

तदङ्कतलपर्यङ्कां तरङ्गितदयारसाम् ।
तटिदालोकदायादतनुवल्लीमरीचिकाम् ॥ ९० ॥

रत्नचिन्ता... रत्नौघचित्रकोटीरमण्डिताम् ।
जीवंजीवकलाव्याजजीवनप्रदशेखराम् ॥ ९१ ॥

लावण्यसृतिशङ्काहंललन्मुक्ताललन्तिकाम् ।
ललाटफलकात्मेन्दुलक्ष्मैणमदचित्रकाम् ॥ ९२ ॥

.... ... राकरफालविलोचनाम् ।
करुणारसमाध्वीककरम्बितदृगश्चलाम् ॥ ९३ ॥

निसर्गहृद्यनासि ... निश्वासकन्दलाम् ।
बन्धुजीवजपाबिम्बबन्धुराधरपल्लवाम् ॥ ९४ ॥

पक्वदाडिमबीजाभ ... ... ।
.... ... ... ॥ ९५ ॥

... ताम्बूलकपोलफलकोज्ज्वलाम् ।
कटाक्षरश्मिशोणाश्मकीर्णपत्रचमत्कृताम् ॥ ९६ ॥

कण्ठकम्बुगल .... .... ।
काश्मीरागरुपाटीरकस्तूरीचित्रितस्तनीम ॥ ९७ ॥

चुबुकाभाभ्रमाधानचञ्चुरोमलताञ्चिताम् ।
चूलीकृततताल्लूर .... ... ॥ ९८ ॥

... वालिप्तचारुकौसुम्भशाटिकाम ।
चक्रशोभावहश्रोणीचञ्चत्काञ्चनकाञ्चिकाम् ॥ ९९

वेतण्डशुण्डावैदग्ध्य .... ।
(कुसुमायुध) तूणीरविकल्पानल्पजङ्घिकाम् ॥ १००

दूरीकृतडुलिश्रोणीदुर्मदप्रपदद्वयीम् ।
तुलारहितमाणिक्यतुलाकोटिलसत्पदाम् ॥ १०१ ॥

... ... त्रिचित्रपदक्रमाम् ।
आब्रह्मस्तम्बजननीमानन्दाद्वैतचिन्मयीम् ॥ १०२ ।

वेधो विधुमुखीलक्ष्मीविधूतासितचामराम् ।
.... .... ... ॥ १०३

पतत्पतद्गृहव्यग्रभानुजान्त:पुरीजनाम् ।
पादुकाधारणायत्तप्रचेत:प्रमदामयीम् ॥ १०४ ॥

.... .... वारणाम् ।
तत्तदाज्ञाकरान्याशाधवपाणिगृहीतिकाम् ॥ १०५ ॥

रसनापुष्कलायुष्यरमणीयाशिलीमुखाम् ।
पाशाङ्कुशपरिस्फूर्जत्पाणिपल्लवतल्लजाम् ॥ १०६ ॥

मन्दारमालासंदोह-
कुङ्कुमक्षोदपाटलम् ।
कुलदैवतमन्तस्त-
त्कुर्महे शर्महेतवे ॥ १०७ ॥

माधुरिमधुरीणचाप-
विस्र ... ... ।
... करे भगवति
देविप्रसीद परे विद्ये ॥ १०९ ॥

शम्पाकचग्रहणलम्पट-
कान्तिपूरे कम्पानदीनटविपिने ।
... नुकम्पा-
मानन्दकन्दलतरङ्गितमन्तरङ्गम् ॥ ११० ॥

इत्थंकारमभङ्गुराङ्गजायन्त्रावकृष्टथानम-
त्पा .... विनिवहोज्ज्वलाब्धिविहृतौ लोलैर्गिरां गुम्भनैः ।

कम्पातीरनिवासिनीमनुदिनं कामेश्वरीमर्चयन
ब्रह्मानन्दमविन्दत त्रिजगतां क्षेमंकरः शंकरः ॥

इति दन्तिद्योतिदिवाप्रदीपाङ्काद्वैतविद्याचार्य सर्वतन्त्रस्वतन्त्र
लक्ष्मीभवस्वामिभट्टसुकृतपरिपाकविश्वामित्रवंशमुक्ताफ-
लसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामा-
क्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदी-
क्षितस्य कृतिषु शंकराभ्युदयनाम्नि काव्ये
अष्टमः सर्गः ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष माघमासः । [संचि. ११

## सुभाषितानि ॥



आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च बडबादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ १ ॥

अये वारां राशे कुलिशकरकोपप्रतिभया-
दयं पक्षप्रेम्णा गिरिवरसुतस्त्वामुपगतः ।
त्वदन्तर्वास्तव्यो यदि पुनरयं बाडबाशिखी
प्रदीप्तः प्रत्यङ्गं ग्लपयति ततः कोऽस्य शरणम् ॥ २ ॥

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा ।
तीरे कल्पमहीरुहाः किमपरं नाम्नापि रत्नाकरो
दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ ३ ॥

---

राम— अपि नाम भवान् स्वयमेव शंकरो भविष्यसि? आहोस्वित्तल्लोके नित्यकिंकरो भवितुमिच्छसि?

कृष्ण— तदीयपरिजनेष्वेकतमो भवितुमेवाभिलषामि?

राम— तथाचेत् 'अहं ब्रह्मास्मि' 'शिवोऽहम्' इत्यनुसंधानस्य कोऽर्थः?

कृष्ण— तत्त्वमसीति वाक्यस्य योऽर्थः, स एवेह प्रकारान्तरेणोच्यते।

राम— कीदृशोऽर्थस्तस्य वाक्यस्य त्वयावगतः?

कृष्ण— तत्पदेन निर्दिष्टस्य ब्रह्मणः त्वंपदेनाभिहितस्य जीवस्य चाभेद एव प्रतिपाद्यते।

राम— यदि सर्वमप्येकमेव ब्रह्म, तर्हि कः केनोपास्यते?

कृष्ण— यावद्भेदवासना हृदयान्नापसरति तावत्सगुणोपासनादिकमावश्यकमित्याचार्या उपदिशन्ति।

राम— अभेदज्ञानं विना कथं केवलेन सगुणोपासनेन भेदवासनापगच्छेत्?

कृष्ण— अतिगहनेयं ब्रह्मविद्या, दुर्लभा दुरवगमा च। साधनचतुष्टयाधिगमानन्तरमेव परित्यक्तविषयाभिलाषाणां परमहंसानामेवास्यामधिकारः। तादृशदशामधिगन्तुमेवास्माभिः प्रयत्यते।

राम— अनुदिवसमस्माकमीषणालयमभिवर्धते। तत्कदा वैराग्यं

भविष्यति ? सन्यासिनामेव विद्यानिष्पत्तिर्न गृहस्थानामितीदं मतं नाहमभिनन्दामि ।

**कृष्ण**— त्वदभिनन्दनमुद्दिश्य न विरचितानि ब्रह्मसूत्राणि भगवता बादरायणेन ।

**राम**— बादरायणस्याद्वैते न तात्पर्यमिति वदति तीबोनामकः कश्चित्पाश्चात्यपण्डितः ।

**कृष्ण**— पाश्चात्योयं पृष्ठतः करणीयः । केन हेतुना एवं प्रजल्पत्यसौ ?

**राम**— ब्रह्मसूत्राणि सम्यग्विमृश्यमानानि गुणोपसंहारपादादिभिरन्यैश्चास्माकमद्वैतसिद्धान्ताभिसन्धिं शिथिलयन्ति ।

**कृष्ण**— तर्हि कथं भगवत्पादैरद्वैतपरतया व्याख्यातानि इमानि ?

**राम**— आम् । तथैव । अथापि भगवत्पादानां भाष्ये उपक्रमपङ्क्तिः परामृश्यते चेत् 'नेमानि सूत्राण्यद्वैतानुवर्णनपराणीति यत्सत्यम्, मदीयेन बुद्धिवैभवेन तान्यद्वैतपरतया प्रदर्शयिष्यामि' इति तैः प्रतिज्ञाय आत्मनः असाधारणं वैदुष्यमेव भाष्ये प्राकाशि इति ज्ञायते ।

**कृष्ण**— उन्मादोऽयम् । केनोपदिष्टेयं ते विमर्शसरणिः ? का सा पङ्क्तिः यद्विमर्शेन एतादृशः असंबद्धोऽर्थः अनुमीयते ?

**राम**— (भाष्यमुपनीय)– 'यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारिरकमीमांसायां प्रदर्शयिष्यामः' इति वाक्यपङ्क्तिर्दृश्यते किल ।

**कृष्ण**— अस्य वाक्यस्य कोऽर्थः ?

**राम**— त्वमेव वद ।

**कृष्ण—** मम तु अर्थः सुस्पष्टः। त्वयानुमितस्यार्थस्यानुगुणतया कथमियं वाक्यपङ्क्तिर्व्याख्यायते इति जिज्ञासुरस्मि ।

**राम—** यथायमर्थः (अस्माभिरुन्नीतोऽनुवर्णितश्च) सर्वेषां वेदान्तानां भवेत्— तथा अस्यां शारीरकमीमांसायां (अचुम्बितेन पथा अस्मत्कौशलेन) प्रदर्शयिष्यामः ।

**कृष्ण—** न हि तथा। यथास्मदनुवर्णित एवार्थः सर्ववेदान्तबोध्यत्वेन विशदावभास आसीत् तथैव शारीरकमीमांसायामपि भविष्यति— इत्येवार्थः अभिलषितः आचार्यपादैः ।

**राम—** व्यधिकरणत्वेनानुवर्ण्यतेऽर्थस्त्वया अभिनिवेशवशंवदेन । यथा कथञ्चिदर्थद्वयस्याप्यवकाशो वर्तते वाक्यपङ्क्तौ । श्रीभाष्ये सूत्राक्षराणि व्याख्यास्यन्ते इति निःसंशयं प्रतिज्ञातं किल । अत्र किमिति तथा नोक्तम् ?

**कृष्ण—** गभीरवाचः खल्वस्मदाचार्याः । गीताभाष्येप्येवमेव 'तस्माद्गीताशास्त्रे केवलादेव तत्वज्ञानान्मोक्षप्राप्तिः न कर्मसमुच्चितात् इति निश्चितोऽर्थः । यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः' इति व्याहरन्ति भगवत्पादाः ।

**राम—** अत्रेदमवधेयम् । शङ्करोऽयं विष्णुभक्ताग्रेसरः सर्ववेदान्तसंग्रहनामके ग्रन्थे व्यासमतत्वेन विशिष्टाद्वैतमेवोदाजहार; न त्वद्वैतम् । अत एवोच्यते 'आचार्योऽयं वादाहवे जैनानामन्येषां च वेदप्रामाण्यमपवदमानानां शून्यवादिनां निराकरणाय तेषामेव सरणिमनुसृत्य सर्वमिथ्यात्वापेक्षया एकस्यापि ब्रह्मणः सत्यत्वं प्रतिष्ठापयितुं प्रवृत्तः तदनुगुणत्वेन सूत्राणि व्याचख्यौ' इति ।

**कृष्ण**— कथमेवमुपर्युपरि विजृम्भसे । सर्ववेदान्तसंग्रहोऽयं भागवतसंप्रदायबद्धेन केनचिदर्वाचीनेन शंकरस्य नामधेयमात्मन्यावहता विरचितः इति सर्वविदितम् ।

**राम**— ग्रन्थोऽयं राजकीयैर्मुद्रितः । भूमिकायां विमर्शकाग्रेसरः श्रीमान् रङ्गाचार्यः भागवतपक्षपातिभिः बादरायणस्यान्तरमभिप्रायं करतलामलकवत्साक्षात्कृतवद्भिः भगवत्पादैरेव ग्रन्थोऽयं व्यरचीति सोपपत्तिकं प्रकाशितवान् किल ।

**कृष्ण**— राजकीया हि राजसाः । तदधिकृतोऽसावाचार्यः स्वयं वैष्णवः अभिनिवेशेनैवं व्याहरति । तादृशो हि तस्य संस्कारः श्रीभाष्यव्याख्यापठनेनाभिगतः ।

**राम** —- कथम् ।

**कृष्ण**-— श्रीभाष्यव्याख्यानावसरे, '**सूत्राक्षराणि व्याख्यास्यन्ते**' इत्यत्र 'सौत्रपदानां प्रकृतिप्रत्ययविभागानुगुणं वदामः, न तु स्वोत्प्रेक्षितार्थे सूत्राक्षराणि यथाकथंचिद्योजयितव्यानि' इति भावमुल्लिखति रामानुजीयः ।

**राम**—- कोऽसौ ?

**कृष्ण**—- श्रुतप्रकाशिकेत्यन्वर्थनामधेया काचन व्याख्या । परमतदूषणमेवास्याः प्रयोजनम् । व्याख्याकारोऽयं यद्यच्छृणोत्यभिनिविष्टेभ्य आचार्येभ्यः, तत्तदेव प्रकाशयति स्वोपज्ञे भाष्ये । राजकीयाधिकृतोऽप्यसौ अन्यत्र यद्दृष्टमधिगतं च तत्तदेव सर्ववेदान्तसंग्रहभूमिकायां प्राकाशयत् ।

**राम**— एतावता प्रबन्धेन श्रीभगवत्पादानां भागवतमते न तात्पर्यमभिनिवेशो वा इत्युक्तं भवति ।

**कृष्ण**— आम् । तथैव ।

**राम**— तर्हि 'उत्पत्त्यधिकरणभाष्ये 'योऽसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा सर्वात्मा स आत्मनात्मानमनेकधा व्यूह्यावस्थित इति तन्न निराक्रियते ; यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते तदपि न प्रतिषिध्यते' इत्यादिवाक्यपङ्क्तिर्भगवत्पादानां भागवतमताभिनन्दनमवगमयति ।

**कृष्ण**— परमहंसोऽसौ नारायणशब्दोच्चारणेनैवाजस्रमात्मानं विनोदयन्नेवं ब्रवीतीति किमत्र चित्रम् । नारायणशब्दस्य परमेश्वरे न तात्पर्यमिति केनोक्तम्? सर्वमेतदभिनिवेशिनां वैष्णवानां स्वकपोलकल्पितं सर्वथा न विश्वसनीयम् ।

एवमुभयोर्भाषणमुपश्रृण्वन् कश्चन पान्थो वैष्णवः अनन्ताचार्यनामा तावुपसृत्यावलोक्य कौ युवाम्? वैष्णवानां मतमसहमानौ दृश्येथे। पण्डितौ चेद्भवन्तौ तर्हि वैष्णवं मतं केष्वंशेष्वनुपपन्नमिति कथ्यताम् इति सासूयमप्राक्षीत् ।

**राम**— (उद्वीक्ष्य) अहो! अस्माकं चिरन्तनसुहृदनन्ताचार्यः प्राप्तः । मित्रमणे, कुत्र गम्यते भवता?

**अनन्ताचार्यः**— भोः शास्त्रिवर्य, अस्माकमाचार्यपादा जनपदमिममलंकुर्वन्ति इति श्रुतम् । तद्दर्शनाय गच्छता मया युवयोः संलापः श्रुतः । किमिति वैष्णवं मतं दूषयथ?

**कृष्ण**— वैष्णवैरस्मन्मतोपरि उद्भावितं दूषणमेव निराक्रियते ।

**अनन्ता**— युष्मदीयमद्वैतमिति मतं नास्माकमनुभवगोचरः । 'अहं ब्रह्मास्मि' इति चेत् कः केनोपास्यते? यद्येकं ब्रह्मैव

सत्यमन्यत्सर्वं मिथ्या, तर्ह्यक्षरराशिरूपस्य वेदस्यासत्यत्वमपरिहार्यं स्यात् । कात्रोपपत्तिः ? एतादृशविचारेण कीदृशं दूषणमुद्भावितं भवति ?

**कृष्ण**— प्रथमं तावत्कथय किमर्थमिमे वैष्णवाः आचार्यसविधं सङ्घशो गच्छन्ति इति ।

**अनन्ता**— आत्मनो भरसमर्पणमाचार्यद्वारा परमात्मनि क्रियते वैष्णवः ।

**कृष्ण**— अनेन किं प्रयोजनम् ?

**अनन्ता**— जीवात्मासौ संसारपाशान्मुक्तः विधूतपाप्मा निरञ्जनः वैकुण्ठमधिगच्छति ।

**कृष्ण**— पापानि कृत्वा आचार्यसविधमुपेत्य अनुशयं प्रदर्श्य स्वर्णपुष्पसमर्पणेन तत्प्रसादमुपलभ्य वैकुण्ठमुपैति जनः इतीदं मतं कथमनुभवगोचरो भवति ?

**राम**— साधु पृष्टम् ।

**अनन्त**— पापाचरणस्यानुशय एव प्रायश्चित्तम् । न हीदृशं पुनरपि चरेयमिति दृढनिश्चयः, अहं मद्रक्षणभरो मद्रक्षणफलं तथा। न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः' इत्युक्तरीत्या श्रीमन्नारायणे न्यस्तभरो जीवः प्रारब्धं परिभुज्य कर्मशकलं प्रक्षीणकर्मान्तरः शुद्धसत्वमयं लोकमधिगच्छतीत्ययं सिद्धान्तः कथमनुपपन्नः ?

**कृष्ण**— सर्वेऽपि वयमनुशयवन्त एव सात्विकाः । सर्वात्मना विरक्ताः गुरवो न सन्त्येव । ईषणात्रयवशंवदाः एते एव श्रियः पत्युः प्रतिभाव्यं वहन्तीति महतीयं विडम्बना ।

**राम**— गुणपौष्कल्यमेव विवक्षितमस्मिन्काले ।

**कृष्ण**— तर्हि सर्वेऽपि सर्वेषामाचार्यकं कुर्युः किल ।

**अनन्ता**— भोः किमिति शुष्कवादानुपक्रमध्वे? मया हि नाम कथं जीवः स्वयमेव परमात्मा भवितुमर्हतीति पृष्टम् ।

**कृष्ण**— युष्माभिर्जीवपरयोः भेदोऽपि नाङ्गीक्रियते नापि चाभेदः ।

**अनन्त**— वयमप्यद्वैतिन एव । परमियानेव भेदः यूयं हि केवलाः वयं तु विशिष्टाः ।

**राम**— विशिष्टाद्वैतपदस्याश्रुतपूर्वमिदं निर्वचनम्? केनचित्परमैकान्तिव्यपदेशवता उपदिष्टं स्यात् ।

**कृष्ण**— नायं परिहासस्यावसरः । जीवो हि परमात्मनः शरीरमिति किल युष्माभिरङ्गीक्रियते । सर्वत्र लोके जडपदार्थस्यैव शरीरत्वेन व्यवहारः । एकश्चेतनः स्वयं ज्ञानवानन्यस्य शरीरमिति असंबद्धोऽयं राद्धान्तः ।

**अनन्त**— अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इति श्रुतिरेव इममर्थमवबोधयति ।

**कृष्ण**— 'निर्गुणं खल्विदं ब्रह्म' इति वाक्यमेव ब्रह्म निर्विशेषमिति कथयति ।

**अनन्त**— 'ब्रह्म निर्विशेषम्' इति वाक्यं जननीवन्ध्यात्वप्रतिज्ञावन्निरर्थकं भवति ।

(क्रमशः)

|| श्रीः ||

# ॥ ग्रन्थानुवाचनम् ॥

अयि भोः सहृदयारसिका महाशयाः अहमत्रभवतामनर्घमन्तरङ्गावधानं किञ्चिदभ्यर्थये । अद्य प्रभाते कुक्कुटक्रोडनगरश्रीसामूतिरिमहाराजपदमलंकुर्वाणैः कविराजकेरलभोजराजादिबहुविधबिरुदावलीविभूषितैः महाराजमान्यश्रीमानविक्रममहाराजैः प्रणीतं प्रेतकामिनीनामकं ग्रन्थरत्नम् मयाधिगतम्—— संगतं श्रीसरस्वत्योरित्यादिषु अनवरतमाशास्यमानं श्रीसरस्वतीसामानाधिकरण्यम् सविशेषमनुभवतामेतेषामुपरि बहून् प्रशस्यानभिप्रायान् वहामो वयम्—परं तु अदसीयप्रशंसाया एकस्या अपि अपर्याप्तं कालं सर्वाधारीकृतवता विधिना वञ्चिता वयं यथावकाशं वाचस्संगृह्णीमः । आदौ तावत्, नानाविधकार्यजातनिबिडतममपि कालमेतादृशग्रन्थकरणे विनियुक्तवतामेतेषां कविराजमहाराजानां गरीयसे गैर्वाणीप्रणयाय स्वस्तिपरंपरामाशास्महे । अनन्तरं च विप्रकृष्टदेशस्थिताय विदेशीयाय नातिपरिचिताय किंचिज्ज्ञाय मह्यमिदं पुस्तकं सादरं स्वयमनुप्रेषितवतामेतेषां बहून् धन्यवादान् वदामः ॥

अतः परञ्च सादरमिमं ग्रन्थमनुवाच्य यथाप्रतिभं यथानुभवमदसीयान् विषयान् विमृशामः ॥

काव्यमिदं बोम्बानगरात् प्रचाल्यमानायाम् हिन्दुस्थानभाषामय्याम् वेङ्कटेश्वरसमाचाराख्यायां पत्रिकायाम् प्रकाश्यमानमेकं कथाखण्डमभ्यन्तरीकरोति ॥

सोऽयं कथासंदर्भ एवमनुवाच्यते । अस्ति दर्भङ्गाख्यायां राजधान्यां रामेश्वरसिंहो नाम राजा । तस्य च सुधर्मासमानायां सभायाम सुरगुरुप्रतिमप्रतिभश्चित्रधरो नाम विपश्चित्तल्लजश्चकास्ति । तस्य च बन्धुवर्गेषु मदनो नाम यथार्थनामा बालो बभूव। स चातिक्रान्तशैशवः सौपर्वणवाणीपरिचयप्रवणमानसः प्रतिकलमेधमानेन वाणीविलासेन विराजमानां वाराणसीमयासीत् । तत्र च कस्यचित् धनिनो मन्दिरे परिकल्पितवसतिः पाठशालायामन्तेवासित्वेनात्मानमर्पयामास । तस्य च धनिनः सुरूपसंपन्ना विवाहयोग्ये वयसि वर्तमाना काचित्कन्यएतदवलोकनप्रभृति प्राक्तनसंस्काराकृष्टमानसेवास्मिन् दृढतरनिबद्धभावासीत् ॥

यौवने वयसि वर्तमानोऽपि इङ्गितज्ञोऽपि रसिकाग्रणीरपि अयं मदनः विद्याभ्यासैकबद्धश्रद्धत्वात् एतस्याः सविलासकटाक्षवीक्षणादीनि शृङ्गारचेष्टितानि न बुबुधे । एवं बहुतिथे कालेऽतिवाहिते मन्मथावेशस्य परांकोटिमाधिरूढा सा बाला वामेन कामेन दशमीं दशामापिताभूत् ॥

कतिपयदिवसापगमे च कस्मिंश्चिन्निशीथे निद्रालिङ्गितनयनो मदनः श्रवणसुभगेन नूपुरक्वणितेन प्राबोधिष्ट । सद्य एवाभिसारिकावेषरमणीयां निभृतमुपतिष्ठमानां तां धनिनः कन्यामपश्यत् । चित्रीयमाणहृदयेन मदनेन का त्वम्? किं वा मदभ्यागमकारणमिति पृष्टे सैवमवादीत् ॥

सुभग, अहमस्मि धनिनोऽस्य कन्या। कुसुमसुकुमारं भवतो रूपं वीक्ष्य मदनपरवशा बालभावसुलभया शालीनतया नियमितमनोवृत्तिः निष्करुणेन कामेन दशमीमवस्थामापिता ॥

तन्ममायुरवसानकालपर्यन्तम् त्वत्सङ्गमसुखमनुभवितुं भगवान् समवर्ती प्रसीदति। तत् कृपां कुरु मयि निरुपाधिकप्रेमरसनिर्भरहृदयायामिति । तच्छ्रुत्वा मदनः श्रिया दुरापः कथमीप्सितो भवेदित्यादि विचिन्त्य तामरीरमत्। प्रतिदिनमस्य निशासमयः तत्समागमेनाशून्योऽभूत् । अथ च तदीयसुरतचातुरीसमाकृष्टमानसः क्रमेण शिथिलितविद्याभिरुचिः तत्रैव बहून् गणरात्रानतिवाहयांचक्रे ॥

अथ कदाचित् मदनः संजातनिर्वेदो धिङ्मामनुचितकारिणमित्यात्मानं गर्हयन् निजां नगरीं निववृते । केयं विद्याभ्यासविहतिदुर्विधिना समासादिता, तथ्यैवेयं स्तनयोरन्तरे विद्येति लोकोक्तिरित्यादि चिन्तयन्तं तं सा कामिनी तत्राप्यागत्योपजुगूहे ॥

अथ प्रतिकलप्रवर्धमानप्रथमरसप्रवाहप्लवमानमानसं मदनं सा कामिनी नानाविधानपि तन्मनोरथान् सद्य एव स्वप्रभावेण समुःपनयन्ती चिरमरञ्जयदिति ।

कथामिमामाश्रित्य नानाविधरसभरभरिताभिः निरर्गलप्रसृतवचोविन्यासरमणीयाभिः यावदर्थपदाभिः सप्तत्यधिकशतसंख्याभिः आर्याभिः ग्रथितमिदं काव्यरत्नं परां कोटिमानन्दस्य मामारोपयति ॥

काव्येऽस्मिन् त्रयोविंशं पद्यमनुवाचयतामस्माकमन्तरङ्गममन्दमानन्दमनुभवति, यदिदं वैयाकरणसूत्रमालापठनप्रवृत्तमपि, प्राथमे वयसि स्त्रीपुंवत् प्रगल्भते प्रथमे वयसि पुमान् स्त्रिया सहचरतीत्यादीन् संदर्भानुगुणरसपरिपोषजनकान् अर्थविशेषान् गर्भीकरोति ।

आलंकारिकाघोषवर्णनाय परिगृहीतमपि 'अस्या मुखेन्दुनालब्धे' इत्यादिपद्यं क्वचित् स्त्रियो ह्रीणा इति रमणीयमवसाययन्

कविराजोऽयं विषयासङ्गप्रवणमानसं परिहासपेशलं नर्मनिपुणं नवयौवनं पुनः प्रतिपद्यत इव प्रतिभाति । अथ विद्यार्थी तु युवायमित्येकोनात्रिंशं पद्यं यस्याः स्मरणमपि वैराग्यं दूरीकरोति तस्याः कामिन्याः साक्षाद्विलासैः अनाकृष्टमानसो मदनोऽयम् 'अज्ञात्वाहृद्गतं ते' इत्यादिहेत्वाभासविमर्शचतुरस्य शुष्कनैयायिकस्य सहचरो बभूवेति नूनमनुशोचति हन्तेति पदेन । जन्मद्वयेप्यनुस्यूतानुरागाम् कामिनीमनोवृत्तिमुपवर्णयदिदं काव्यं 'रम्याणि वीक्ष्य' इत्यादि प्रतिपादितं सर्वसंप्रतिपन्नं कालिदासीयमभिप्रायमभ्यन्तरयति ।

जन्मान्तरेप्यविस्मृतानुरागाणाम् महाश्वेतापुण्डरीकचन्द्रापीडादीनाम वृत्तान्तमनुस्मारयति च ।

सरळसरळेन सारस्वतस्रोतसा सहृदयहृदयरञ्जनेन उपमाद्यलंकारवैचित्र्येण कुतूहलावहेन कथासंदर्भेण च समाकृष्टमानसैः सकलैः रसिकसार्वभौमैः सादरं सबहुमानं कृतस्वागतमिदं काव्यरत्नं विशेषतोऽभिनन्द्यते इत्यमायमाशयं प्रकटयामः ॥

इति सहृदयगोष्ठीदासः

**वि. अनन्ताचार्यः ॥**

# ॥ वेमभूपालचरितम् ॥

———*———

तत्र सकलभुवनप्रशस्तसौभाग्याम् , सौन्दर्यकोशमिव धरण्याः, कम्पासरिदम्भःप्रतिबिम्बिताभोगतया भोगवतीमिव स्वसेवागतां दर्शयन्तीम् , प्रसृमरया पद्मरागतोरणनिकुरुम्बत्विषा संसारदावदह-

नाय पावकमिव प्रकाशयन्तीम्, आश्चर्यजननीभिः प्रासादालिखितचित्रपरंपराभिः करिगिरिनिलयस्य विष्णोर्विश्वरूपलीलामिव विवृण्वतीम्, पवनचलितैः केतनपटैः सुरपुरीसौभाग्यमिव धून्वतीम्, काञ्चनमयीभिर्देवालयपरंपराभिः कांचन शोभां विवृण्वतीम्, काञ्चीं नाम पुरीमगात् ॥

यत्र करिगिरिशिरसि स्थितं कमलनयनकालमेघमालोक्य किल विचलितशिखण्डार्धचन्द्रम् एकाम्रनिलयो नृत्यति नीलकण्ठः ॥

यत्र मुक्तिवधूपरिणयनमङ्गलपटह इव कम्पानदीकल्लोलकलकलः श्रूयते ॥

तत्र च विस्फूर्जत्खट्वाङ्गपाणिम्, ताण्डवाभिनयोत्तानितमुपरिलक्ष्यमाणगगनं भूयोऽपि गृहीतकालकूटमिव करतलमुद्वहन्तम्, ध्यानस्तिमितात्मभिरग्रतः स्थितैर्महायोगिभिरन्तर्दृशा विभाव्यमानमहिमानम्, अखिलजगदुत्पत्तिगुप्तिविपत्तिकारिणम, अतिषह्यहालाहलतापविनोदनार्थमिव शीतलमेकाम्रच्छायमधिवसन्तम्, रक्षानायक इति प्रथितापरनामधेयम, एकाम्रनाथं प्रणनाम ॥

अथ तमनुज्ञाप्य भगवन्तम्, निर्गत्य, उन्नतजाम्बूनदसालपुञ्जं कुञ्जरगिरिमाससाद ॥

तत्र स पुनः, अखिलभुवनकुक्षिंभरिम्, उपनिषदुपवनतमालम्, इन्द्रनीलशैलच्छायादायादरुचिम्, उदरगतजगदजरणार्थमिव सागरशयनसखीं योगनिद्रामप्यपास्य तिष्ठन्तम्, अन्तःस्थितभुवनप्रबोधाय पूषणमिवोरसा कौस्तुभं रत्नमुद्वहन्तम, द्रुततपनीयद्रवपिशङ्गेन वाससा वलाहकमिव वैद्युतेन महसा दीप्यमानम्, विभाकर-

मिव बहुधामोपशोभितम्, वरदराजाभिधानं हरिमनंसीत् ॥

प्रणम्योत्थाय, 'सर्वभुवनसनाभिनाभये, छन्दःसंदर्भकवये, प्रकृतिविकृतिबाह्याय, प्रत्यग्दशामबाह्याय, निर्मलज्ञाननेदीयसे, निर्वाणपण्यविपणये, मनसोऽप्यविषयाय, वाचामप्यगोचराय, सुषुम्नापथपथिकाय सकलजगदात्मंभरये नमो हरये' इति तुष्टाव विष्टरश्रवसम् ॥

ततः काञ्चीपुरान्निर्गत्य, बद्धद्विरदसेतुरुत्तीर्य हस्तिपतिद्रयसीं सह्यजाम्, असह्यप्रतापः पाण्ड्याभिमुखः प्रतस्थे ॥

पाण्ड्याः सर्वेऽपि संभूय बलिना सह तेन तेनुरवनिभुजा सुभटवपुःक्षरितकवोष्णक्षतजपानविरसरसदशिवशिवाक्रन्दनमाक्रन्दनम् ॥

ततः केचित्प्रथनपलायिताः, परिसरमहारण्येषु कन्दमूलाजिघृक्षया कठिनधनुरटनिखन्यमानवन्याक्षितयः, शुष्यज्जिह्वासारस्यकरणजग्धमुग्धामलकफलाः प्रचेरुः ॥

इतरे तु महीभृतां पत्युर्मणिकटकभासुरं पादमासाद्य, पयोमुच इव पाण्ड्या बभासिरे ॥

बलिभिर्यैं राक्षसेश्वरो रावणोऽपि स्वपुरविमर्दशङ्की संधाय विष्टपत्रयविजययात्रामकरोत्; तेऽपि पाण्ड्याः पाण्ड्यराजगजकेसरिणोऽस्य पादारविन्दममलमुक्ताफलकुसुमैरर्चयामासुः ॥

ततः फलेग्रहिक्रमुकेण, जाम्बवच्चुम्बितफलजरठजम्बूवनेन, सुग्रीवसैन्यकापेयभग्नजरठखर्जूरनालिकेरवनेन दक्षिणार्णवरोधसा सेतुमाससाद ॥

अनन्तरमुच्चलितकम्बुवलयैरूर्मिहस्तैः सिन्धुराजसेवाचामराणीव फेनपटलानि विधून्वतीम्, सलिलपवनताडनाविधूतैस्तटकेतकीधूलिजालकैः सागरवशीकरणचूर्णमिव विकिरन्तीम्, ऊर्मिविवलितैरनुक्षणशुक्तिमुखोदीर्णैर्मुक्ताफलैरमरहृतसर्वस्वमात्मवल्लभं पुनरपि संपदेव योजयन्तीम्, प्रोत्फुल्लपुण्डरीकनयनैः पाण्ड्यमहीपसंपदमिव पश्यन्तीम्, प्रथममहिषीं सागरस्य ताम्रपर्णीमाससाद ॥

तदनु कालायसशृङ्खलावतीर्णकैवर्तककुलोद्धृतशङ्खशुक्तिसमुत्पन्नानां दक्षिणादिग्वधूकरग्रहणमङ्गललाजश्रियां मौक्तिकानां राशीनाददानः, तत्रैव कंचित्कालमुवास ॥

तदनु वेमभूपतिः, मुक्ताफलप्रकरशर्करिलरोधसं तामुत्तीर्य, धनमदगर्वितोर्विभृतः केरलान् जगृहे ॥

तत्र सकलभुवनरक्षाधुरंधरं धनुरादाय, समरभुवि दुर्मदकेरलकर्शनकल्यं शितशल्यं शिलीमुखमवर्षत् ॥

प्रचण्डसमरभग्नानां केरलभूभृतां दुर्गाणि चकार शून्यानि ॥

ततः कमलमधुपानमत्तकलहंसचरणमुद्राङ्कितपुलिनां मुरचीमतिलङ्घ्य, मलयाभिमुखः प्रतस्थे ॥

अनन्तरम् उत्तुङ्गशृङ्गलङ्घितब्रह्माण्डम्, मन्दपवनतरलतटचन्दनपल्लवैरौर्वानलतापमिव शमयन्तमम्बुनिधेः, क्वचिदमरैः क्वचनगुह्यकैः क्वापि दैत्यैरेकत्र सिद्धैरपरत्र विद्याधरैरन्यत्र चारणैः परत्र किंपुरुषैश्च प्रतिदिनमध्यास्यमानम्, अतिगभीरैर्निर्झरध्वनिभिः स्तुवन्तमिव सागरशायिनं नारायणम्, राशिगणमिव गुरुभृगुभूषितम्, आश्चर्यनिलयमाससाद मलयम् ॥

असाद्य च विसृमरझरीमुषिततृषितग्लानिषु तरुणकिसलय-सारगन्धसारासु मलयगिरेरुपत्यकासु निवेशयामास नृपतिरध्वश्रमवर्तीं सान्द्ररजोधूसरध्वजां ध्वजिनीम् ॥

चन्दनवनदेवतावन्द्यमानरघुपतिचरणमुद्राङ्कितशिले मलयगिरिपरिसरमहीतले वासराणि कतिचिदवात्सीत् ॥

ततो बलभरजर्जरितमहीमण्डलः, खण्डितहोसलमल्लभटकलहसाहसः, प्रतीचीं दिशमुपययौ ॥

तत्र प्रत्यर्थिपर्वतस्फूर्जथुर्नृपतिर्गुर्जरान्प्रति पृतानां पृथुनाभागनिभश्चकर्ष ॥

ततः कृतान्तचोदिता गुर्जराः भृशमूर्जस्विना पार्थिवेन सह प्रभविष्णुना विष्णुनेव दानवा योद्धुमुदमनायन्त ॥

चक्रिरे च शक्रतेजसा तेन सह असह्यसाहससंपदा चलितरथनेमिदलितधरणिपृष्ठम्, मदविकटकरटिघटाकठोरकुम्भकूटकुट्टनक्रणदसियष्टिदारुणं समरम् ॥

ततो नृपतिरादाय चापमुग्रशरवर्षी तथा संगरभुवि गुर्जरानवधीत्, यथा कलहकौतुकिनो मुनेर्हृदयमतिविस्मयि बभूव ॥

अनन्तरमाखण्डलकीर्तिरवनिपतिरासमाद संपदुत्तुङ्गान् सौराष्ट्रान् ॥

तत्र सौराष्ट्रपतिभिरुपदीकृतानि वायुजवनानि वाजिरत्नानि, कनकमयानि विमानकल्पान्यनल्पानि रथमण्डलानि, मेरुशिखरनिकाशानि धनानि च विलोक्य, सेवाञ्जलिदन्तुरशिरसस्तानन्वग्रहीत् ॥

(क्रमशः)

|| श्रीः ||

# || गसनिमुहम्मदचारितम् ||

---

अभूदसामान्यपराक्रमार्जित-
श्रिया समेतो गसनिक्षितीश्वरः ।
विपक्षवीरावनिपान् विहाय यं
मुहम्मदाख्यं चकमे मुदा मही || १ ||

यमोपमो वैरजुषामपि स्वयं
निजप्रजारञ्जनतन्त्रकोविदः ।
समस्तसामन्तकुलाभिसेवितो
रराज राजा रमयन् स मेदिनीम् || २ ||

अमात्यमुख्यैः समितौ समावृतं
धराधिपं धर्मधुरंधराग्रगम् ।
उपेत्य तं रोषकषायितेक्षणा
वयोधिका काचिदुवाच विह्वला || ३ ||

जनाधिपोऽहं जगदेकविश्रुतो
महानुभावो मथितारिमण्डलः ।
इति स्फुटं मूढमते विचिन्तयन्
न वेत्सि धर्मच्युतिमागतां भुवि || ४ ||

प्रदर्शिता विक्रमपद्धतिस्त्वया
  यथा मृगेन्द्रेण सृगालसंसदि ।
न दर्शिता निर्मलनीतिपद्धति-
  र्यया समाप्नोति सुखं वसुंधरा ॥ ५ ॥

त्वया विदेशावनिपालजं भयं
  प्रमार्जितं नूनमरिप्रमाथिना ।
अथ स्वदेशीयखलोत्थितं भयं
  न नाशितं नीतिबलेन किञ्चन ॥ ६ ॥

विवेकशून्यो विबुधैर्विगर्हितो
  मदावलिप्तस्त्वमसाधुदर्शनः ।
इमे च मूर्खाः सचिवास्त्वयादृताः
  स्वसौख्यसक्ताः स्वजनेषु निर्दयाः ॥ ७ ॥

प्रजापरित्राणविधौ पराङ्मुखो
  नराधिपो नार्हति भूमिपालताम् ।
अराजकत्वादधिकं भयानकं
  कुराजकत्वं यदधिष्ठितं त्वया ॥ ८ ॥

महार्हरत्नाङ्कितभित्तिमण्डिते
  हिरण्मयस्तम्भशतप्रशोभिते ।
सह प्रियाभिः ससुखं वसन् गृहे
  त्वमार्तरक्षालस किं न लज्जसे? ॥ ९ ॥

इति क्षितीशं क्षुभिता रुषा शुचा
वयोधिका वाग्विशिखैरताडयत् ।
असह्यकोपव्यसनेषु देहिनां
भवत्यनार्या परुषा च भारती ॥ १० ॥

निशम्य तस्या वचनान्यशेषत:
प्रशान्तगम्भीरमति: स भूपति:।
अदर्शयन्नात्मविकारमात्मवित्
विनीतिमान्वाचमुवाच धार्मिक: ॥ ११ ॥

त्वया प्रयुक्तं यदसाधु साधु वा
तितिक्षितं तत्परिदूषणं मया ।
दुरन्तदु:खेन रुषा त्वमर्दिता
प्रजा च नारी शरणाय चागता ॥ १२ ॥

मदेन वा मोहवशेन वा कृतं
मया महीशेन यदम्ब! दुष्कृतम् ।
तदेव मां निर्दयमद्य भाषसे
हितैषिणी तद्बहुमानमर्हसि ॥ १३ ॥

विजित्य वीरान् विमतान् रणाङ्गणे
धृता धरेत्यस्मि न दर्पदूषित: ।
भटैरमात्यैरतिमात्रपौरुषै-
र्जिता हि दैवानुमतेन शत्रव: ॥ १४ ॥

सतां सुखाय प्रशमाय चासतां
   प्रवर्तितुं मे यदि नास्ति कौशलम् ।
नृपासनं नार्हति हन्त दूषणं
   क्षमामिमां पात्वपरो गुणान्वितः ॥ १५ ॥

प्रजापरित्राणपरोऽहमात्मना
   कुलव्रतं नः प्रकृतिप्रसादनम् ।
असंशयं तद्वद केन पापिना
   प्रधर्षितासि प्रतिकर्तुमुत्सहे ॥ १६ ॥

इति प्रगल्भां पृथिवीशभारतीं
   निशम्य सा बाष्पजलाविलानना ।
ह्रिया दुरुक्तिस्मरणप्रभूतया
   निजामवस्थां न शशाक जल्पितुम् ॥ १७ ॥

उपात्तधैर्याथ महीपतेर्गिरा
   स्वकार्यसिद्धिं प्रति लब्धनिश्चया ।
प्रसाद्य तं स्तोत्रशतैर्मुहुर्मुहुः
   प्रणम्य सा वाचमुवाच संसदि ॥ १८ ॥

असभ्यमन्याय्यमसह्यमीरितं
   वधार्हया दुर्भगया मया प्रभो ।
तितिक्षितं तत्सदयं स्वयं त्वया
   महात्मनां भूतदया निरर्गला ॥ १९ ॥

क सार्वभौमस्य सभा तवोत्तमा
क दीर्घजिह्वेयमसाधुभाषिणी ।
क चन्द्रशोभा क शुनी महीपते
सतां क्षमा नूनमगोचरो गिराम् ॥ २० ॥

प्रशस्तवंशस्थमहीभृता त्वया
धृतं प्रजापालनपावनव्रतम् ।
अनन्यनाथेयमत: स्वभावजां
ह्रियं भियं चापि विहाय वक्ष्यति ॥ २१ ॥

विषाददारिद्र्यवयोभिरर्दिता-
मवेहि मां भर्तृवियोगदु:खिताम् ।
समस्तसौख्यैरभिवर्द्धितां पुरा
हृतामिदानीं विधिना विरोधिना ॥ २२ ॥

रणेषु पञ्चास्यसमानविक्रमं
सभासु सन्मन्त्रविधानकोविदम् ।
अपि स्मरस्यालियहम्मदाभिधं
यशोधनं येन जितास्तवारय: ॥ २३ ॥

स मां समानान्वयसंभवां श्रिया
समां समालोच्य कुलाभिवृद्धये ।
सतीं सुरक्तां परिणीय धर्मत:
प्रियंवदश्चित्तहरो बभूव मे ॥ २४ ॥

अपत्यमुत्पाद्य निजान्वयाङ्कुरं
रणाय सोऽगच्छदरिप्रधर्षण: ।
चिराय युद्ध्वा नृपकीर्तिवर्धन-
स्तवाग्रत: प्राप पदं सनातनम् ॥ २५ ॥

निशम्य नाथं निहतं तथा रणे
मतिर्ममासीन्मरणाभिलाषिणी ।
दिवं हि याते हृदयंगमेश्वरे
पतिव्रता नेच्छति जीवधारणम् ॥ २६ ॥

सुतां समीक्ष्याथ शशिप्रभानना-
मनन्यनाथां प्रणयेन पोषिताम् ।
तदीयसंरक्षणकाङ्क्षया मया
तिरस्कृताभूद्विरहोत्थितव्यथा ॥ २७ ॥

विहाय बाला ननु शैशवीं दशां
क्रमेण तारुण्यमवाप्य सुन्दरी ।
अनन्यसामान्यशरीरशोभया
विभाति साक्षादिव देवकन्यका ॥ २८ ॥

मयि स्थितायां तनयाभिरक्षणे
हृतानि सर्वाणि धनानि तस्करै: ।
तत: परं मे वसतिश्च वह्निना
प्रदीपिता किं न करोति दुर्जन: ॥ २९ ॥

कुटीरमाश्रित्य समं तनूजया
　धनैर्विहीना निवसामि दुर्भगा ।
अथैकदास्तंगमिते दिवाकरे
　विवेश कश्चित्तरुणो ममालयम् ॥ ३० ॥

हयाधिरूढः स युवा निरीक्ष्य मां
　नमस्क्रियापूर्वमुवाच दीनवत् ।
प्रसीद मातर्मम रात्रिभोजनं
　प्रयच्छ मां खिन्नमवेहि यात्रया ॥ ३१ ॥

प्रयाणखेदेन तथा पिपासया
　क्षुधा च दूनं दयनीयदर्शनम् ।
तमागतं वीक्ष्य निशामुखे मनः
　कृपातिरूढं नितरां बभूव मे ॥ ३२ ॥

अनुज्ञया सोऽथ कुटीं ममातिथिः
　प्रविश्य भुक्त्वा विगतश्रमोऽब्रवीत् ।
नमामि मातः शुभमस्तु ते त्वया
　सुरक्षितोऽस्मि स्वकुमारको यथा ॥ ३३ ॥

महात्मनस्त्वं विधवा मनस्विनी
　प्रजावती नार्हसि कष्टजीवनम् ।
कृतज्ञभावाद्यदिदं वितीर्यते
　मया तदङ्गीकुरु गौरवाय मे ॥ ३४ ॥

इति ब्रुवन् स्वर्णमनल्पमादरा-
त्समर्प्य हस्ते स युवा विनिर्गतः ।
धनेन तेनात्मसुताभिरक्षणे
समुत्सुकाहं न्यवसं महीपते ॥ ३५ ॥

गते पुनर्मासचतुष्टये युवा
स एव सर्वाभरणैरलंकृतः ।
यथापुरं प्राप्य कुटीं निशामुखे
प्रणम्य मामेवमुवाच वञ्चकः ॥ ३६ ॥

सुखोचितां त्वां सुखवर्धितां पुरा
धनैर्विहीनां विधिनाधुना हताम् ।
वने वसन्तीं ससुतां सुदुःखितां
विलोक्य मे खेदपरिप्लुतं मनः ॥ ३७ ॥

श्रिया महत्या तव नूनमात्मजा
सुराङ्गनानामपि कुर्वती ह्रियम् ।
वनान्तरे जीर्णकुटीरसंश्रया
घटावृता दीपशिखेव भाति मे ॥ ३८ ॥

यथा समुद्रोदरगह्वरे मणि-
र्यथा वनान्ते नवमल्लिकालता ।
अपात्रहस्ते धनमर्पितं यथा
तथा कुटीरे न विभाति ते सुता ॥ ३९ ॥

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. ६.] प्रमादीचवर्ष फाल्गुनमासः । [संचि. १२.

## सुभाषितानि ॥

चञ्चरीक चतुरोऽसि चन्द्रिका-
वैभवे कुमुदिनीं निषेवसे ।
भास्करे जयिनि पुष्करं नवे
प्रोन्मिषन्नवदलेऽनुरज्यसि ॥ १ ॥

नीरजान्यपि निषेव्य निर्भरं
नीरसानि कुटुजानि वाञ्छसि ।
चञ्चलत्वमिह चञ्चरीक ते
साहसं कथमिदं विमोक्ष्यसि ॥ २ ॥

यदपि भेकगणेन निषेवितं
प्रकरकण्टककोटिसमन्वितम् ।
तदपि पङ्कजमेति मधुव्रतः
सुरससौरभसुन्दरताश्रयम् ॥ ३ ॥

## गैर्वाणी ॥

(पूर्वतोऽनुवृत्तम्)

**अनन्त**— मीमांसकैः व्यवस्थितोऽयं न्यायः पूर्वोत्तरमीमांसयोरेकशास्त्र्यमनभ्युपगच्छद्भिरद्वैतिभिरुदाह्रियते इतीदं अतिह्रेपणं सदसद्विवेचनचणानाम् ।

**कृष्ण**— मीमांसान्यायाः सर्वत्र प्रमाणपदवीमाटीकन्ते ब्रह्मवादिनाम् ।

**अनन्त**— पूर्वोत्तरमीमांसयोरेकशास्त्रत्वे सत्येव पूर्वभागव्यवस्थितानां न्यायानामुत्तरभागे अन्वयः स्वारसिकः ।

**कृष्ण**— तथाचेत् शब्दप्रतिपाद्यस्य शब्दानुशासनपरस्य पाणिनीयस्याप्येकशास्त्रत्वमभ्युपगन्तव्यं भवेत् ।

**अनन्त**— पाणिनीयमवलम्ब्यैव वेदान्तव्यवहाराः प्रवर्तन्ते इतीदमतत्त्वविदां मतम् ।

**कृष्ण**— न खल्ववगच्छामि त्वदीयमाशयम् ।

**अनन्त**— लोके वेदे च प्रयोगमनुसृत्यैव शब्दानां प्रक्रियाः समुपदिश्यन्ते शाब्दिकैः । लक्ष्यस्यैव हि लक्षणमुचितम् । केषांचन पदानां निष्पत्तिः न ज्ञायते शाब्दिकैरिति हेतोः प्रातिपदिकान्यव्युत्पन्नानि पठ्यन्ते ।

**कृष्ण**— अहो शब्दशास्त्रमर्मवेदीव व्याहरसि । व्याकरणविरुद्धं पदं प्रयुञ्जानः परिहासभाजनं भवति लोके ।

**अनन्त**— कुत्राधीतं व्याकरणं त्वया ?

**कृष्ण**— (सक्रोधम्) देवदत्तस्य निकटे । किं तवानेन?

**अनन्त**— देवदत्तो नामायं देवानां प्रियो भवितुमर्हति ।

**कृष्ण**— युष्मत्प्रपितामह एव देवानां प्रियः ।

**अनन्त**— रे मूर्ख, किमुक्तम्?

**कृष्ण**— (हस्तमुद्यम्य) रे रे!

**राम**— हा धिक् प्रमादः! कथं हस्ताहस्ति प्रवर्तते (इति वदन्नेव उभयोर्मध्ये आत्मानं स्थापयित्वा युवयोः संप्रतिपन्नं वैदुष्यमेवं परिणमते चेत् 'निष्फला प्रज्ञा, निरर्थकः शास्त्राभ्यासः' ब्रह्म सगुणं वा भवतु आहोस्विन्निर्गुणम् । तत्वमिदन्तया को वा जानाति । किमेवमुन्मत्ताविव परस्परमधिक्षेप्तुं ताडयितुं चोपक्रमध्वे ।

**कृष्ण**— अनात्मज्ञोऽयमाचार्यदूषणे प्रवृत्तः क्रोधमजीजनत् ।

**अनन्त**— शब्दशास्त्रमुद्दिश्य आविष्कृतं न्याय्यमाशयमसावविज्ञाय मां परिहसितुं प्रवृत्तः । तमेनं दुर्विनीतं श्वो न्यायस्थले द्रक्ष्यामि ।

**कृष्ण**— न्यायस्थलगमनस्य पूर्वाङ्गतया कलहोपजीविसविधे भरसमर्पणं क्रियताम् ।

**अनन्त**— रे अनात्मज्ञ, किं विकत्थसे?

**कृष्ण**— भरसमर्पणस्य अनुशय एवाङ्गत्वेनोपवर्णितः । तत्कलहोपजीविनां द्रविणप्रदानेन ज्ञानोदयो भविता ।

**राम**— भोः शास्त्रिवर्य शापितोऽसि शारीरकभाष्येण । अनन्ताचार्य त्वमपीदृशं वक्तुं नार्हसि ।

**अनन्त**— शान्तोऽस्मि ।

**कृष्ण**— अहमपि दान्तः ।

**राम**— ब्रह्मणः अस्तित्वे युवयोर्नास्ति किल विप्रतिपत्तिः ।

**उभौ**— न कदापि । तत्कीदृशम्— इत्यत्रैव विचारः ।

**राम**— दुरूहोऽयं विषयः ।

**उभौ**— अस्मदाचार्याः विषयमिममधिकृत्य सम्यक् विचारयन्ति भाष्ये ।

**राम**— उभयोरप्याचार्ययोर्मतमनुभवगोचरं न भवतीति किल वदन्ति भेदवादिनो द्वैतिनः ।

**कृष्ण**— अद्वैतं विशिष्टाद्वैतमिति मतद्वयमेव प्राचीनमार्षं च । अर्वाचीनमिदं द्वैतमतं कल्पितश्रुतिमूलकं न परिगणनामर्हति ।

**राम**— सर्वाण्यपि मतानि श्रुतिमूलकान्येव । सर्वेष्वपि सिद्धान्तेषु गुणा दोषाश्चोपलभ्यन्ते । केवलमेकत्राभिनिवेशेन द्वैतिनामद्वैतिनां वा दूषणं न विवेकिकृत्यमित्याधुनिका मन्वते ।

**कृष्ण**— द्वैतग्रन्थेषु अद्वैतिविषये प्रयुक्ता अधिक्षेपाः असह्याः । तन्मते वयं दैत्याः असुराः विवेकशून्याश्च । अद्वैतसिद्धान्तरहस्यमजानन्त इमे— 'हिरण्यकशिपुर्यथा अहमेव हरिः' इत्युद्घोषणं चकार, तद्वदेवेमे अद्वैतिनः 'अहं ब्रह्मास्मि' इति वदन्ति— इत्यभिप्रायेण दैत्यत्वमारोपयन्ति । तावता किमस्माकं परिहीयते । तन्मते जीवानामपि परस्परं भेदः अङ्गीक्रियते । अतः स्वस्माद्भिन्नेषु आक्रोशः न तेषां सिद्धान्तविरुद्धः । सर्वत्रानुवर्तमानां संविदमेकामेव अभ्युपगच्छतामस्माकं न कस्मिन्नप्याक्रोशस्यावसरः । अत एवोक्तमाचार्यपादैः— 'इहामुत्र फलभोगविरागाधिगमानन्तरमेव ब्रह्मजिज्ञासायामधिकारः' इति ।

**कृष्ण—** सत्यम्, भो आचार्यवर्य, मृष्यतां मदीयमागः । जीवः परमात्मनः शरीरमिति काममुद्घुष्यताम् । नास्माकं आक्रोशः । कामक्रोधादिभिराविष्टा वयं सिद्धान्तविरुद्धतया चेष्टामहे । वाक्यजालैर्व्याख्याशतेन वा अस्मदीयमद्वैतसिद्धान्तमन्यानवगमयितुं अशक्यमेव । अत एवोक्तम्—

'चित्रं वटतरोर्मूले वृद्धाःशिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः ॥' इति

**सर्वेऽपि—** ओम्– शान्तिः शान्तिः शान्तिः ।

(निष्क्रान्ताः)

---

॥ श्रीः ॥

# ॥ मल्लिनाथश्च अपव्याख्यानं च ॥

---

मन्ये, नूनमिदं लेखशीर्षकमापातमात्रमुषितानां केषांचिदबहुदर्शिनामकाण्ड एव मस्तिष्कं बलवदाघूर्णयिष्यतीति । परं तु 'सन्त्येव क्षितिमण्डले कृतधियो येषां वयं ये च नः' इति महतीमभियुक्तोक्तिमनुस्मृत्य प्रवृत्तस्य हि विमर्शकस्य नास्ति कुतोऽपि भीतिः संकोचो वेत्यपि विदितमेव बहूनां मेधाविनाम् ॥

अत एव हि बलवत उपष्टम्भान्महामनाः साहित्यसारवेदी सहृदयासंपादकः, रघुवंशमथ मेघसंदेशं चापादचूडं विमृशन्, तत्र तत्र परैरनुल्लिखितानतिरमणीयानाशयविशेषानात्मना प्रकटयन्, कचित्कचिन्मल्लिनाथीयेनापव्याख्यानेन कलुषितं कालिदाससूक्ति-

सुधारसं स्वयं प्रसादयन्, 'रघुवंशविमर्शः' इति, 'मेघसंदेश विमर्शः' इति च प्रसन्नगम्भीरगुम्भनाकमनीयं ग्रन्थद्वयं बहिरवतारितवानिति ननु जानन्त्येव सर्वेऽपि सहृदयाः ॥

मयापि इमामेव यष्टिमवलम्बमानेन बहोश्चिरात् [1]मेघसंदेशभूमिकायां मल्लिनाथमहोपाध्यायं प्रति कानिचिदक्षराणि प्रयुक्तानि ॥

इत्थं हि तानि—

"अस्मद्देशीयानां हि विदुषां वेदपुरुष इव खलु भूयसी बहुमतिर्मल्लिनाथमहोपाध्याये। तदुक्तं हि सर्वमप्यर्थजातं स्वतःप्रामाण्यपदवीमर्हतीति दृढाभिमानेन तदुक्तिषु साधुत्वासाधुत्वस्वारस्यास्वारस्यादिविचारणां महापातककृत्यमाकलयन्तः तद्विमर्शप्रवृत्तान्गजनिमीलिकया सुदूरमधिक्षिपन्तो भूयसा समुपलभ्यन्ते यथाश्रुतग्राहिणः पण्डितप्रथाजीविन इत्यन्याय्यमिदमतिशोचनीयमवस्थान्तरमखिलस्यापि भारतस्य। यदि नाम वयं मल्लिनाथादप्यतिप्रकृष्टः कश्चन काव्यव्याख्यातास्तीति ब्रूमः, नियतमेव तर्हि वयमपरैरर्धमुग्धैरनेकथा परिहस्येमहीत्येतदनुभवपुनरुक्तमस्माकम्। अस्त्येवास्माकमपि मल्लिनाथमहोपाध्याये महती संभावना, नूनमयं बहूनां काव्यानां व्याख्याता दार्शनिको विद्वान् बहुश्रुतश्चेति। परं तु काव्यव्याख्यानकरणे यावती पुनरस्य पण्डितैः प्रशस्यमाना प्रसिद्धिरस्ति, तावतीमर्हति वायं मल्लिनाथ इत्यत्रैव बलवती विप्रतिपत्तिर्विद्यतेऽस्माकम्। यतो वयं बहुत्र तद्व्याख्यानेषु प्रमादमुपलभामहे, जानीमश्च तदुक्तादपि व्याख्येयग्रन्थस्य स्वरसवारि पुष्टं च

१. पूर्णसरस्वतीव्याख्यानयुतो मेघसंदेशः श्रीवाणीविलासमुद्रायन्त्रालये मुद्रितः।

परिपूर्णं च व्याख्यानम् । किं च नास्ति तादृशमेकमपि काव्यं मल्लिनाथेन व्याख्यातम्, यन्मल्लिनाथात्प्राक्पञ्चषैर्वापि व्याख्यातृभिर्न व्याख्यायि । स्वोपज्ञं किल व्याख्यानमसाधारणीमापादयिष्यति व्याख्यातुः समाख्याम् । सुलभश्च सुकरश्च खलु जगति परप्रहतया पदव्या कस्यचिद्गमनानुसारः, तमेव पन्थानं तत्र तत्र परिष्कृत्य तेनैव सुखसंचारो वा । बहुषु व्याख्यानग्रन्थेषु विशीर्णान्यर्थजातान्येकत्र संकलय्य प्रदर्शनम् , काव्यव्याख्यानप्रवृत्तेषु ब्राह्मणेषु अस्य महोपाध्यायस्य प्राथमिकत्वं वा, यत्सत्यमस्या अनन्यसामान्याया विख्यातेः स्यात्कारणमित्यूहाम्य तु, विश्वसिमः, बलवानेव मूलबन्धोऽस्तीति ।" इति ॥

एतैश्चास्मदीयैरक्षरनिक्षेपैः रघुवंशविमर्शमेघसंदेशविमर्शाभ्यां च बलवदात्मानमधिक्षिप्तमिव मन्यमानाः, पुराणमित्येव सर्वं साधु समर्थयमानाः, कतिपये विमर्शविदूराः पक्षपातिनः पण्डिता अकारणमेव परपरीवादपरायणा अद्यापि विद्यन्त इति स्फुटं वयं जानीमः ।

तेषामुत वा आत्मनो मोहापनयनाय नचिरादेव 'मल्लिनाथस्य प्रमादाः' इति कृतशीर्षकं महान्तमेकं प्रबन्धमाविश्चिकीर्षामः, यत्र च मल्लिनाथीयं महाकाव्यपञ्चकव्याख्यानं प्राधान्येनाधिकरिष्यते ।

संप्रति च संप्रतिपन्नस्य सर्वाभिनन्दनीयविमर्शसरणेरालंकारिकचूडामणेर्महिमभट्टस्य कानिचन वाक्यरत्नानि परं सहृदयानां संनिधौ सानुरोधमुपहृत्य, कृतार्थमात्मानमारचयितुमभिलषामः ; येन मल्लिनाथोऽपि मलिनतरो भवति ।

इमानि पुनर्महिम्नो वचनानि—

"व्याख्यातारोऽप्यलीकविद्वन्मानितया प्रायेणापव्याख्यानैर्न केवलमात्मानम् , यावत् तत्र भवतो महाकवीनपि क्षेपयन्तो दृश्यन्ते । तद्यथा—

तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बाला
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥

इत्यत्र पाठमिममबुद्ध्वैव कलितकविहेवाकाः पराकृतप्रतीतिचाहताातिशयास्ते

'अवैमि तदवज्ञानाद्यत्नापेक्षो मनोरथः' इत्यादौ दृष्टामपि वाक्यार्थकर्मतां मन्यतेरपश्यन्तो बालायाः कर्मतामस्य मन्यमानाः, स्वरसंधिवशाद्विकृतमिवशब्दमेव भ्रमात् वाशब्दं परिकल्प्य अपव्याख्यामारभन्ते । नह्येवमर्थस्य वैचित्री काचित्समुन्मिषति । नापि महाकवेः कालिदासस्यान्वयगातिरियं क्वचनापि प्रबन्धेऽवधारितपूर्वा ; यदयं रसनिधाने काव्ये व्याधिमिव वाशब्दमिवार्थे प्रयुञ्जीतेति ।" इति ।

मल्लिनाथमहोपाध्यायस्तु—

गाळोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥

इति पाठं स्वीकृत्य 'गाढोत्कण्ठां प्रबलविरहवेदनाम् । बालाम् । गुरुषु विरहमहत्सु । ... पद्मिनीं वा पद्मिनीमिव । इववद्वायथाशब्दौ इति दण्डी । अन्यरूपां पूर्वविपरीताकाराम् । जातां मन्ये ।' इति व्याचष्टे ।

---

१. मेघसंदेशे द्वितीये उच्छ्वासे १६. (२०.) पद्यम् ।

रसिकाग्रणीः पूर्णसरस्वती तु 'बाला जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा' इति पाठमेव स्वीकृत्य व्याचक्षाणः, अन्ते 'रामायणरसायनपरायणेन च कवीन्द्रेण तदर्थचमत्कारतत्परतया तदर्थच्छायायोनिरर्थोऽस्मिन् पद्ये निवेशितः । स यथा—
हिमहतनलिनीव नष्टशोभा व्यसनपरंपरया निपीड्यमाना । सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥ इति ।' इति विलिखन्, आत्मनो बहुश्रुततामिव विमर्शकतामप्याविष्करोति ।

एवं तत्र तत्र पाठभेदादिना व्याख्यानगमनिकया च मल्लिनाथीयस्य पूर्णसरस्वतीकृतस्य च व्याख्यानस्य सुदूरमुत्कर्षापकर्षौ परिस्फुटौ भवत इति उभे अपि व्याख्याने सकृदवलोकयतः सहृदयस्य न खलु तिरोहितं भविष्यति ।

तन्मन्यामहे, सुष्ठूक्तं पूर्णसरस्वतीमहाभागेन—

'सुकविवचसि पाठानन्यथाकृत्य मोहात्
रसगतिमवधूय प्रौढमर्थं विहाय ।
विबुधवरसमाजे व्याक्रियाकामुकाणां
गुरुकुलविमुखानां धृष्टतायै नमोऽस्तु ॥' इति ।

इदं च चित्राच्चित्रतरम्— यद्बहोः कालात्प्राचीनेनालंकारिकमणिना व्यक्तिविवेककारेण सुप्रसिद्धेन महिमभट्टेन दूषितमपि पाठमादृत्य, महिमोक्तरीत्या आत्मानमिव महाकविमपि ह्रेपयितुं प्रवृत्तो महाभागो मल्लिनाथ इति ।

पूर्णसरस्वतीप्रतिपादितानि पाठान्यथाकरणरसगत्यवधूननप्रौढार्थप्रहाणानि अन्यानि च मल्लिनाथस्य प्रमादस्खलितानि शृङ्गग्राहिकया नातिचिरान्निरूपयिष्यामः ।

---

॥ श्रीः ॥

# विद्यावाचस्पतिर्विद्यालंकारो महामहोपदेशकः श्रीमदप्पाशास्त्री राशिवडेकरः ॥

---

प्रियपाठकमहाभागाः, विरलाः खलु भवतां मध्ये तथाविधा हृतभागाः स्युर्येषां न श्रवणपथमवतीर्णमुपरि निर्दिष्टस्य महात्मनोऽभिधानम्। यः किल कालिदास इव मनोहरकवितानिर्माणनिष्णातः, बाण इव नानाविधसरसग्रन्थप्रणेता, मल्लिनाथ इव महाकाव्यसप्रमाणव्याख्यानकुशलः, गीष्पतिरिव हितयथार्थमनोहरवचनविन्यासचतुरः, गणपतिरिव सदाशिवसमाराधनपरः, चंद्र इव समुत्कंठितचकोरकुलस्य प्रसादयन् चेतांसि रसिकमण्डलस्य चंद्रिकाविष्करणेन, सौभाग्यतिलक इव भगवत्याः सरस्वत्याः, निधिरिव विद्यानां, आदर्श इव गुणानां, मित्रमिव धर्मस्य, काल इवाधार्मिकाणां, जीवनमिव सुहृदाम् ॥

यः किल युवापि विवेकवृद्धो न केवलं भरतखंडमिदं निजेन विशुद्धेन यशसा किंत्वन्यान्यपि बहूनि राष्ट्राणि धवलीकृतवान्; सोऽयं विद्यावाचस्पत्याद्यनेकपदवीसमारूढः, संपादकः संस्कृतचंद्रिकायाः सूनृतवादिन्याश्च, समुपगतो दृष्टिविषयं दुरात्मनो युक्तायुक्तविवेकरहितस्य नितान्तनिर्दयस्य मृत्युहतकस्येति निवेदयतां सुतरां व्याकुलीभवति नश्चेतः। विदितमेवैतच्छ्रीमतां, यत्किल चिरं क्रीडति स्वैरं महाराष्ट्रेषु, अवतार इव कालस्य, उत्पत्तिरिव दुरितस्य, जनक इव शोकस्य, शत्रुरिव तरुणानां, विघटयिता दंपतीनां, शापस्थानमिव वैधव्यदग्धवपुषां मुग्धकुमारीणां, क्रव्याद इव मनुष्य-

भक्षको ग्रंथिज्वरमहांतकः । अनेनैव नृशंसेन व्यापादितो तत्रभवानप्पाशास्त्री राशिवडेकरो व्यतीताश्विनवद्येकादश्यां सायं समये सहैवास्माकं मनोरथशतैः ॥

संप्रति हि कामं मासत्रयं स्थीयते अनेन रोगहतकेन पुण्यनगरे । पत्तनमिदं नितान्तं दुष्प्रेक्षतां प्रयाति प्रेक्षकाणाम् । विरलान्येव दृश्यन्ते दिवापि विवृतद्वाराणि हर्म्याणि, यानि तु वर्तेरन् तथाविधानि तत्र 'हा हताः स्मः, हा निरवलम्बाः स्मः, वत्स ! पश्य तव शोकविह्वलां मातरं, नाथ क गम्यते ? अन्तर्हितो मे सखा' इत्यादि विलपतां मृताप्ततमानां श्रूयन्ते आर्तनादाः ।

अवसरेऽस्मिन् वाचस्पतिमिश्रा अपि संप्रेष्य कुटुंबिनीं पितृगृहे, आत्मना क गन्तव्यं, ग्राम एव त्याज्यः, उत विरचयितव्यमुटजं, इहैव वा यापयितव्यानि दिनानि ' इत्यनिश्चितकार्यनिर्णयाः श्वो वा परश्वो वा यथोचितं विधास्यामः इति विचिन्तयन्त आसन् । तावत्तस्मिन्नेव दिवसे सहसा समाक्रान्तो महात्माऽसौ नितान्तनिर्दयेन ज्वरेण । श्रमाधिक्यात्प्रायोऽयं समुद्भूतः स्यादिति विदितवैद्यशास्त्रेण स्वेनैव कश्चिदुपायश्चिंतितस्तत्प्रतिकाराय । किन्तु समतीते घण्टात्रितयपरिमिते कालेऽवर्धत सुतरामस्य संतापः । ज्वरोऽप्यतिभूमिं गतः । तदात्व एव नित्यमिव समागतमस्य सुहृद्वृन्दम् । किन्तु बलवद्रोगग्रस्तस्य वाक्प्रतिबन्धेन नैकोऽपि शब्दो विनिःसृतोऽस्य मुखपद्मात् । मित्रगणेन तु कृतनैकविधौषधोपचारस्यापि न किंचिदपि तनुतामगमदस्य रुक्प्रभावः । अन्ते च द्वित्राहाभ्यन्तर एव संप्राप्तोऽसावसाधारणः पंडितो देवभूयम् ।

अथ प्रसंगवशात्किंचिज्जीवनचरितमपि समुपहर्तुमिह यथा-

मति प्रयतिष्यामहे——

अस्ति दक्षिणमहाराष्ट्रेषु शककर्तृश्रीमच्छिवच्छत्रपतिवंशजाधिष्ठितं कोल्हापुरं संस्थानम् । तत्र राशिवडेग्रामे कस्यचिद्द्विप्रवरस्य वंशमलंचकार विद्वन्मुकुटमणिरेष निजेन जन्मना। पिता चास्य कोल्हापुर एवैनमध्ययनार्थं स्थापयामास । तत्र सम्यक्लब्धमहाराष्ट्रभाषापरिज्ञानः, परिचितकाव्यव्युत्पत्त्यलंकारोपस्थितिर्बाल एव समधीतकालिदासकाव्यस्य तत्रत्यैरेव शब्दजालैः प्रकारान्तरेण श्लोकान्निबन्धुं प्राक्रमत । एष एव प्रारंभोऽस्य कविप्रकांडस्य काव्यग्रथनस्य । अतिलघीयसा कालेनैवासौ प्राभवद्विरचयितुं मनोहरपद्यानि । समभूच्च प्रेमकौतुकविस्मयस्थानं तत्कालीनानां पण्डितप्रवराणाम् । अग्रे च संजातमेतदस्य व्यसनमिव । किं तु दिवानिशमेतद्व्यवसायेन तनूभूताऽस्य विषयान्तरावगाहनधिषणा । न कथमपि मनस्यकरोदध्येयग्रंथविलोकनमपि। तथैव च सिद्धान्तकौमुद्यादीनां शास्त्रग्रन्थानां प्रपठनं नास्मै व्यरोचतांशतोऽपि । तथापि पितुरतिमात्राग्रहेण व्याकरणशास्त्रपरिशीलनेच्छया समाश्रयदसौ करवीरक्षेत्रनिवासिनं वैयाकरणधुरीणं पाण्डिताग्रेसरं श्रीमत्कान्ताचार्यमन्तेवासित्वेन। पण्डितोऽयं सुप्रसिद्ध एवासीत्तत्रत्यविभागेषु शिष्यविनयनेन । पाठिता एतस्माद्राशिवडेकरविपश्चिता कथमपि द्वित्रा ग्रन्थाः । किंत्वामरणं नायं विषयः परितोषाय प्राकल्पतास्य क्षणमात्रमपि । एवं देशिकाज्ञया पितुः प्रतिबन्धाच्चाधीत्य तत्परितुष्ट्यै यथाकथंचित् सिद्धान्तकौमुद्यादीनि कानिचित् पुस्तकानि, लब्धावसरोऽनुवाचयति स्माव्यग्रतया मनसः प्रायः सर्वाण्यपि विख्यातानि काव्यनाटकानि भूयो भूयः । चकारासौ तेनैव पथा रसिकप्रकांडो निमज्जनमनेकशो नैक-

विधकविभूषणकवितासरित्सु । प्राक्रमत च विविधविषयान् विलिखितुं निसर्गरम्यया संस्कृतगिरा । विशेषतश्चान्वकरोदात्मीयभाषाशैल्या तदात्व एवैकांततो बाणभट्टम् । शनैः शनैरेतादृशप्रबन्धप्रथनपरिपाट्याधिगतममुना स्तोकेनैव कालेन भाषाप्रभुत्वम् । विडम्बयामास च लब्धप्रतिष्ठान् पूर्वानपि कविपुंगवान् । अद्यावधि सूक्ष्मत्वेन विभाव्यमाना प्रतिभाशक्तिरपीदानीं स्वयंवृतस्य पत्युरिव सुतरां भूषयामास हृदयमण्डलमेतस्य । एवमधिगतवतो यथोचिताधिकारपदं भगवत्या गिरां देवतायाः साम्राज्ये इतरापि मनोहरग्रन्थनिर्माणोपकरणसंपत् समापतिता करतलमेतस्य। तद्यथा—

अस्ति किल वङ्गेषु कविमहाशयो लब्धकीर्तिः श्रीमान् जयचन्द्राभिधः पण्डितः । तेन चैकदा संस्कृतचंद्रिकायां स्वकीयमासिकपत्रिकायां प्रसिद्धीकृतम् । यथा— यः कश्चन मातृभक्तिविषयमधिकृत्य ललितया गीर्वाणवाण्या सप्रमाणं कमपि प्रबन्धं विन्यस्येत्, स किलाधिगन्ता प्रदीयमानं पारितोषिकं सबहुमानमिति । पठितमात्र एवेदंचरितनायकेनास्मदीयेन झटिति विरचय्य तथाविधं प्रबन्धं प्रेषितोऽसौ संपादकमहाशयनिकटे । तं च तत्रत्यविद्वत्परिषदा सधन्यवादं पुरस्कृत्य वितीर्णं पूर्वोक्तं पारितोषिकं राशिवडेकरकुलविभूषणाय । एवमसौ संजातपरिचयश्चन्द्रिकायाः संपादकेन वारं वारं गद्यपद्यमयं प्रबन्धपीयूषं पाययामास चन्द्रिकामुखेन रसिकप्रवरान् । एवं शास्त्रिमहोदयस्य लेखनसौष्ठवेन नितरां लोकप्रियतां गत्वा तद्द्वारा राकाचन्द्रिकामिव भुवनं समुल्लासयन्तीं संस्कृतचन्द्रिकां वीक्ष्य जयचन्द्रो रत्नमिव कांचनेन संजिगमयिषुः सहकारिसंपादकमिषेण समर्पितवान् चन्द्रिकां राशिवडेकरविदुषे । अग्रे च

नितान्तं समुचितमिमं विज्ञाय संपादकत्वे चिरस्य किल तमेनं संयोज्य शिथिलीचकारासौ स्वसम्बन्धं चन्द्रिकाविषयकम्। तथाप्य सावुदारात्मा भूयोभूयः स्वकृतिसमुच्चयं चन्द्रिकाद्वारेण प्रकटयति स्म। तदानीं तु लब्धसंपूर्णाधिकारः शास्त्रिमहाशयः सहते स्म विशेषपरिश्रमान् चन्द्रिकासौष्ठवाय। दिने दिने च कलया कलया प्रवर्धमाना सा आह्लादयांचक्रे रसिकान्तरङ्गाणि। विषययोजनापि वैचित्र्यमावहत्येतस्याः।

तथा हि— कविकालनिर्णयः, ग्रन्थपरीक्षणम, विविधज्ञानं चेति। तत्र कालिदासकालनिर्णयस्त्वेतस्य समभूत् पाश्चात्यविदुषामपि विस्मयभाजनम्। ग्रन्थानपि रसिकतया परीक्षमाणः समयानुकूलां गांभीर्यविनोदप्रचुरामवालंबत भाषापद्धतिम। चकासति स्म तस्या मोजःप्रसादपदलालित्यादयो बहवो गुणाः। एवं बद्धपरिकरश्चन्द्रिकासमुत्कर्षाय यथावकाशं व्याचख्यौ कविकुलगुरोः कालिदासस्य मालविकाग्निमित्रं नाटकं बालबोधिन्या सरण्या। प्रचलितव्यावहारिकराजकीयसामजिकविषयानपि तेजस्विन्या गीर्वाणवाण्या लेखितुकामेनैतेन सूनृतवादिन्याख्यसाप्ताहिकवृत्तान्तपत्रेण प्रमृष्टो मृतभाषेति भाषाजननीकलङ्कः। ग्राहकसंख्याप्येतस्य सहस्राधिका समजायत। किंतु नियम एवायं प्रायो दैवहतकस्य, यद्विघ्नैरन्तरयितव्यः समुद्यम इति।

कोल्हापुरराजधान्यां वेदोक्तविधिनैव निर्वर्तयितव्याः स्वजातेः शरीरसंस्कारा इति राज्ञो दुराग्रहे प्रवृत्ते स्वमतैकपक्षपातिना चन्द्रिकासंपादकेन स्वीयां ज्यौतिषिकवृत्तिं निस्पृहतया तदा धिक्कृत्यातः परं कोल्हापुरनिवासमशक्यमिव मन्वानेन समाश्रितं वाईक्षेत्रं पुराण-

ग्रन्थान् महाराष्ट्रच्छायोपेतान् संपादयितुम् । कार्यमेतन्निकाममनर्हमप्यात्मनः, प्रकृष्टां कालगतिं विचिन्तयता सम्यक्तया निर्विघ्नञ्च समापितमेतेन । एवमेकतो द्वितीयं ततोऽपि तृतीयं स्थलान्तरं प्रकुर्वाणेनागतं पुण्यनगरं वर्षत्रयात्प्राक् । इहापि महाभागोऽसौ कस्यांचिदांग्लपाठशालायां लघीयसा परिश्रमद्रव्येण निर्वर्तयामास स्वोपजीविकामित्यहो नैर्घृण्यं निर्गुणैकपक्षपातिन्या उन्मत्तायाः श्रियः । प्रधानपाठशालाविद्यार्थिकृते च वेणीसंहारं महाभारतान्तर्गतं नलोपाख्यानं सावित्र्युपाख्यानञ्च विनिर्मितमेतेनाभिनवव्याख्योपेतम् । एते च विद्यार्थिनः प्रायेणाङ्गलभाषाच्छायाप्रपठनशीला अपि वाचस्पतेर्हृदयहारिण्या ललितया सरण्या निकाममाकृष्टान्तःकरणाः शिथिलीकुर्वन्त आङ्गलटीकादरं सहर्षमेतस्यैव ग्रन्थान् प्रपठन्तः सधन्यवादं, प्रयासमेतस्य सफलीचक्रुः । एवमामरणं न व्यरमदसौ लेखनव्यासङ्गात् । प्रशंसनीयासीदेतस्य लघुलेखनचातुरी । यथा हि कश्चन कृतदृढपरिश्रमः पण्डितो देशभाषायां विना प्रयासं लिखितुं समर्थो भवति ; तथैवायं तावतैव कालेन मनोरमया संस्कृतगिरा प्रबन्धलेखने प्रभवति स्म ।

आंग्लभाषावर्तिनां पारिभाषिकशब्दानां संस्कृतप्रकृतिघटनायां तु परां कोटिमधिगतास्य नवनवोन्मेषशालिनी प्रज्ञा ।

तत्रत्याः केचन रसायनशास्त्रग्रन्था अपि गीर्वाणवाक्छायया संवलिता एतेन ।

एवमस्य लोकोत्तरं लेखनपाटवं वीक्षमाणया वङ्गविद्वत्परिषदा वितीर्णमस्मै सबहुमानं विद्यावाचस्पतिपदम् । तथैव प्रयागस्थभारतधर्ममहामण्डलाधिवेशने तत्रत्यैर्विपश्चिद्भिरेनं निमन्त्र्यैतस्य

संस्कृतवाक्पाटवेन विस्मितैः संमानपूर्वकं समर्पितमस्मै '**विद्यालंकार**' '**महामहोपदेशक**' इति च पदवीद्वितयं ।

पुण्यपत्तनेऽपि वसन्तव्याख्यानमालायाः कस्यांचित्सभाया-मध्यक्षपदाधिष्ठितेनास्खलितया वाचा तथाभिहितम्, यथा सर्वमपि श्रोतृवृंदमेतस्य जयशब्दमुदीरयामास सकरतलवादनमनेकशः ।

एवं बहुविधगुणानामाकरोऽपि नांशतोऽपि वहति स्म गर्वभारं शिरसेति विदितमेवैतत्तत्परिचितानाम् । प्रत्युत लघीयांसमपि पुमांसं तद्गुणवर्णनेन संभावयति स्मेत्यौदार्यमस्य चेतसः ।

एतस्य धार्मिकाणि सामाजिकानि च मतानि तत्तत्समये दृष्टिपथमारोपितान्येव तत्पत्रद्वयपाठकानामिति न तद्विषयकं किमपि विस्तरेणाभिधातुमिच्छामः ।

आंग्लभाषापरिचयविकलेनाप्येतेन विश्वविद्यालयस्थनैकविधपदवीधरा अपि निजेन सततोद्यमेन लोकातिगेन तेजसा च ह्रियं गमिता इत्यत्र नास्ति कश्चन संदेहावसरः ।

एवंविधमिदमसामान्यं मानवरत्नं विमुच्य सहसा भरतखंडमिदमन्तर्हितमिति सर्वेऽपि गीर्वाणवाक्परिचिताः सहृदयाः चिरं नितान्तं विलपन्तो बधिरयेयुर्दिक्चक्रवालम् ।

चिरकालकार्यव्यापृतस्यामुष्य न ह्यस्त्येकोपि शिष्यस्तत्सदृश इत्यन्यदिदं शोकस्थानम् ।

आसीदयं निधनावसरे चत्वारिंशद्वर्षदेशीयः । प्रेष्ठाः ! तदेतदुपायनीकृतं श्रीमद्भ्यो वाचस्पतिमिश्राणां स्तोकमिह जीवनचरितमस्माभिः । ध्यात्वेदं मुहुर्मुहुर्विशुद्धेन चेतसा भवन्तोऽपि तत्सदृशकर्मकारिणः प्रभवेयुरित्यास्ति बलवती नः प्रत्यशा ।

# वेमभूपालचरितम् ॥

---

तत्र कालकूटजम्बूफलरसचुम्बनलीलाबालम्, भक्तजनजन्माटवीदहनदावपावकम्, त्रिभुवनकुटुम्बकाभ्यागारिकं देवं सोमनाथमनंसीत् ॥

तदनु कृतभुवनसांराविणं रावणमिव बहुवाहं यवनमुत्पाटयितुं चरमार्णवरोधसा पारसीकाभिमुखो जगाम ॥

चकार च भृशमविरलविमुक्तेन शरवर्षेण निरन्तराच्छादितमम्बरतलमातन्वानैस्तुलुष्कैः सह समरमखर्वगर्वैरुर्वीपतिः ॥

समरभुवि समाकृष्टधन्वा धरणिपतिरत्राक्षीदतिशयितैर्भल्लैस्तीव्ररुषां शिरांसि यवनानाम् ॥

एवं स्वतेजसा निजमिव नीवृतं निरवीवृतन्निष्कण्टकमखण्डमपरान्तमहीतलम् ॥

तदनु तरणिरिवोदग्रप्रतापो दिशमुदीचीं गन्तुमुपचक्रमे ॥

प्रथमं घोटकखुरक्षुण्णघनघुसृणक्षोदकपिशरोधसमुल्लङ्घ्य सिन्धुम्, सिन्धुराजमुपययौ । हरिरिव भुजमन्दिरमथितात्सिन्धुराजात् श्रियमाजहार ॥

तदनु सिन्धुराजदर्शितपथो हूणाभिमुखो जगाम ॥

तत्र युयुत्सयाभिपतितान्, सकलभुवनत्राणकर्तॄणा धनुषा झटिति तनुत्राणभेदिनः शरान्विमुञ्चन्, हूणानतिसंरम्भिणो रम्भास्तम्भलावमलावीत् ॥

ततो महाभुजो नृपतिरासमाद काम्भोजान् ॥

तत्र संवर्तकालकालजिह्वाकरालं करवालमादाय, मृणालभञ्जं बभञ्ज समरसंरम्भि काम्भोजबलम् । जहार च तेजस्विनस्तदीयानाजानेयान्वाजिनः ॥

अनन्तरमासाद्य काश्मीरान्, सकलजगत्प्रसिद्धशारदासाक्षात्कारे, कालागरुप्रायकाननपादपे, स्फटिकचन्द्रकान्तरत्ननिर्भरमेदिनीगर्भे तत्र निवसन्, प्रतिक्षणं विरचितसेवाप्रणामेन काश्मीरकोसलकेकयशकमद्रबाह्लीकप्रभृतिना राजकेन सेव्यमानः, कतिचिद्दिनान्युवास ॥

तत्रान्तरे समाजगाम दवदहनदह्यमानवनतरुशिखरमधुगोलगलिताभिर्मधुधाराभिर्जलधरसमयाभिचारहोममिव प्रवर्तयन्, निजविपक्षनीरधरजीवनदायिने जलधये कुप्यन्निव तदवरोधभूताः शोषयन्सरितः, मल्लिकाप्रसववैजननः, क्षपायुःक्षयः, चण्डांशुतापघण्टासरणिः, उदन्याविपणिः, वात्यानृत्तनाट्याचार्यः, पादपकुसुमपाटच्चरो ग्रीष्मसमयः ।

क्रमेण च दुःसहद्युमणिद्युतौ, महिषमदमाथिनि, मन्दकन्दर्पवीर्ये, पटुपरिमलपाटलीकुसुमपटलपाटलवने, मल्लिकामतल्लिकोल्लासवासितवासरावसाने, सर्वपथीनमृगतृष्णिके, शुकमुखशोणांशुककिंशुके, धारागृहशरणधनिकजने, पान्थनिबिडप्रपासद्मनि, कठोरीभवति घर्मसमये, पृथिवीपतिः 'अयमेव कालः प्रालेयगिरिविजयस्य' इति निश्चित्य, सैन्येन सह महता गच्छन्, हिमालयमारुरोह ॥

अत्रान्तरे सामर्षम् आध्मातगवयशृङ्गनिनदमुखरितगिरिकन्दराविवरम्, अचलसमरकर्ममर्मज्ञम्, स्थूलकरिमस्तकमौक्तिकानु-

विद्धविकटगुञ्जामालिकाभरणम्, करतलगृहीतशक्तिशङ्कुलाभिण्डिपालतोमरशिलाजालम्, आयोधनोन्मुखम, अखर्वगर्वम्, आजगाम पर्वतीयबलम ॥

अथ निरन्तरधृताखेटाखेटकफलकचक्रम्, आगृहीतकार्मुकनाराचभल्लपरश्वथप्रमुखविविधायुधभीषणम्, अनुक्षणकृतसिंहनादबधिरितभुवनविवरम्, अचलसमरसंनाहि तदभिमुखं चचाल धरणीपालसैन्यम् ॥

ततस्तयोः सैन्ययोरनुक्षणक्षिप्यमाणशिलानाराचनिकरपरस्परनिष्पेषजनितैः स्फुलिङ्गपटलैः कर्बुरितगगनतलम्, दुर्विषहविषदिग्धबाणवेधमूर्च्छालवीरभटम, निरन्तरविमुक्तकरकवनकाणयन्त्रदृषत्पतनफलत्फलकचक्रकटुराटितघटितकर्णज्वरम्, अधिकभयमायोधनं बभूव ॥

अनन्तरमसहनतया दुरारोहाण्यपि तुङ्गानि गिरिशृङ्गाणि वल्मीकलङ्घं लङ्घयता, प्रहरणशतैर्भञ्जता, प्रकुपितेन पार्थिवसैन्येन भग्ना बभूव पर्वतीयचमूः ॥

उग्रसमरभीतैरुत्सवसंकेतैरुपढौकितान् शशिकरशुचीन् चमरवालराशीन्, स्थूलस्थूलानि वारणकुम्भमौक्तिकजालानि, चक्षुःप्रियंकरणान् तरुणान्कस्तूरिकाहारिणांश्च, समादाय गिरेरवरुरोह ॥

अवरुह्य च विपन्नरिपुः, किन्नरमिथुनगीयमानानि निजभुजविजयपद्यानि शृण्वन्, अन्तिकभुवि शंकरमान्यस्य गिरेः, कंचित्कालमुवास ॥

तस्मिन्समये, दिव्यभूमितया सदासंनिहितसकलर्तुकुसुमानि, क्रीडच्चिक्रोडशिशुचरणशीर्यमाणबहलीभूतकुहलीपरिमलहारीणि, को-

मलकुसुमकोरकनिकरतारकितकुरवकशिखराणि, सरसरसालशाखाधिरूढकोकिलमुखोदञ्चितपञ्चमाहूतपञ्चशराणि, प्रसवामोदमेदुरमाधवीनिकुञ्जानि, सान्द्रशिशिरच्छायानि परिसरलतातरुषण्डान्यालोक्य, धरणिपतिकटकवासिनो विलासिनः सह विलासिनीभिः कुसुमापचयकर्मणि निर्ममिरे कुतूहलम् ॥

वलकेलिरागिणीनां वामदृशां हृदयमहरन्त मधुरमधुरं क्वणन्तः कुसुमशरविजयकाहलायमानाः कोमलकण्ठाः कलकण्ठाः ॥

अशोकेन हृदयेन, पाटलेनाधरेण, तुङ्गेन कुचमण्डलेन, कृतमालेन केशेन, मदनेन रामणीयकेन, अर्जुनेन हासेन, भद्रश्रिया देहेन, सरलेन संलापेन च, विहारवनराजय इव शृङ्गारराजस्य रराजिरे राजीवलोचनाः ॥

तरुलताग्रपुष्पग्रहणेषु अनविकोन्नमनभृशक्कशवलग्नाः, मन्थरमपचिक्युरङ्गनाः कुसुमानि ॥

तासां कुरवककोरककुण्डलानि कर्णयोः कल्पयन्तः, वकुलमुकुलमेखलादाम्ना काञ्चीपदमञ्चयन्तः, चम्पकगर्भकेण निर्भरं धम्मिल्लमारचयन्तः, तिलकजनुषा परागेण तिलकशिल्पमानने कल्पयन्तः, विचेरुररण्ये युवानः ॥

अथ पुनरेवमारचितविपिनविहरणकेलयो युवानः, काननतलसंचरणक्लान्तचरणारविन्दानाम् , तपनकरपरिम्लानमुखीनां शातोदरीणाम् अम्बुविहारेण सौख्यमभिलषन्तः, अमृतमधुरम् , आरसितसमदकलहंससारसम्, शरदिन्दुचन्द्रिकाधवलम् , उष्णसमयसुखम् , अगाहन्त परिलघुपावनं भागीरथीसलिलम् ॥

अनन्तरमनवरतमज्जनोन्मज्जनक्षोभसंजातफेनसंगतगात्राः स-

निर्मोका इव पन्नगराजकन्यकास्तत्क्षणमराजन्त राजीवदृशः ॥

अन्तरेऽस्मिन्, स्वयमपि मरीचिभिः सह मिमङ्क्षुरिव चरमाब्धिपयसि पपात सप्तसप्तिः ॥

अथ मुकुलितातपे वासरे, वामभ्रुवोऽपि वाहिनीसलिलादुत्तीर्य, शिबिरभुवमयासिषुः ॥

ततः प्रत्यग्ररविविरहशोकविधूतानि कालपटावकुण्ठनानीव ककुभां मुखेषु ददृशिरे तमिस्राणि ॥

आसन्नशिशिरकिरणविहरणहेतोरिव विस्तारिणि वियति शयने विभावरी तस्तार तारकामाल्यजातम् ॥

विष्णुपदप्रवृत्ता कालभगीरथवशे वर्तमाना हंसधवला चन्द्रिकामन्दाकिनी गिरीशशिरसि निपत्य रसातलमवातरत् ॥

क्रमेण च समुल्लासितसागरायां कर्पूरधूलिधवलायां प्रौढायां चन्द्रिकायाम्, स्नानविमलधूपवासितसुरभिकेशगर्भनिहितनवकुसुमदामरमणीयाः, विलासस्मितसुधांशुमेदुरितकर्णभूषणमौक्तिकमणिमरीचयः स्तनतटतरलचारुहारहारिण्यश्चकाशिरे तरुण्यः ॥

ततो यद्यत् दिवसमाम्नातम्, यद्यन्मनसि परिस्फुरितम्, यद्यत्प्रणयेन प्रणीतम्, यद्यच्चातुर्येण जनितम्, तत्तत् अतिमनोहरमनेकोपचारपूर्वमानङ्गात्मकमनुबभूवुरन्योन्यानुरक्तानि कामिमिथुनानि ॥

अत्रान्तरे स्वयमपि रजन्या सह रिरंसुरिव चरमगिरिकन्दरागृहेषु चन्द्रमाः प्रापदाशां प्राचेतसीम ॥

क्रमेण च कोकयुवतिशोकापनुदे भगवति किरणमालिनि किंचिदुन्मुक्तपिङ्गलिम्नि समुदिते, प्रौढे प्रभातसमये, धरणिपतिर्निर्वर्त्य तत्कालसमुचितां क्रियाम्, विजिताशेषराजमण्डलतया जेतव्यमपरम-

पश्यन्, विजयसमरसंरम्भाद्विरम्य, स्वपुरं प्रति यियासुरासीत् ॥

अत्रान्तरे नातिदूरवर्ती मधुरकण्ठो वैतालिकः कश्चिदुच्चैरिमामार्यां पपाठ—

भुवनान्तराणि गत्वा निजकरनिर्धूतनिखिलतिमिरौघः ।
भास्वानयं प्रतापी पूर्वगिरिं भजति भूतये जगताम् ॥

राजा तु तामुपश्रुतिभूतामाकर्ण्य, स्वपुरगमनोन्मुखो जयशालिनीं ध्वजिनीमुदतिष्ठिपत ॥

अथ विषमदृषत्खण्डविसंस्थुलाम , इतस्ततः क्षिप्रभ्रमदभ्रपातवातप्रमीत्रातास , उग्रशरभचक्रवक्रदंष्ट्राघातमोहितरोहिताम्, तारुण्याम्रेडितलावण्यशबरपुरवरवर्णिनीकर्णपूरीकृतकङ्केलिपल्लवाम्, क्रीडाविधेयगौधेयविहारसंधीयमानवल्मीकाम्, प्रक्रीडत्प्रौढकिटिविकटपोत्रोल्लिखितपल्वलक्रोडाम , विसृमरविविधवीरुद्व्रातजातयातयामेतरकुसुमकेसरविसरधूसरचामरकरमरीचिनिचयाम् , पण्डितमतिमिव सुलभविपद्दर्शनाम्, सदीश्वरसेवामिव संनिहितश्रीफलाम्, अगाहत विन्ध्याटवीम् ॥

तत्र पुनरभ्रंलिहविटपमहस्रपरिवहपवनविशीर्णजीर्णपर्णपतनकषायितस्वर्णदीसलिलस्य पचेलिमफलरसचुम्बनचुञ्चुचञ्चुना पञ्चमीयानगरुडेन परिष्कृतशिखरस्य महतो वटतरुषण्डस्य मध्यभागे, प्रतिक्षयक्षीणक्षमपितामहकोटिकरोटिकूटघटितगोपुरकूटम , उत्कटध्वजपरिपाटीपटीकृतवासुकिकुलनिर्मोकपट्टम् , पुराणदिक्करटिविशङ्कटदन्तकाण्डविरचितबहिर्द्वाररमणीयम , प्रयतयममहिलाप्रवृष्टरक्तखचितप्रच्छन्नकवाटम् , उदग्रन्यग्रोधविटपिविकटशाखान्तरालप्रेङ्खत्प्रेङ्खाधिरूढविकृतवेतालमिथुनम् , पर्यन्तस्थापितदारुणशूलशिखरप्रोतदा-

रुकप्रमुखदानवशिरश्चक्रम्, सिद्धिकृपणसाधकगणकृपाणोत्कृत्तमनुजबलिनव्यक्रव्यलाभहृष्यद्भव्यक्रव्यादव्रातम्, क्वचिन्निर्माणमातृकाभिरिव कालरात्रेः कल्पान्तकुटुम्बिनीभिरिव विरचितावयवाभिः विविधशवास्थिमालाधारिणीभिः पितृवनदेवताभिरिव मूर्तिमतीभिर्डाकिनीभिरधिष्ठितम्, क्वचिद्दूराधिष्ठतालद्रुमद्वयसानां कृशीयस्तया वपुषां पवनसंस्पर्शेनापि तत इतः स्खलताम् 'क्व पुनरन्नम्, क्व पुनर्मांसम्, क्व मेदांसि, कुत्र वसाः, क्व चास्राणि' इति यूथं यूथमुद्भ्राम्यतां पिशाचानां बृन्दैर्निरन्तरम्, अनश्वरमहैश्वर्यं चण्डिकालयमपश्यत् ॥

अनन्तरं च नन्दनवनदेवताविकीर्यमाणकल्पतरुकुसुमोपहारम्, निधानाधिदेवताविधीयमानरत्नोपहाररमणीयम्, कमलाकरतलविधूतकेलिकमलमकरन्दबिन्दुसिच्यमानप्राङ्गणम्, भारतीपठ्यमानमहिषासुरादिदनुजमथनगाथासहस्रम्, उपनिषदुच्यमानशक्तिसूक्तिरहस्यम्, शतमखवधूनिधीयमानमरससुधापूर्णकुम्भम् अभ्यन्तरं प्राविशत् ॥

अन्तः प्रविश्य च ब्रह्मशिरोवन्दिताम्, आब्रह्मस्तम्बजननीम्, चण्डकरशशिमण्डलकुण्डलललितगण्डस्थलाम्, आप्रपदीनया कैश्चिदृचां व्याकर्तृभिः कैश्चिद्यजूंषि गृणद्भिः कैश्चित्सामानि गायद्भिः कैश्चिदथर्वाण्यधीयानैः अन्यैः स्तुवद्भिः अपरैरट्टहासमाचरद्भिः पूर्वमहाप्रलये पर्युषां विश्वसृजां शिरोभिर्विरचितया स्रजा विभूषिताम्, शशिहरिणचर्मनिर्मितचण्डातकाम्, फणिपतिनिर्मोकपरिधानाम, पर्यन्तखचितसमग्रग्रहमणिहिमकरैः प्रत्नयुगरत्नसानुरचितैः केयूरभूषणैर्भासुरबाहाष्टकाम्, भगवतीमादिभैरवीमद्राक्षीत् ॥

दृष्ट्वा स पुनरष्टाङ्गस्पृष्टभूमिः प्रणम्योत्थाय विस्मयस्मेरमति-

रचिन्तयत्—

'एषा खलु चराचरजगत्प्रकृतिर्मूलप्रकृतिरिति मुनिभिरुद्गाहिता । अस्यास्तु बालिकायाः पांसुकेलिभवनानि सप्त भुवनानि । अस्याः पुनरपदानभोगावली वेदाः । तेजसः स्फुलिङ्गः पतङ्गः । कान्तेर्बिन्दुरिन्दुः । मङ्गलगायिका वाणी । आज्ञाकरी लक्ष्मीः । वरुणस्तोयकर्मान्तिकः । मालाकारो वसन्तः । क्रीडावाप्यः समुद्राः । दासीवर्गः स्वर्गयोषितः । अस्यास्तु शक्तिरध्यास्य विरिञ्चमुदञ्चयति प्रपञ्चसंभवम् । सत्त्वगुणवर्तिष्णुं विष्णुमाश्रित्य पुष्णाति भुवनरक्षाम् । हरणाय जगतामास्थाय रुद्रमुन्निद्राति । अस्यास्तु स्वप्न एव सुरासुरप्रलयः । प्रबोधे सति प्राणन्ति जगन्ति । किं च महाप्रलयेषु अस्यामेव विरिञ्चादयो विलीयन्त इति निर्णयन्ति निगमान्तगिरः' इति चिन्तयन् , पुनः पुनर्देवीं तां प्रणनाम ॥

ततो निर्गत्य, दुर्गानिलयस्य नातिनेदीयसि नातिदवीयसि प्रदेशे कटकं निवेश्य, नृपतिरादिमशक्तेः सेवाकौतूहलेन विन्ध्यवन एव कतिचिदहान्यवात्सीत् ॥

ततो धरणिपतिचोदिताः शिबिरवासिन्यो विलासिन्यः सह महायोगिभिरुपदंशमांसमेदुरेण मणिकलशसहस्रसंभृतेन मधुना देव्या विन्ध्यवनवासिन्याः कर्तुमुपचक्रमिरे सर्वोपकरणसमग्रां पूजाम् ॥

निवेद्य च निर्भरमधासिषुः सुधातिरिक्तरसां सुरां वनितापुरःसरं महायोगिनः ॥

(क्रमशः ।)

॥ श्रीः ॥

# ॥ विभीषणविलापः ॥

---

रघुनाथनिदेशतः पुरा कृतलङ्कावसतिर्विभीषणः ।
अतिशक्रसमृद्धिसेवितोऽप्यभवत्स्वामिवियोगदुःखितः ॥ १ ॥

स कदाचिदपास्य धीरतां विललापैवमसह्यवेदनः ।
नहि दासजनस्य दुर्दशा गुणवत्स्वामिवियोगतः परा ॥ २ ॥

अयि राघव रक्ष मां प्रभो भवतो दासमनन्यसेविनम् ।
अथ संप्रति संश्रृणु स्वयं मम विज्ञप्तिमनादरं विना ॥ ३ ॥

नहि किञ्चिदबुद्धमस्ति ते तदपि ज्ञापयितुं समारभे ।
अनुतापनिवृत्तये परं मम विज्ञप्तिरियं प्रकल्पताम् ॥ ४ ॥

रघुनाथ भवद्वियोगजां नहि सोढुं प्रभवामि वेदनाम् ।
कृपया तव पादपद्मयोः सविधं प्रापय मां सुकिङ्करम् ॥ ५ ॥

भवदीयपदाब्जसेवनां विरहय्यास्ति न मे रतिः प्रभो ।
न हि राज्यसुखं न चापराण्यभिवाञ्छत्यधुना मनो मम ॥

तव पादपयोजयोस्सदा परिचर्यासुखलिप्सया पुरा ।
अपरज्य सुखादिहैहिकात् शरणं त्वामभजं रघूद्वह ॥ ७ ॥

अथ मह्यमनर्थितोऽपि सन् अददा राज्यमिदं कृपावशात् ।
भवदीयनिदेशगौरवादहमूरीकृतवानसंशयम् ॥ ८ ॥

अधुना तु मम प्रभो भवानधिसाकेतमवेक्ष्य भूधुराम् ।
भरतादिभिराप्तकिङ्करैः परिचर्यासुखितो वसत्यहो ॥ ९ ॥

किमु कारणमत्र चिन्तितं भवता राम न बुध्यते मया ।
भवदेकगतिः कथं न्वहं भवतैवैकपदे वियोजितः ॥ १० ॥

अथ वा भव नः पितुः पदे कुरु कार्याणि हितोत्तराणि च ।
किमु हन्त वियोगदुःखितं सुचिरेणापि न मां स्मरस्यहो ।

मनसापि न चिन्तितं प्रभो प्रतिकूलं न च ते मया कृतम् ।
दृढभक्तिमनन्यरक्षकं वद मामेवमुपेक्षसे कथम् ॥ १२ ॥

अतिचित्रतराणि तावकान्यपदानानि मनोहराणि च ।
सुरगायनतः शृणोम्यतः सुभृशोत्कण्ठितमानसोऽस्म्यहम् ॥

कविपण्डितबृन्दपूरिता तव गोष्ठी मम चैककस्य सा ।
अवकाशमुपासनाय ते किमु नो दास्यति लोकपूजिता ॥

अधिवारिधिमध्यमिन्दिरारमण त्वां विरहय्य हे प्रभो ।
कति कालपरंपरा मया प्रतिवस्तव्यमिहैव मे वद ॥ १५ ॥

तदिमं तव पादसेविनं चिरभक्तं स्वमकृत्रिमाशयम् ।
अगतिं शरणागतं द्रुतं भवतः संनिधिमानय प्रभो ॥ १६ ॥

# गसनिमुहम्मदचरितम् ॥

---

सुता समानात्मगुणाय सुन्दरी
वराय देयेति यदि त्वमीहसे ।
युवा कुलीनः सुभगश्च वीर्यवान्
हितोत्सुकस्तिष्ठति संनिधौ तव ॥ ४० ॥

अनन्यबन्धुर्धनिको मनोरमा-
मशेषभोगैरभिनन्दयिष्यति ।
स लब्धकामो भवतु त्वयादृतः
प्रियां प्रियार्हां प्रणयेन देहि मे ॥ ४१ ॥

सुवर्णपूर्णे मणिराजिराजिते
गृहे मदीये गृहिणीव शोभना ।
मया विधेयेन सदापि सेविता
त्वया च गुप्ता सुभगा भविष्यति ॥ ४२ ॥

हितं सुताया मम चात्मनस्तथा
शुभे मुहूर्ते कुरु मातरादरात् ।
अलं विचारेण जहीहि दुर्दशां
यदृच्छया हस्तगतां वह श्रियम् ॥ ४३ ॥

इति ब्रुवन्तं मदनेषुमोहितं
ममात्मजादूषणबद्धमानसम् ।
निषिध्य निर्लज्जमनादरोचितं
सुविस्मिताहं न्यगदं महीपते ॥ ४४ ॥

भवन्तमुत्कृष्टकुलोद्भवं प्रभुं
प्रभूतवित्तं प्रियदर्शनं पुरे ।
विवाहयोग्यं पितरः सकन्यकाः
कथं न जानन्ति गुणोत्तरं वरम् ॥ ४५ ॥

कुलाङ्गनाः किं सुवते न कन्यका
व्रजन्ति वैराग्यमुत स्त्रियः पुरे ।
जनापवादप्रहतोऽस्ति किं भवान्
कथं वधूमिच्छति शून्यकानने ॥ ४६ ॥

पतिव्रतासूनुरुदारवंशजः
प्रभुर्यदि त्वं कथमुक्तिरीदृशी ।
क्व नन्दिनी मे कुलधर्मवर्तिनी
क्व वारनारीजनलम्पटो विटः ॥ ४७ ॥

प्रलोभ्य कार्तस्वररत्नराजिभिः
प्रसाद्य मां कर्णसुखोक्तिभिस्तथा ।
सुतां सुशीलां मम हर्तुमुद्यतो
विटो न जानासि पतिव्रताव्रतम् ॥ ४८ ॥

अतिप्रसङ्गेन कृतं विटप्रभो-
　　र्विहारदासी न भवेन्ममात्मजा ।
अकाञ्चनं नार्हति रत्नमुत्तमं
　　न मल्लिका वृक्षमचूतमाश्रयेत् ॥ ४९ ॥

भुजप्रभावप्रतिपन्नगौरवो
　　यशोधनो धर्मपरायणः पुमान् ।
सुतां मदीयां सहधर्मचारिणीं
　　करोतु कश्चित्परिणीय धर्मतः ॥ ५० ॥

गृहाण वित्तं यदिदं त्वयार्पितं
　　विषाग्निकल्पं खलु पापिनां धनम् ।
तपस्विनीशापहुताशनोष्मणा
　　तवाद्य दाहो विफलाश मा स्म भूत् ॥ ५१ ॥

निशम्य वाणीं मम रोषदारुणां
　　शराहतव्याघ्र इवोत्थितः खलः ।
समीप्सितार्थप्रतिघातमन्युना
　　स मामवोचत्परुषाक्षरं वचः ॥ ५२ ॥

विमान्य वृद्धे स्वयमागतां श्रियं
　　विकत्थसे स्वामविचार्य दुर्दशाम् ।
शृणु प्रतिज्ञां नचिरात्तवात्मजा
　　विहारदासी मम संभविष्यति ॥ ५३ ॥

छलेन कुर्यामथ वा बलेन ते
मदच्युतिं पश्य विमूढचेतने ।
प्रमथ्य पुत्र्यास्तव यौवनं नवं
त्यजेयमेनां गलिताङ्गलक्षणाम् ॥ ५४ ॥

दिनाष्टकादूर्ध्वमयं जनः पुन-
र्वरिष्यते विश्वमनोरमां वधूम् ।
विचिन्त्य सम्यक्कुरु निश्चितां मतिं
वृथैव मा भूद्व्यसनोदयस्तव ॥ ५५ ॥

(क्रमशः)

मामुद्दिश्य तपश्चक्रे पुरागस्त्यो महामुनिः ।
मया प्रदत्तविज्ञानो द्राविडीं व्याकृतिं व्यधात् ॥ ३५ ॥

अगस्त्यप्रार्थनातुष्टब्रह्मदत्तवरा इमाः ।
नापभ्रंशत्वदोषोऽस्ति द्राविडीनां गिरां ततः ॥ ३६ ॥

यथैव सांस्कृती भाषा प्रयुक्ता स्वर्गदायिनी ।
प्राकृती द्राविडी चापि तथैव स्वर्गदायिके ॥ ३७ ॥

अतोऽन्याः खलु या भाषा आन्ध्रकर्णाटदेशजाः ।
अनार्षत्वादपभ्रंशा इति शास्त्रविदां मतम् ॥ ३८ ॥

तस्माद्भाषान्तरीयाणां काव्यानां दोषकीर्तनम् ।
प्राकृताद्द्राविडाच्चापि विभिन्नविषयं भवेत् ॥ ३९ ॥

प्राकृती शौरसेनी च मागधी च महामते ।
पैशाची चूलिकापैशाच्यपभ्रंश इति क्रमात् ॥ ४० ॥

षड्विज्ञेया इमा भाषा आसामाद्यास्तु पञ्च याः ।
अपभ्रंशत्वदोषस्तु न तासां मुन्यनुग्रहात् ॥ ४१ ॥

षष्ठ्यास्तु मुनिरेवास्या अपभ्रंशत्वमूचिवान् ।
अपभ्रंशत्वदोषस्तन्नाम्नैवास्याः प्रकाश्यते ॥ ४२ ॥

अन्तिमा तु यथार्थेयमपभ्रंश इति स्मृता ।
तदेषा नाटके प्राज्ञैर्यथेष्टं न प्रयुज्यते ॥ ४३ ॥

इत्येतत्प्राकृतादीनां भाषाणमपि मानद ।
परिग्राह्यत्वमुक्तं ते किमन्यच्छ्रोतुमिच्छसि ॥ ४४ ॥

इति श्रीशंभुरहस्ये प्राकृतभाषाप्रशंसा नाम
सप्तषष्ट्युत्तरद्विशततमोऽध्यायः ॥

॥ श्रीः ॥

# ॥ श्रीकृष्णाभ्युदयः ॥

श्रीरामानुजसिद्धान्तमर्मज्ञैः महीसार-

जनपदालङ्कारभूतैः श्रीकण्ठ-

श्रीनिवास इत्यपराभिख्यैः

साहितीमारज्ञैः

**श्रीशैलयज्वभिः**

विरचितः ।

श्री. विद्यानिधि कृष्णमाचार्येण

संशोधितः ।



श्रीरङ्गनगरस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

मुद्रापितः ।

१९१२.

॥ श्रीः ॥

# ॥ भूमिका ॥

सरसगद्यरमणीयस्यास्य काव्यस्य निर्माता मद्रपुरसंनिकृष्टे महीसारजनपदे समुद्भूतः श्रीकण्ठश्रीनिवास इत्यपरनामा भारद्वाजकुलतिलकः श्रीशैलयज्वेति ज्ञायते । श्रीमतो भट्टबाणस्य कृतीरनवरतमनुशीलयन्नसावधिगतवाग्विलासः तेनैवाविष्कृतां सरणिमनुसरन् श्रीमतो वासुदेवस्य लीलादिकमस्मिन्काव्ये वर्णयन्नावर्जयति मानसं रसिकानाम् । तत्र तत्र श्रीरामानुजीयैरन्यैश्चादृतासु आहारव्यवहारसमयाचारविषयेषु आत्मनः आशयविशेषान् साकूतमवगमयति सहृदयान् ।

एष कविः कर्णाटभूभृता समादृतः बङ्गळूर् नगरे पुष्पपुराभिधे प्रदेशे कंचन कालमवात्सीदिति श्रूयते । कदायमुद्भूत् ? को वास्याचार्यः ? कुत्राधिगतानेन ब्रह्मविद्या ? के बान्धवाः ? कानि मित्राणि ?— इत्यादिकमिह प्रकाशितेभ्यो गद्यपद्यमयेभ्यस्तल्लेखेभ्य अवगम्येत सहृदयैः । कवेरस्य तनूजः कश्चिदासीत् ; तस्य च पुत्रद्वयमुद्भूत् । तयोरेक एवाद्यावशिष्टः कर्णाटराष्ट्रे राजकीयैरधिकृतो देहयात्रां करोति ।

गैर्वाण्यनभिज्ञमात्मनस्तनूजमालोक्य निर्विण्णहृदयोऽसौ कविरन्तरङ्गशिष्येष्वेकतमस्य संनिहितबन्धोः श्रीनिवासस्य हस्ते काव्यमिदं समार्पिपत् । स हि अनुदिवसमस्य सूक्तीर्मन्त्रमिव जजाप आगममिव सस्मार । एष कदाचित् स्वेनैव लिखितमेकं तालपत्रमयं

कोशं गृहीत्वा पाठशालापरिशोधानाय महीसारजनपदं गतस्य मे निकटमेत्य 'ग्रन्थोऽयं भवद्भिः सहृदयायामवश्यं प्रकाशनीयः, एष हि पञ्चाशद्वर्षपूगानस्मद्गृहस्यान्तर्वलभौ निक्षिप्तो वम्रिभिरवलीढो मुमूर्षोर्दशामनुभवति; सहृदयैरत्यन्तमास्वादनीयस्यास्य काव्यस्य दारुणा विपत्तिर्यथा न भवेत् तथा करणीयम्; कवेरस्य पौत्रः कश्चित्प्राणिति; स हि नातीवास्य काव्यस्य प्रकाशने श्रद्धधाति; गैर्वाणीप्रत्युज्जीवनबद्धदीक्षैर्भवद्भिरिदं पत्रिकायां प्रकाश्यते चेत्सुबहूपकृतं भवेद्देववाणीप्रणयिनाम; वयमपि गुरावनृणा भवेम; तद्वंश्याश्च कृतकृत्याः स्युः' इति बहुधा प्रार्थयामास ।

तदीयामभ्यर्थनामङ्गीकृत्य काव्यमिदं सहृदयायां प्रकाशयितुं प्रवृत्तानामस्माकमतर्कितोपनतो महान्प्रत्यूहः समजनि । कवेरस्य पौत्रः 'काव्यमिदमस्माकं पैतामहं धनम्, तस्य च मूल्यत्वेन द्विशतं रूपिकाः सप्रार्थनं सप्रश्रयं सप्रणामं च मत्पादमूले निक्षिप्य संपाद्य च मदीयं सौमनस्यं त्वया प्रकाशनीयम्, नो चेदधिकरणिकस्थले आवयोर्व्यवहारो भवेत्, तदप्रमत्तो भव' इति कलहोपजीविद्वारा लेखं प्राहिणोत् ।

गैर्वाण्यामनितरसाधारणेन प्रणयेन वर्षीयसः कस्यचिच्छ्रोत्रियस्य प्रार्थनया च स्वेनैव धनव्ययेनैतत्काव्यमुद्रापणकर्मणि प्रवृत्ता वयं नितरां भीताः 'अखिलजनोपकाराय कूपखननप्रक्रान्तानामकाण्डोपनतेन ब्रह्मराक्षसेन भीषणम्' इति लोकोक्तितत्वमनुभवन्तः 'प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्' इति न्यायमनुसरन्तः यथाकथंचिद्ग्रन्थमिममिह प्राकाशयाम । काव्यस्यास्य द्वितीयो भागोऽपि वर्तत इति श्रूयते ।

कवेरस्यान्तरङ्गशिष्येण स्वावासे निक्षिप्ता गद्यपद्यमयाः केचन लेखा अस्माभिरुपलब्धा इह प्रकाश्यन्ते। काव्यानुवाचने यादृशो रसानुभवः तादृशः समुपलभ्यते लेखावलोकनेपि इति वयं विश्वसिमः ।

**संपादकः ।**

॥ श्रीः ॥

## लेखः १.

वेदोत्तमाङ्गयुगलीविपुलव्याहार्यविस्मितार्यजनान् ।
निरुपमविचारशैलीन्यक्कृतवाचाटवादिवाग्गुम्भान् ॥ १ ॥

सकलजनसेवनीयान्सान्द्रतरप्रेममेदुरस्वान्तान् ।
वाधूलवेङ्कटार्यान्वरगुणरत्नौघवारिधीन्सुहृदः ॥ २ ॥

विज्ञापयामि विनतो विरचितसाष्टाङ्गवन्दनो ह्यसकृत् ।
भारद्वाजकुलीनश्रीनिधिदासोऽतिभक्तिभरितोऽसौ ॥ ३ ॥

निरुपधिककृपया सुहृदां कुशली वर्ते कुटुम्बसमवेतः ।
कुसुमपुरे हि काञ्चीमुनिवरचरणारविन्दनिरतोऽहम् ॥ ४ ॥

सुहृदा स्वहस्तलिखितां लेखामवलोक्य ललितपदरचनाम् ।
मग्नः प्रमोदजलधौ कुशलोदन्तस्य विशदविज्ञानात् ॥ ५ ॥

लेखा लिखिता सुहृदां विरहविदूनं मदीयमिह चेतः ।
रञ्जयति रागिणीव स्वयमेवादूरमुपगता रमणी ॥ ६ ॥

वि....ष्टयोर्हि दूरे दैवान्तान्यद्रिनोदाय ।
अनुपदमात्मकुशलालंकाराया विना हि लेखायाः ॥ ७ ॥

अभ्यर्थयेत्रभवतामसकृत्कुशलावबोधिनीं लेखाम् ।
रसिकहृदयंगमां तां निरतिशयानन्ददायिनीं हृदये ॥ ८ ॥

सुहृदां सुदुर्भगोहं किं वा कथयामि सुकृतपरिपाटीम् ।
चिरमिह भूवरनगरे प्रथममधीतागमान्ततन्त्रार्थाः ॥ ९ ॥

तदनु यतीशपदांबुजपरिचरणव्यापृतात्मकरणगणाः ।
बृन्दावनेऽद्य निरता रमणीये भगवता रचिते ॥ १० ॥

गोविन्दचरणसरसिजसम्पत्पवित्रपांसुचये ।
यत्र हि चिरं चचार व्रजबालैः परिवृतः पशुभिः ॥ ११ ॥

नन्दात्मजो हि रेमे संरक्तैः गोपिकानिवहैः ।
यत्र कलिन्दतनूजा प्रवहति पुण्या प्रसन्नशुभसलिला ॥ १२ ॥

यस्यां व्रजाङ्गनाभिः कुहनाधूर्तः चिरेण चिक्रीड ।
कृष्णपदाम्बुजरेखामक्रूरोमोहमुपगतो दृष्ट्वा ॥ १३ ॥

यत्र सिकतासु मध्ये जन्मापि प्रार्थितं गुरुभिः ।
युक्तं हि वंशभाजामिदमेवात्मानुरूपचरितानाम् ॥ १४ ॥

यद्दिव्यदेशवासः स्वाश्रितसन्त्राणनञ्च कृपयैव ।
इदमेव सुकृतिसुगमं कथन्नु लभ्येत मादृशैर्हि जनैः ॥ १५ ॥

हरिचरणनलिनसेवासौभाग्यसुदूरदुर्भगैः करणैः ।
तदपि सुदूरनिवासः सुहृदां मम रोचते न चिरम् ॥ १६ ॥

यत्र हि गरीयसी सा हिमबाधा प्राणिनां प्रबला ।
यत्र ज्वरोऽपि बलवान्सकलानेव प्रबाधते ह्यनिशम् ॥ १७ ॥

प्रेमभरपेशलानामाप्रापायैकशङ्कि ननु चेतः ।
प्रथममरोगसुखित्वं प्रबला हि प्राणिनां संपत् ॥ १८ ॥

किञ्च विदेशनिवासे विरलो विस्रम्भभाजनं हि जनः ।
अनिमित्तमेव लोके साधूनां खलजनो वैरी ॥ १९ ॥

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणमेव वैरिणो जगति ॥ २० ॥

सौजन्यमेव सुहृदां सकलवशीकारकारणं भवति ।
येन च वशीकृताः स्युः सर्वे लोके हि बन्धुताभाजः ॥ २१ ॥

परकीयदोषगन्धे विमुखैः कल्याणकांक्षिभिर्हि जनैः ।
भवितव्यमेव लोके येषां सुलभं हि शाश्वतं श्रेयः ॥ २३ ॥

समये श्रीमति चैत्रे सकलजनानन्दकन्दभूतेऽस्मिन् ।
सहकारस्य किसलयपरिचर्वणहृद्यकोकिलालापे ॥ २८ ॥

हिमदोषमुक्तमण्डलसुखसेव्यहिमांशुचन्द्रिकासुभगे ।
प्रोषितमलयमरुत्प्रियसुखसंस्पर्शात्प्रवालरम्यासु ॥ २५ ॥

सर्वासु वनलतास्वपि पुष्यन्तीषु श्रियं प्रसूनभरैः ।
मलयानिलेन सुहृदालंकृतशीर्षेषु तरुषु पुष्पौघैः ॥ २६ ॥

श्रितजनहर्षजनके श्रीमद्यतिराजसार्वभौमस्य ।
विपुलोत्सवे प्रवृत्ते विबुधजनश्लाघनीयविभवेऽस्मिन् ॥ २७ ॥

नानादेशसमागतसेवार्थिजनालिसङ्कटोद्देशे ।
श्रीमद्भूतपुरेऽहं सुहृदां भूयः समागमाकांक्षी ॥ ८२ ॥

यतिपतिचरणसरोरुहसेवासंसक्तचित्तवृत्तिरगाम् ।
सुहृदामसन्निधानान्न यथा पूर्वं मनोऽभिरते स्म ॥ २९ ॥

दृष्टेषु तेषु तेष्वपि रसिकजनेष्वार्यवर्यचरणेषु ।
शशिमण्डलेन हीना उडुनिकराः किन्नु मोददा जगताम् ॥२९॥

चैत्रोत्सवं यतिपतेः चित्रं को वानुवर्णयेत भुवि ।
अन्यः सहस्रवदनात्कुशलः तस्मात्फणीन्द्रतनुभाज ॥ ३० ॥

प्रियतमविरहविदूनामाश्वासयितुं हि पूर्वमेव गता ।
सुतमुखकमलविनोदनाकांक्षिणीं भगिनीम् ॥ ३१ ॥

जाया सबालयुगला समनुमता सोदरीप्रणयात् ।
किञ्च विनोदनकामः काञ्चीनगरीं गतोऽस्मि गुणबहुलाम् ॥

फल्गुनपूर्णनिशाकरहृद्यनिशाकेरलीकरग्रहणे ।
रसिकजनानुभाव्ये रम्ये देवाधिराजमहितमहे ॥ ३३ ॥

वरदार्यवर्यसुहृदा वरगुणभूषोज्वलेन रसिकेन ।
सुभगेन सुगहनाम्ना रामानुजनामधेयवैश्येन ॥ ३४ ॥

शिष्येण तत्रभवतां श्रितजनरक्षाधुरीणहृदयेन ।
रङ्गयवैश्यतनूभवरत्नेनात्मानुरूपतनयेन ॥ ३५ ॥

तत्रापि न रतिमापं प्रोषितसुहृदां गुणौघसंस्मरणात् ।
रसिकसुहृद्वियोगे किं वा मोदाय कल्पते भुवने ॥ ३६ ॥

पूर्णमनोरथमेव प्रत्यागतमत्र परिकरोपेतम् ।
संपन्नकुशलभाजं संगतमाप्तैः कलत्रपुत्रमुखैः ॥ ३७ ॥

स्वाधीनवृत्तिसुखितं प्रियतमसुहृदं कदा नु पश्येयम् ।
इत्थं विक्रमचैत्रे विशुद्धसप्तम्युपेतभृगुवारे ।
श्रीनिधिनाम्ना रचिता विज्ञप्तिः प्रेमपूरभरितेन ॥ ३८ ॥

यद्यपि मन्दमतेः मम महदेवात्र वाचिकं हि भवेत् ।
क्षन्तव्यमेव सुहृदा तदपि महान्तो निसर्गवात्सल्याः ॥ ३९ ॥

सुहृदां वाक्यनिबद्धश्रीमुखपत्रेण पुनरनुग्रहवान् ।
बाणकवेरिव कृत्या प्रहर्षवशगः कृतार्थोऽस्मि ॥ ४० ॥

लेखद्वितयं सुहृदा विलिखितमनुजाय भाष्यनाम्ने च ।
सद्यः प्रेषितमेतत् द्वाभ्यां विज्ञातकुशलवृत्तान्तः ॥ ४१ ॥

आरूढो मोदगिरेः अधित्यकां सोऽपि भवदीयः ।
पुनरपि सुहृदां सद्यः समागमं कांक्षते प्रणयात् ॥ ४२ ॥

तनुजोऽपि तत्रभवतां श्रीनिधिनामा हि सान्त्वितो दूरम् ।
न जहाति बालभावान्मनसो वैक्लव्यमेव विरहकृतम् ॥ ४३ ॥

प्रागेव पञ्चषदिनाल्लेखिकया श्रीमतामनुग्रहवान् ।
पित्रा द्राक् प्राप्त इवाभूत्प्रमोदभरितः सः ॥ ४४ ॥

इत्थं विक्रमचैत्रे विशुद्धसप्तम्युपेतभृगुवारे ।
श्रीनिधिनाम्ना रचिता विज्ञप्तिः प्रेमपूरभरितेन ॥ ४५ ॥

इति

## लेखः २.

---

निगमान्तयुगलजलनिधिजठरनिगूढार्थरत्नसंपन्नान् ।
विज्ञापयामि विनतः सुहृदो वाधूलवेङ्कटाचार्यान् ॥

अहो महतीखल्वियमलङ्घनीयता विधेरप्रतिविधेयस्य । यदनिच्छतो बलात्प्रवर्तयति प्राणिनस्तत्र तत्र दुर्घटेषु विषयेषु । विघटयति च विरहकातरानपि सुदूरे । किं कुर्मो वयमनीशाः परवन्तः परिभ्रमन्तश्चक्रनिबद्धा इवानुभवामः सुखमितरद्वा । हन्त! महदिदमाश्वासस्थानं यन्न कदाप्युपनयति सुखेतरदाश्रितवत्सलो भगवानात्मपदारविन्दसमाश्रयानतिप्रणयिनोऽरविन्दनाभः । यदुक्तम्—'रक्षते भगवान्विष्णुर्भक्तानात्मशरीरवत्' इति । यद्यपि सुदुःसह एवायं सुहृदां सुदूरविरहः । अथापि गीर्वाणफणितिनिबद्धायाः सुखोदन्तलेखिकायाः सुहृदामसकृदुपलम्भहेतुरिति विषह्यते । यया च तत्रभवतामार्याणां श्रीशैलयज्वनामप्रतिविधेयविरहखेदोऽप्यपनुद्येत । यद्यपि चेन्नपुरीतः प्रास्थितानां सपरिवाराणां कुशलोदन्तमुपगतोऽस्मि लेखिकात्रितयेन द्रमिडफणितिनिबद्धेन संक्षेपतः । अहमपि प्रतिविलिख्य प्रहिणवम् पत्रिकाद्वितयम् । एकां रामप्रतापदासमुखेन, अपरां च आसूरिश्रीनिवासार्यमुखेन । या किल चरमा लेखिकाऽतिजवयन्त्रयानसरभसा यथा तथा विन्यस्ताक्षरविन्याससुभगा सापि पूर्वेद्युरेवोपगता रञ्जयति हृदयं बालिकेव कलमधुरप्रलापिनी । अथापि न मनस्तृप्तिरुपजाता । यथा हि प्रौढाङ्गनयेव प्रियतमहृदयरञ्जनपटीयस्या गीर्वाणफणितिलेखिकयाऽतिविपुलया ॥

किञ्च— इदमपि न ज्ञायते विशदं पूर्वतनीभिर्लेखिकाभिः । इतः प्रस्थितैरत्रभवद्भिः मध्येपदवि कुत्रवोषितं हरिवासरे । कथन्नाम शरीरस्थितये । अथवोपोषितम् । स हि महनीयो दिवसः । यत्र हि सिद्धिमुपयातः तत्रभवान् भगवद्गुणानुषक्तया गीत्या कैशिक्या गायको ब्रह्मराक्षसमुत्तारयामास चातिदुर्गतमिति श्रूयते । किञ्च केषु वा तीर्थोदकेषु स्नातम् पावनेषु पुण्यतमे सोमोपरागसमये । कथं वा तर्पिताः पितरो देवा ऋषयश्च । अथ वा किन्नाम सुदुर्लभं सुकृतिनाम् । अप्युपगताः सर्वेऽपि कुशलिन एवाशंमनीयविभवां बृन्दावनभूमिम् । अपि निरन्तरायाः कैङ्कर्यविधयो गोदारमणस्याशासनेन मङ्गलानां सुहृदाम् । अपि ते कुशलिनः सकुटुम्बाः प्रभवः ये वात्मनीनमखिलमप्यर्थजातं चिरसंभृतं धारयन्ते भगवते भागवतेभ्यश्च। ये हि प्रथमं भाजनं भगवतो नीलारमणस्यानुकलसमेधमानानामनुग्रहसम्पदामत्र भवतामार्याणां रङ्गाचार्याणाञ्च । अहो किमिति वर्णयामस्तेषामनुभावमार्याणाम् । ये ह्यचुम्बितवैष्णवसमयाचारेऽपि प्रदेशे पूरयामासुश्चिरनिगूढमपि मनोरथं भगवत्या गोदाया गोविन्दसमागमेन । मन्ये चाहमवतीर्णमत्र पुनरपि यतिपतिमेव काङ्क्षितमपरमपि पूरयितुं धरण्यां तस्या इति ॥ अपि कुशलिनः सर्वेपि ते अनुजीविनः। अप्यनुरज्यन्ते सुहृदि । अपि काङ्क्षन्ते योगक्षेमौ सुहृदाम्। अपि नाति खेदकरीवा हेमन्तसमयसञ्जायमाना हिमबाधा । अपि सुखावगाहानि तीर्थसलिलानि । अपि स्वदन्ते समयेऽभिमतमाहारं बाला युवानो वृद्धाश्च । अपि न चिन्तयन्ति जन्मभूमिस्नेहेन सुदूरदेशविप्रवासखेदम् । अपि नाभ्यसूयन्ते सुहृदभ्युदयाय, अपि न द्रुह्यन्ति सुहृदभिमतये । अपि सुरक्षितो वा कोशः । अपि न किञ्चि-

द्विस्मृतं अनतिलङ्घनीयसमयधूमशकटससंभ्रमारोहणसंभ्रमेण वस्तु । अपि नेर्ष्यासूयादिवैमुख्यमुद्वहन्ति कोपकुटिलाः कुलाङ्गनाः । अप्यामोदते विविधविचित्रवस्तुविलोकनेनायुष्मानात्मजः कुशली । अपि वा कुशलिनी प्रजावती मम भगिनी च । या हि गुणवती क्षमावती च सती दुःसहमसहमानाऽतिप्रबलं दारिद्र्यखेदं दवदहनपरीतेव कुरङ्गी नवजलदमालामनुसृता सुदूरमपि प्रेयसीं सुहृदः । यस्याश्चातिमहान्पक्षपातः प्रणयिन्यास्तव भवताम् ।

किञ्च— सर्वेपि ते कुशलिनो वयमत्र । येषामनुकलमाशासते सुखानि सुहृदः । तेऽपि कुशलिन एव गुरवो भूतनगरे गोविन्दयतिवरचरणनलिनसमाश्रयास्तत्रभवन्तस्तादृशा एव शीलेन वैदग्ध्येन वैराग्येण मेधया च यदनुग्रहैकमूलमिदं सकलमपि सौभाग्यं सुहृदाम् । तेऽपि किञ्चिद्व्यपदेशेनालंचक्रुर्महीसारपुरीमर्वागेव द्वित्रिदिनात् । यद्यपि प्रत्येमि चानल्पप्रयोजन एव सुदूरविप्रवासः सुहृदां दाशरथेरिव तद्वंश्यानामपीति, तथापि न चिरादेव पुनरपि समागमसमुत्सुकं मे मनः ।

किञ्च— अवलोकयेयमनुगृह्यमाणमायुष्मन्तमात्मजमुपनयमङ्गले पत्न्या सहानुकलसमेधमानप्रेमभरमेदुरहृदयया सुहृदा चागामिनि वसन्ते । सर्वथा हि विरलास्तादृशाः । ये वा निरुपाधिप्रेमतुन्दिलहृदया अनुकलमाशंसन्ते मङ्गलान्येव । ये वा न सहन्ते देशकालोपनतं दैन्यम् । सर्वदा संस्मरामि तामेव निशीथिनीम् । यस्याञ्चागणितप्रणयिनीसमाश्लेषसरसालापसुखाभ्यामावाभ्यामतिवाहितोऽतिमहान्समयः सरससल्लापमुखेन सत्यपि प्रास्थानिके महति संरम्भे निर्वहणीये चानेककार्यसंविभागे विचिन्तनीये च विषयार्थविनिर्णये ।

पुनरपि कदानु तादृशं प्रमोदभरमनुभवेयं सुहृदामिति ॥

सधनुषि विक्रममिहिरे मेचकपञ्चम्युपेतकुजवारे ।
श्रीनिधिनाम्ना रचिता विज्ञप्तिः प्रेमपूरभरितेन ॥

इति ।

---

## लेखः ३.

अहो विचित्रा हि सुकृतिजनपरिपाटी । येषामनुदिनमभिवर्धते वैदग्ध्यं यशः सुखम् । किं बहुना । अखिलमेव सौभाग्यम् । तेषां हि न दुर्लभमिह चामुत्र च सुखमनुग्रहादेव रमापतेः । यैरेव स समाराधितो भगवानतिप्रणयिभिः अन्यजन्मनि विमलया भक्त्या विविधैरुपकरणैश्च । तस्य चाश्रितवत्सलस्य प्रेमभरपरवशस्य श्रियःपतेरदेयमस्ति न किञ्चिदाश्रितेभ्यः । अतः परं हि किं वा सुकृतमासादनीयमास्ति तेषाम् । येनैवानवधिकेनाव्याजेन भगवतः प्रसादेनोपश्रृणुमो वयं सुकृतिजनशिरोमणिं प्रियसुहृदमतिदविष्ठमपि कुशलिनमेवाबद्धकुतूहलं हि संवादे वादिनामेकशास्त्रविचारेषु निर्वोढारमपि महतः कैङ्कर्यश्रियः उपदेष्टारमर्थविशेषणाम् उपभोक्तारमभिनन्दनीयविभवानाम्, आमोदयितारमाश्रितजनानाम् उपलालनीयचरितमखिलजनानाम् आशंसनीययोगक्षेममतिमहतां चेत्यनुभवामः परां कोटिमानन्दस्य । तत्रभवद्भिश्च नातिचिरविलिखितया लेखिकया अवगतसकलोदन्तस्याप्यवजिगमिषतश्चोत्तरोत्तरविशेषमाकुलीक्रियते हि हृदयमतिप्रबलया जिज्ञासया । को नाम स वादी । यो वा विमोहयति जगदेव । जाग्रति च निखिलकुमतिमहाहंकारतिमिरमरीचिमालिनि अखिल-

कलाकलापसहस्ररश्मौ तत्र भवति प्रियसुहृदि चालंकुर्वति तमेव देशम् । किमयमतिपरिचितकाणादः? आहोस्विदवगतपाणिनीयतन्त्रः? अथवाऽधीतमीमांसः? उत परिज्ञातशारीरकः? यन्निरसने सुहृदामिदंपरता गरीयसी । पूर्वमपि कञ्चन कर्णाकर्णिकयाऽश्रृणुवम् । येन केन चिदद्वैतवादिना निरस्तमपरमपि कुदृष्टिम् । किन्तु स एवायमुतान्यः? कीदृशी वा विप्रतिपत्तिः । कस्मिन्वा विषये । के वा सभासदः । के वा मध्यस्थाः । के वा सहायभूताः सुहृदामतिप्रबलेऽस्मिन्व्यतिकरे । कथन्नाम वादक्रमः । किमुत समक्षमुत लेखिकया । को वा कोटिक्रमः । का वा युक्तयः । कानि वा प्रमाणानीति । तदेतस्मिन्विषये विशदया नातिचिरविलिखितया लेखिकयाऽनुग्राह्योऽयं जन इति ॥

अथवा मन्ये चानुसरतः प्रमाणपदवीं अखिला एव सहायतामुपयान्ति । यदुक्तम्—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अनुरुन्धतामप्रमाणपथं न कोऽप्युपयाति सहायताम् । यच्चोक्तम्—

अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ इति ॥

किञ्चेदमेव मे मनसि विचिन्तनीयतामुपगतम् । यदेवानितरसाधारणमात्मनः सौभाग्यावहमतिसुलभं सुहृत्समागमसुखम् । तदेवात्मनो दुष्कृतवशात् सुदुर्लभमेवाभवदिति ॥ अस्तु वा कार्यवशाद्यदा कदाचिदपि विरहः । कथन्नाम सहेयं तत्तत्समयेष्वानन्दावहेष्वपि विरहविह्वलताम् । यदायुष्मतः शुभेऽपि भाविनि सन्दिग्धतामुपगतः सुहृत्समागमः । कथन्नाम निर्वहेयमेकाकी प्रमोदं वानुभवेयम् । किन्तेन कृतेन शुभेनात्मजादीनामात्मनोऽननुमोदनीयेन

विविधवस्तुनिकरपरिपूर्णेन वा । यदि नाम नाप्तजनहृदयरञ्जनम् । न वानुगृह्यते विपश्चिद्भिः । यद्यपि दुर्लभ एव दविष्ठतया देशस्यानतिलंघनीयतया कर्तव्यतायाः, सुहृदुपागमः । तथापि निजपरिणयव्यपदेशेन वाहमपि कृतार्थीकृतोभवितास्मीति निरचिनवम् । तदिदमनवकाशपराहतमेव संप्रति मनोरथपदम् । परिणयविषये चायुष्मतः सर्वथा यथाशक्ति प्रयतमानो मङ्गलनगरवासिने मदग्रजाय महनीयचरिताय भाष्यकारनाम्ने काचन लेखिका विलिखितेति निवेदितपूर्वमेव ननु सुहृद्भ्यः । सा च किञ्चिदस्वास्थ्येन वा शरीरमनसः तत्तत्कार्यविशेषव्यग्रतया वा न प्रतिविलिखिता यथाकालम् । पुनरपि चाहमवश्यनिर्वहणीयमविलंबक्षमं मन्वानः सुहृदभिमतमुपेक्षितायामपि पूर्वलेखिकायामतिचिरनिरूढेन सौहार्देन भक्त्या चानवद्यहृद्यया अशङ्कितमेवापरामपि लेखिकां प्राहिणवम् । सा च प्रकृतिसरलेन सौहार्दनिधिना सौजन्यमान्येन प्रतिविलिखिता यथाकालमेव लेखिका । यया च विज्ञायते प्रतिरुद्धमस्यां शरदि निजतनुजापरिणयमङ्गलमतिप्रबलयानुपपत्त्या । यतो ह्यासन्नप्रसवा प्रेयसी तस्य । परन्त्वेतावदवगम्यते । विचिन्त्यमानेषु तेष्वनुरूपवरेषु सर्वथैवानुरूपमायुष्मन्तमभिरूपेण सौशील्येन गुणैश्च वैदग्ध्यादिभिर्मन्यन्त इति तदपीयमाशङ्का बलवती तेषाम् । अतिदविष्ठतया देशस्यानारोग्यतया च तस्यासहायतया चात्मनोऽसहमानो गमनागमनखेदमतिदुर्लभमेव मन्यन्ते तनयोपलालनसौभाग्यमिति । हन्त! एकैव ननु तनुजा तेषामतिसुभगा लालनीया च । प्रायेण श्रीकण्ठनगरसमाख्याजुषो हि वयमनर्हाः किल तनयासमुपलालनसौभाग्यस्य । लब्ध्वापि तादृशं भागधेयं अनुभवेत्को नाम मनस्वी । देशविप्रकर्षादिना विश्लेषखे-

दम् । दुस्त्यजः प्रकृतिसङ्गो महर्षिणामपि । यदुक्तम्—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया । इत्यादि । किं पुनर्मादृशानामतिरागिणां प्रकृतिपरवशानाम् । किञ्च विशेषतश्च जननीजनस्येति । तदायत्तमेव सर्वमकरोदनुरूपवरान्वेषणभारमग्रजो भाष्यकारनामेति विज्ञायते । तदित्थंभूते हि व्यतिकरेऽप्रतिविधेये कथन्नाम निर्वहेयमायुष्मत्परिणयमङ्गलं स्वयं वानुभवेयं सुहृत्समागमोपनयमङ्गलप्रमोदमिति ।चिन्ताविह्वलमेव मनः । यद्यन्यापि कन्याभिमता सुहृदां तदैव संभावनास्सदभिमतस्य । तत्र च कीदृशी वा सुहृदभिमतिरिति चिन्तये । सर्वथैवाविलम्बक्षम एवायुष्मत्परिणयः । अनुकलमाशंसमानासु जननीषु मङ्गलं अभिनन्दनीयविभवे च पितरि वशीकृतहृदये चात्युदारविभवे सकलभुवनावतंसभूते प्रभौ समुचितवयसि बहुशोऽधिगतसकलविद्ये सहजविनयशालिनि तनय इति न किञ्चिदावेदनीयमस्ति सुहृदामवगतसकललौकिकमर्यादानामिति । अमुमेव च मनोरथमसकृदभ्यर्थयते तनया च तत्रभवतामागता च महीसारनगरं अनुजतनुजा प्रियतमसमागममङ्गलाय पुनरुपगतैव कुशलिनी नगरीमाञ्जिकोणिसमह्वयामिति ॥

विक्रममीनप्रतिपदि शुक्के सौम्यदिनेऽस्मिन्गतोत्तराभाद्रे । वेङ्कटगुरवे लिखिता विज्ञप्तिः श्रीनिवासदासेन ॥

---

## लेखः ४.

भूमौ भवाम्बुधिनिमग्नजनावनाय
कारुण्यतो हि भृगुवंशसमुद्भवोऽसौ ।

योगी चिराय जयतां निजवाग्विधेय-
पद्मासहायपदपङ्कजभक्तिभूमा ॥

निगमोत्तमाङ्गयुगलीनिष्णातान्शुभगुणौघनिधीन् ।
विज्ञापयामि विनतः सुहृदो वाधूलवेङ्कटाचार्यान् ॥

कुशलिन एवात्रत्याः सर्वेऽपि सुहृदामाशासनेन मङ्गलानामनुग्रहेण चाहमपि सकुटुम्बः । कुशलिनौ चायुष्मन्तौ निजजननीसंदर्शनसमुत्सुकौ । अभ्यर्थये चानुकलमपि तत्रत्यानां सपरिवाराणां श्रीमतां योगक्षेमबोधिनीमनुदिवसमेधमानगोदारमणविविधमहोत्सवाभिव्यञ्जिनीं लेखिकाम् ॥

न चिरादिव लिखितया सुहृद्भिर्लेखिकया तत्तदभिलषितानेकसुदुर्लभसौभाग्यसंभावनापिशुनया अनवधिकसौहार्दपरीवाहरूपया कृतार्थीकृतोऽस्मि । अभिप्रेषितमायुष्मतोश्च श्रीशैलश्रीनिवासशर्मणोर्लेखाद्वितयम् । अगृह्णां चाभिप्रेषितमम्बायै पञ्चविंशतिरूप्यं श्रीशैलशर्मणा जननीसहजपरिपोषणजागरूकेण । प्रतिबोधनीयश्च यथाभिमतमेव निवर्तयिष्यामीति । किंचाभिप्रेषितमनुजाय विंशतिरूप्यमपि प्रत्यगृह्णाम् । अनुपदमेव प्रतिविलेखनीयापि सुहृदां लेखा तदानीमसंनिहितेन मन्दभाग्येनानालोकिता न प्रतिविलिखितेति क्षन्तव्यमसदृशमुपनतं सौहार्दस्य । यतोऽद्य महानवकाशो मम व्यवहारसरणेः पठनप्रक्रियायाश्चायुष्मतः परिसमाप्ततया हूणशरदः । तत् किंचिदिव विनोदनकामेन तत्तद्विशेषावलोकनकौतुकिना आयुष्मता किंगृहेशनाम्ना तनयेन बलवदभिप्रार्थितः चेन्नपुरीमुपगतोऽस्मि ॥

तत्र हि सकलप्राणिनिवहमनोहरे महत्यारामे प्रवृत्ते च सां

वत्सरिकोत्सवे राज्याः तत्तदतिमनोहरानेकविचित्रविलोकनाक्षिप्तहृदयः क्षणमिव वारदिवसानपनीय अद्यैवागतः पुष्पपुरीमवालोकयं चार्यलेखिकां प्रवृत्तश्च प्रतिविलेखनसाहसे ॥

किंच तयैव लेखिकया नातिसंनिहितभक्तिसारमहोत्सवनिर्वहणनिस्तन्द्रमवगम्य प्रियसुहृदमुपगतः परां कोटिमानन्दस्य । अहमपि पूर्वमेव प्रतिबोधितोऽपि वरदार्यप्रभृतिभिः आवेदनीयमार्येभ्य इति, निसर्गत एव तत्कैङ्कर्यनिरतानामागन्तुकेन निवेदनमनुचितं मन्वानेन नैव किंचिन्न्यवेदि । तथापि समुचितज्ञैस्तत्रभवद्भिः अहमेव प्रतिबोधित इति न किंचिदवशिष्टम् ॥

किंचेदमपरमपि विश्रमस्थानम् । यदद्य भक्तिसारसंनिधिसकलविधकैङ्कर्यनिर्वहणनिर्निद्रो रङ्गय्यश्रेष्ठी बलवदभिपीडितोऽपि ब्रह्मविदामप्यनतिलङ्घनीयेन अतितीव्रवेगेन गुणवत्पुत्रमरणदैन्येन, केवलं तु साहजया विवेकसंपदा न मुञ्चति किंचिदपि भक्तिसारपदाब्जभक्तिम् । मन्वानश्चात्मनीनसकलसौभाग्यनिदानमनुग्रहमेकमेव मुनेः प्रवर्तमानश्च समुचितेषु तत्कैङ्कर्यनिर्वहणौपयिकेषु व्यापारेषु पुष्यंश्च पौत्रकानायुष्मतो बालकान्, अनुभवंश्च तेषु सुतावलोकनसुखं, आराधयंश्च यथाशक्ति साधूनस्मद्भागधेयेनातिविह्वलो वर्तते । स हि यथाशक्ति निर्वहेदेवास्मिन्नपि वत्सरे मखोत्सवमतिमहान्तम् । स हि महानुभावप्रकृतिः यो वा न मुञ्चति मुहूर्तमपि भगवन्तं भक्तिसारमुनिम् । तमृते को वानुचिन्तयति मनसापि महामुनिम् । किमत्रावगततत्तत्समयोपपत्तीनामन्यैर्निवेदनीयमार्याणाम् । इदमेकमत्यावश्यकमवश्यनिर्वहणीयं भूसारनगरवास्तव्यानाम्—यदनुपेक्षणमतिथीनाम्, विशेषतश्चोत्सवसमयसंगतानाम् । किंच तेऽपि नरसिंहगुरवोऽस्मत्स्यालाः

सर्वथानुपपत्तिं प्रकटयन्तः साहाय्यकमपेक्षन्ते सुहृदामपि । तदत्र समुचितमत्रभवन्तो विदांकुर्वन्तु ॥

अन्यच्च तनया हि तत्रभवतां कुशलिनी भूतपुर एव प्रतिवसति परिचरन्ती संसृतिनिर्वहणव्यापृतमात्मवल्लभं आकाङ्क्षमाणा च न चिरात्समागमं पित्रोः ॥

किंच ते च कुशलिन एव गुरवोऽस्माकं परमहंसपरिव्राजकपरिबृढाः श्रीमत्तिरुवेङ्कटरामानुजयमिनोऽलंकुर्वन्ति तामेव नगरीम । परिष्कुर्वन्ति च अतिमहान्तमाराममतिमनोहरं यतिपतेः । तदर्थमेवाङ्गीकुर्वन्ति चातिमहान्तमपि परिश्रमम् । उपगच्छन्ति च प्रतिदिवसं नगरीम् । आवर्जयन्ति च तत्रत्यानखिलान् । रञ्जयन्ति च विमतानामपि मनांसि विविधोपनिषन्निगूढार्थनिरूपणेन । अनुगृह्णन्ति चानेनैव व्यपदेशेन मार्गासक्तानपि मादृशो मन्दभाग्यान् कूपकूर्मसधर्मणः । किं बहुना समुज्जीवयन्ति सकलमेव लोकम् । सत्यं स हि भगवानपरावतार एव यतिपतेः । किमिति वर्णनीया तेषां ज्ञानभक्तिवैराग्यसरणिः उपन्यासधोरणिराश्रितजनवत्सलता वा ॥

किंचेदमसकृदभ्यर्थये— यद्यस्ति सौहृदमतिचिरनिरूढमस्मिन् जने, अनुग्रहो वा गरीयान्, वत्सलता वा आयुष्मति । तथैव प्रयतितव्यं सुहृद्भिर्यथैव लिखितं नचिरात् । सर्वथा तामेव परिपुष्णामि तनयामिव लेखिकाम् । संभावयामि सहचरीमिवालोकयिष्याम्यनुकलमपि प्रेयसीमिव । आराधयाम्यम्बामिव, यस्यांचास्मदभिमतोऽर्थः सकलोऽपि सुप्रकटः । सर्वथैव आगामिनि वसन्तेऽनुभवन्सुहृत्समागमसुखं नियुक्तश्च तत्समयोचितेषु व्यापारेषु निपुणबुद्धिना सुहृदा निर्वहेयं लीलयैवायुष्मतो बालकस्योपनयनमङ्गलम् । कथमन्तरेण सुहृ-

दमुद्वहेयमात्मजमङ्गलेन प्रमोदम्, यदनुग्रहैकमूलमिदं सकलमपि सौभाग्यं दासस्य । यतिष्ये सर्वथैवायुष्मतः श्रीनिवासस्यानुरूपकान्ताकरग्रहणमङ्गलायावश्यनिर्वर्तनीयाय ॥

अन्यदिदमावेदनीयमाश्चर्यमार्येभ्यः— यदतीते हि हरिवासरे द्वित्रिघटिकामात्र एव दिवसे अकाण्ड एव चकम्पे स्वयमचलाऽपि धरणी । येन स्फुटिता इव दिग्भागाः, दलिता इव प्रासादाः, भिन्ना इव भित्तयः । प्रलयकाल इवाकस्मिकेन तेन च महता भूकम्पेन पतनभयमाशङ्कमानाः समुद्विग्ना एव सर्वप्राणिनः, न शेकुः पदात्पदमपि चलितुम्, इतिकर्तव्यतामूढा एवाभवन् । केचिदकाण्ड एवोपानिविष्टा निपेतुः । तत्र तत्र निक्षिप्तानि भाजनानि अनिमित्तमेव विचेलुः । केचित्परित्यक्तसदना गृहाभ्यन्तरान्निश्चक्रमुः सकुटुम्बाः कुटुम्बिनः । एवमनितरकथनीयेन अनुभवैकवेद्येन महता कम्पेन सर्वतः क्षुभिते च धरणीमण्डले अनुग्रहेणैव भगवतः स्वयमेवोपशशाम द्वित्रैरेवक्षणैः स महानपि भूकम्पः । तत्र च देशे कथं वा सुहृद्भिरनुभूतमिति परिज्ञानकौतुकमपनोदनीयमार्यैरनुपदमेव लेखिकयेति ॥

विधुशरदि चापबहुलप्रतिपदि गुरुवारपुष्यनक्षत्रे ।
इत्थं वेङ्कटविदुषां श्रीनिधिदासेन विलिखिता लेखा ॥

---

## लेखः ५.

बृन्दावने विविधगोपनितम्बिनीभिः
क्रीडारसानुभवतोऽपि चिरादतृप्तः ।
गोदानिविष्टहृदयः कुहनाविटोऽसौ
क्रीडंश्चिरेण तनुतां कुशलानि नित्यम् ॥

निगमोत्तमाङ्गयुगली
निगूढतत्त्वार्थनिर्णयौत्सुक्यान्
वाधूलवेङ्कटगुरून्
विज्ञप्तिः प्रणतिपूर्विका भजताम् ॥

कुशलिनो वयमत्र सर्वेऽपि महीसारपुरवास्तव्यास्तदुपान्तवर्तिनश्च निर्व्याजप्रेमरसपरीवाहरूपेण अनाकलितदोषगन्धेन आशासनेन मङ्गलानाम् ॥

अधिचित्रभानुकन्याचतुर्दशदिनमार्यविलिखितया च लेखिकया अवगतनत्तत्कुशलोदन्तसमुदयाः अनुभवामोऽतिमहान्तमानन्दम् ॥

किंच, नातिचिरादिव तद्देशसमुपागतैः पादकिवमहाशास्त्रपाथोधिपरिचयपरिलब्धसमाख्यैरस्मत्प्रियसुहृद्भिरप्पलाचार्यैः विनिवेदिततत्तद्विशेषविशदविज्ञानवैभवेन समक्षमिवानुभवन्तः अधिरूढा अपि प्रमोदगिरिशिखरतटमचिरादेव तत्तदनुभवबलवदुत्कण्ठितहृदयाः भवामो बिलम्बाक्षमाश्च ॥

यद्यपि न दुर्लभमिदं सौजन्येन सुहृदां समधिकमपि सौभाग्यं विनिवेदितश्च तैरेव मनसि परिवर्तमानः सुहृदां मनोरथः । यथा च मादृशैरखिलैरेव सहृदयैरनुभाव्याः समयेषु तत्तद्विशेषा इति ।

चित्रमिदमधिरूढानामप्यखिलजनविस्मयनीयं पदमनुभवतामनुकलसमेधमानप्रभुसौहार्दसमासादितां सकलसाम्राज्यसंपदम्, निर्व्यूढनिखिलकैङ्कर्यपरम्पराणाम्, निरुपमवचनशैलीप्रकटिततत्तद्रहस्याविवशीकृतसकलसुमनसाम्, अनुचिन्तनमाबाल्यसुहृदामस्मादृशाम् ।

अथवा समुचितमेव सौजन्यशालिनामवगतसकलशास्त्रतत्वानां परस मृद्ध्येकप्रयोजनानां परानर्थपरिजिहीर्षूणां परमकारुणिकानां प्रिय सुहृदाम् । स हि भगवानपि न रमते ह्यानन्दमयीमधिवसन्नपि नित्य-विभूतिम्, अपेक्षते किलाश्रितजनसहवसतिसुखम्। अत इदानीं प्रनी-मो बृन्दावनविहारिणो गोदारमणस्य प्रतिदिवसोपचीयमानविविध-विशेषोत्सवसेवासौभाग्येनेदिष्ठमात्मानम् ॥

अन्यच्च, विनतानन्दनस्कन्धदेशसमारूढमनोहरविविधविचि त्रभूषणोज्ज्वलदिव्यपरिकरमनोहरगोदारमणपरिष्कृतया चैकया स्य न्दनोत्सवसमागतानेकदेशीयराजन्यमौलिमालासंभाव्यरजसा समुत्तुङ्ग-गिरिशिखरमनोहरस्यन्दनोत्तमेन समलंकृतया चान्यया अमूभ्यामभि-प्रेषिताभ्यामार्यैरतिमनोहराभ्यां चित्रफलकमतल्लिकाभ्यामनुगृहीतावा-युष्मन्तौ अनुभवतः साक्षादिव बृन्दावनमहोत्सववैखरीम् ।

अहमपि बलवदनुगृहीतोऽस्मि अतिविमलपट्टसूत्रपरिष्कृता-भ्यामखिलकलिकलुषपाटनपटीयसीभ्यामनेकमन्त्राक्षरैरिव ग्रथिताभ्यां मूर्तैरिव भगवन्नामसहस्रैः प्रोताभ्यां भवजलधिनिमग्नस्यात्मनः समु-त्प्लवनसाधनीभ्यां समासादितरूपाभ्यामिव महामन्त्रद्वयीभ्यां पवित्र-मालाभ्याम् ॥

अहो! मूढमतिर्नाहमिदंप्रार्थयमनितरसुलभं सौभाग्यं सुहृत्सं-निधौ न वाचिन्तयमपवर्गसाधनं मनसि । केवलं तु वर्तमानस्यापि पशोरिव शिश्नोदरपरायणस्य मन्दमतेर्महानुग्रह एव सुहृदामतिचि-रसंभृतसौहार्दफलपरिणाम एवायम् ।

कुशली चायुष्मान् श्रीनिवासनामा तनुजश्च तत्रभवता-मनुदिनपरिचितदिनकरविरचितकणादतन्त्वोऽनाघ्रातदैन्यगन्धः सर्वदैव

विद्याव्यापृतधीः सुखमामोदते । तस्य च सौजन्येन सरलतया सौशील्येन सुहृत्समधिकैरनेकैश्च सुगुणैः सुतरां वशीकृतहृदयोऽहमपि सुहृत्समागमसुखमसकृदनुभवामि । कुशलिनी च सुभगा श्रीरङ्गनायकी तनया अनुभवति जननीसहवसतिजनितमतिमहान्तमानन्दम्; परंत्वाकाङ्क्षते च तत्रभवतामपि समागमसुखमनुभवितुम् । संनिधिरेव हि पित्रोः सुखौपयिकः सकलप्राणिनाम्, विशेषतश्च योषिताम्, किमुत दौहृदवतीनामासन्नप्रसवानाम्; निसर्गपेशला हि योषितां प्रकृतिः ॥

अम्बा च तदीया निःशेषनिर्हृतरुगामोदते तनयादौहृदसौभाग्येन, संपादयति च तत्तन्मनोरथमविलम्बितमेव ।

सुहृदभिप्रेषितमादौ पञ्चदशरूप्यमार्यतीर्थहेतोरनन्तरमपि प्रेषितं सप्रतिरूप्यमखिलगृहतन्त्रनिर्वहणाय सर्वमपीदमायुष्मतः श्रीनिवासस्य हस्त एवादाम । ततश्च न किंचिदिह न्यूनता अवश्यनिर्वहणीयेषु गृहतन्त्रेषु । किंतु सुहृदसंनिधिरेवास्माकमपरितोषाय । समयेऽस्मिन् न रोचते मह्यमपि सुहृदां सुदूरदेशस्थितिरेकाकिनाम । तदचिरादेव प्रयाणमङ्गलोदन्तलेखिकयानुग्रहः कार्यः ॥

किंचेदमपि प्रार्थये यद्यदभिमतं सुहृदां तत्र तत्राशङ्कितमेवादेष्टव्य इति । अहमपि जागरूक एव यथाशक्ति समाधेयविषयेषु । अद्य च मद्भवनमधिवसन्ति तनयाप्रभृतयः, अभिरोचन्ते च तत्रैवावकाशं प्रसवमङ्गलस्य । किं च तेऽपि महाभाष्यमप्पलाचार्याः सुहृद्भिरभिप्रार्थिताः निजसदन एवान्वमंसतातिमहान्तमवकाशम् । यत्र चाभिरुचितं तत्रैव संपादयाम्यवकाशम् । अत्र च संपादनीयेषु समयेषु न शङ्कनीयमीषदपि सुहृद्भिः । परंत्वाशंसनीयमेव गोदारमणचरण-

नलिनसंनिधौ सुजीवसुपुत्रसुखप्रसवमङ्गलं तनयाप्रभृतीनामिति—

चित्रभानुशरत्कन्याद्वादश्यां भानुवासरे ।
श्रीकण्ठश्रीनिवासेन लेखोऽयं लिखितः स्वयम् ॥

---

## लेखः ६.

कुशलिन एवाऽत्र सर्वेऽपि वयमत्रभवतामनुग्रहेण । अभ्यर्थ्ये च श्रीमतामनुदिनोभयवेदान्तकालक्षेपातिशयस्य योगक्षेमयोश्च तत्रत्यानामसकृदेव लेखिकाम् । पूर्वमपि काचन लिखिता लेखिका दासेन गैर्वाण्यैव वाण्या । साचोपगता वा न वा संनिधिं श्रीमताम् । अन्यदिदमविलम्बक्षममप्रतीक्ष्यैव प्रतिपत्रिकामावेदनीयं विदितमप्यार्येभ्यः यदासन्न एव भगवतो भक्तिसारस्य महानुत्सव इति । तत्र चेयमाशङ्का बलवती ममाप्रतिविधेयेऽपि विषये । कथं नाम तर्पिताः स्युरतिथयो नानादेशसमागताः सेवितुमेव भगवन्तमेकान्तिनश्चातुराश्रमिकाः । कथं नामोपेषितेषु ताम्यत्सूदासितुम्, उपभोक्तुं वा स्वयमभिनन्दनीयसमागमेषु । कथं नाम सभाजयामि तानहमकिंचनो महाभागान् । किंच मन्दभाग्यतयैव माद्दशामवष्टम्भोऽपि शिथिलीबभूवात्र पौराणाम्, यैरेव समाराधिता यथाकालमुपरचितशरीरवृत्तयो रसवत्तरैः भक्ष्यैर्भक्ष्यैश्च सुखमसेवन्त विरचितकथाकलापा अतिथयः । यदवष्टम्भेन वयमपि विरतकृत्या विचारणैकव्यग्रा अभ्यागतानामप्यभूम । अतः पूर्वं तु न कंवा परिश्रममन्वभूम वयम् । कं वा न देशमुपजग्मिम । के वा नानुसृताः प्रभवः समयेषु कैङ्कर्यचिकीर्षया । हन्त तानपि कलुषीचकाराभिनन्दनीयचरितानति प्रबलः कलिहतकः, येनैव सकलोऽपि परिश्रमोस्माकमेकपद एवापोहितः ।

ते चेदानीमतिमहत्तरं हृदयकालुष्यमुद्वहन्ति । नाभिभाषन्तेऽभिभाषणीयान् । न संभावयन्ति संभावनीयान् । नावलोकयन्त्यवलोकनीयान् । न विरचयन्ति नैःश्रेयसिकमपि कर्म । कोऽप्ययमपर एव प्रकारश्चिन्त्यमानोऽपि कम्पयति मनः । कीदृशी वा तेषामुदारता गाम्भीर्यमाश्रितजनरक्षणव्यग्रता वा प्रवणता वा साधुषु । ते चेदानीमात्मनीनमर्थजातं विभज्य तदुपचयैकतत्परा अपूर्वा एवाभवन् । यद्यपि रामस्वामिनामधेयो वणिक्प्रवरः परिज्ञातसकलार्थः सेवया महतां जानंश्चोचितमुपयोगमतिचपलायाः श्रियो विनियुङ्क्ते तत्र तत्र दिव्यदेशेष्वात्मनीनमर्थजातमनपत्य इति किंवदन्ती श्रूयते । तदपि सोऽप्यस्मत्प्रियसुहृदा वरदार्येण भक्तिसारपदारविन्दभक्तिभरितेन प्रतिबोधितोऽपि सुदूरं पथ्यमपि तद्वचो नाकरोत्कर्णे । कृत्यैव भक्तिसारमुनिम् । नूनमत्र चास्माकं दुरितमेव निमित्तम्; कथमन्यथा हि तस्य महानुभावस्यैवंविधो मतिविभ्रमः, विद्वेषो वा सहज इव तदाराधितेऽपि मुनौ । अथ वा महान्तोऽपि जरावैक्लब्येन महदुपधारयन्ति हृदयकालुष्यम् । न मुञ्चति हि साधूनपि विभूतिस्वभावः । अतएव हि दूरीकृतभवपाशबन्धैरपि परिहृतोऽयं विभूतिसंसर्गः । இனிப்பிரவியாண் டேனா ண்டேன் इति ॥

अथवा किमिति वयमेव वा नानुगृहीतास्तादृशा एव मुनिभिः; ये वा यथामति विरचयामो विविधानात्महितौपयिकानेव कैङ्कर्यविधीन् । अथ वानुकूल एवास्माकमपि स भगवान्; येन हि वयमेतावतीं श्रियमुपनीताः, यदनुषङ्गादेव वयमिह चामुत्र च कृतार्था एवाभूम । किंनाम तस्य दुष्करमवतीर्णस्य सुदर्शनस्य विरचितवि-

विधविपक्षविक्षोभस्य सुरक्षितरमापतेः; येन हि विगतान्यकर्तव्यः सुखमासेवते फणिपतिमृदुशयने समाश्लिष्टकमलाकुचकलशगूढघटित-वक्षःस्थलो भगवान् । किं च मनोरथोऽपि महानेतादृशः—यथा हि भगवान्यतिपतिराराध्यते तत्रत्यैरेव भवदपाश्रयैः तथैवाराधनीयो भगवान्भक्तिसार इति । यद्यपि सर्वथैव नोपेक्षेत समुचितज्ञः परिज्ञात-संप्रदायो रामानुजनामधेयः कुलक्रमागतं धर्मं तथापि न तावानुत्साहः समयेऽस्मिन् । येन समाराधिताः स्युः संगता अतिथयः । जानामि चात्र यथाशक्ति प्रयतितव्यं कल्याणाभिनिवेशिभिरिति प्रतिबोधयितुमप्यनवसर इति । यतो हि नातिप्ररूढः प्रभुप्रसादः ॥

किंचेदमपि विचिन्तनीयतामुपगतमपरम् । यत्तस्यैव भगवतोऽवतारेणानुगृहीतासु मकरमखासु विचित्रविविधवस्तुसंयोजनरसवत्तरैः अनागरिकैरप्यभिनन्दनीयैः शुद्धमाषविकृतैरपूपैराराधयामासुः किल भगवन्तं तदीयांश्च नृसिंहगुरवः स्याला एव सान्तरा अस्माकमपि । ये खलु प्रथमत एव प्रवर्तितास्तातपादैरेव तत्रभवतामनुष्मिन्नत्यावश्यके हि कैङ्कर्ये एतावन्तमपि शरदं निरन्तरायमेव निर्वर्तयामासुराशासनेन मङ्गलानां तेषामतिमहतां मनस्विनाञ्च । तेषांच तनयः प्रकृत्यैव रुग्णशरीरो जननीविरहितश्चाद्य पीडितश्च महता ज्वरेण बलवदुपद्रुतश्च कुशलागदंकारैरदम्यया रुधिरविस्राविण्या विषूच्या नाञ्चति किञ्चिदप्यभिरतिमाहारेषु । तेन च तदायत्तसकलप्रवृत्तयस्तेऽपि गुरवः चिन्तावग्रथिते हि चेतसि न किञ्चिचेतयन्ते । व्यवसायो वा कीदृशो न जानीमो विधेः । कथं नाम न रक्षेत् स हि भगवानात्मपदारविन्दसमाश्रितानम्बरीषमिव महाभागम् । एवंविधे हि व्यतिकरे कथं नाम मतिमन्तोऽपि महान्तमुत्सा-

हमुद्वहेयुः । दुस्त्यजो हि प्रकृतिसङ्गः प्राणिनाम् । एवं च सर्वथैव दुर्बल एवास्यां शरदि मुनेरुत्सव इति नाहमपि गन्तुमुत्सहे महीसारपुरीं सुहृद्भिरहिताम् । सर्वथाद्य सुदूरगमनमेव सुखाय सुहृदामित्यलमनुचिन्तनेन ॥

अन्योयमुदन्तोऽखिलजनप्रमोददायी विशेषतश्च सुहृदामिति विज्ञाप्यते । ये खलु प्रियसुहृदो भूतपुरे वीरराघवाचार्या इति निर्वोढारो भगवतो भाष्यकारकैङ्कर्यश्रियः तेऽप्यन्वगृह्णन्त तनयोपपालनसौभाग्येनेति इदमेव परमाशंसनीयमिह चामुत्र च सुखौपयिकं गृहिणाम् । विशेषतश्च वंशभाजाम् । किं च तेऽपि पुण्याहदिवसेऽस्मद्गुरुचरणानन्यांश्च भूसारपुरीयानामन्त्र्य अभिपूज्य द्रविणवस्त्रादिभिः स्वयमपि महान्तमानन्दमापेदिर इति ॥

---

## लेखः ७.

---

वेदोत्तमाङ्गयुगलीविपुलाम्बुराशि-
गूढार्थरत्ननिकुरुम्बभरेण धन्यान् ।
श्रीलोकदेशिकरहस्यनिगूढतत्त्व-
व्याख्यातृवर्यवरयोगिमतैकधुर्यान् ॥

ज्योतिर्निरुक्तनयसर्वकलाकलाप-
कूलंकषात्मधिषणालसितैकलीलान् ।
आजानसिद्धनिरवद्यसमस्तवस्तु-
वैराग्यभूमविवशीकृतसर्वलोकान् ॥

श्रीभाष्यकारगुरुसन्निधिनैकचित्र-
कैङ्कर्यनिर्वहणसक्तनिजान्तरङ्गान् ।
सौशील्यशान्तिकरुणादिगुणाम्बुराशीन्
श्रीशैललक्ष्मणमुनीननिशं श्रयामः ॥

अहो महदिदं दुःखनिदानम्, यदकाण्ड एव परिणमति सकलप्राणिनामेकपद एव दौर्भाग्यगरिमा । किमत्र निदानमुत तेषां कर्मैव वा । आहोस्विदिच्छैव विधेरेकान्तकुटिलस्य, अथवाऽतिनिष्ठुरस्य कलिहतकस्य साम्राज्यविलसितम्, यत्र कञ्चन न स्पृशन्ति पण्डितमपण्डितं वा रक्तं विरक्तं वा ज्ञानिनमज्ञं वा शरीरिणामुपतापाः । यदद्य गुरवोऽप्यस्माकमखिलवस्तुयाथात्म्यसंविवेचनचतुराः सकलजदौर्भाग्यगरिम्णा सुकृतसंक्षयेन सज्जनसमुदयस्य दुष्कृतपरिपाकेन वा सुकृतानाम् । किं बहुना, मन्दभाग्यतयैव मादृशामुपगताः सकलप्राणिसाधारणां गतिम् ॥

मन्ये च पूर्वलिखितया च लेखिकयावगतवृत्तान्तमतिविह्वलहृदयं प्रियसुहृदं अशनिनिर्घातेनेव कुलगिरिम् । किमत्र प्रतिकुर्मो भगवतेऽतिस्वतन्त्राय । किमस्माकमपेक्षतेऽनुज्ञाम् । स हि सर्वशक्तो निर्वर्तयति निरङ्कुशमेव तत्तत् । यदि नामैवमाश्रितजनविरुद्धमारचयति स भगवान् किंनामाश्रितजनवत्सलतयोपकृतम् । अतिमहता प्रयत्नेन लोकहितायैवोत्पाद्य महानुभावप्रकृतिं स्वयमेवापहरतः किमुचितकारितया वा ॥

मन्ये च स्वसंकल्पातिशयितगुणजातमवलोकयता नित्यविभूतिसमुचितं मन्वानेन तामेव विभूतिमुपनीतास्त इति । कस्य वा न स्पृहयेत अभिनन्दनीयवस्तुसमागमाय रसिकस्य हृदयम् ॥

परंत्वेतावदेवानन्दनीयम् । किञ्चिदिव कालमनुभावयति स्मातिमहान्तमानन्दं तत्समयेषु सरससंलापधोरणीधुरीणया गैर्वाण्या वाण्या तद्वदनकमलविनिःसृतेन विविधरहस्यार्थोपन्यासेन, कदाचिदनितरसुलभेन तत्तत्कलाकलापविनोदेन, कर्हिचित् आत्मनि श्रेयसौपयिकेनाध्यात्मचिन्तनेन, कदाचिदखिलप्राणिसमुज्जीवनसाधनेनाविरततत्तदवदातकर्मनिचयेन, कदाचिदतिप्ररूढसौहार्दभरपेशलेन परिहासापेशलेन, कदाचिदतिप्रवृद्धनिर्भरप्रेमभरोल्लसितैश्च हितार्थोपदेशैश्च समुचितैः अनवद्यया विद्यया अखिलविबुधश्लाघनीयाकृतिभिः आत्मस्तुतिभिश्च सर्वप्राणिनः ॥

नानुभवेम किल वयममुमानन्दं यत्र क्वापि विरलविरलायां विभूतावस्यामनेकदुर्गपरिगतायामुपगता जन्म । किंतु सकलमिदं सौभाग्यमेकपद एवास्तमितमस्या विभूतेरिति दुःसहो दुष्कृतपरिपाकः । सत्यमनुभवैकविनाश्यो हि प्राणिनां प्रारब्धकर्मसमुदयः । किमस्य विनोदनमतिमहतो दुःखस्यान्तरेण तत्तद्गुणचिन्तनम् । यदि परित्यज्य पापैकारब्धमिदं शरीरमचिरादुपगतां नित्यविभूतिमनुग्रहेणार्याणामनुभवेम अपूर्वमिव संदर्शनसौभाग्यम् । हन्तेदानीमतिविपुलया तद्गुणकथया । विरहविनोदोपि दवीयसा सुहृदा सुदुर्लभ एव मन्दभाग्यस्य ममेत्यास्तामिदमात्मशोचनम् । आवेदयाम्यावेदनीयम्—

बलवदस्वस्थशरीराश्च ते गुरवः शरीरसुखाय पूर्वमुपगता अपि रामस्वामिसुकृतिनः सदनं अतीते हि भौमवासरे पुनरपि निजमठमेवालंचक्रुरतिविशुद्धम् । तत्रैवात्यजन्नात्मनः कलेबरमाश्रितविरहविनोदायैव आतनुपतनमसंकुचितज्ञाना एवाभवन् । मन्ये च वि-

दितपूर्वोऽयमात्मशरीरपरित्यागसमयमिति । पूर्वमेव लिखितं खलु तैः । वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि इति । एवमपि प्रतिबोधितो मूढमतिर्नाहमकरवं समुचितमुपायमार्यशरीरधारणहेतोः । सर्वथा नाहमचिन्तयं मनसापि कदाचिदेवं भवेदिति । किन्तु तेषामप्राकृतमेव दिव्यमङ्गलविग्रहं मन्वानश्च आत्मशरीरधारणाय किञ्चिदनुचितेनापि कर्मणा धनमार्जयन्निरस्तनिखिलसंसृतिखेदः किञ्चिदपि कालमविरलमनुभवन्नार्यसहवसतिसुखमासेवमानः तत्संन्निधौ सकलरहस्यार्थजातमनुभवंश्चातिमहान्तमानन्दमुपनयेयमायुषः शेषमिति चिरनिरूढो मन्दभाग्यस्य मम मनोरथः अद्यैवं परिणतः । किमहं कुर्याम् ॥

परित्यक्तकलेबरेषु च तेष्वार्येषु सर्वेषु दुःसहदुःखभरपीडितेष्वपि यथाशक्ति दर्शयत्सु कृतज्ञतामहमहमिकया प्रधावितेषु परितो लेखावाहकेषु निवेद्यमानाश्च सर्वेप्यमुमुदन्तमार्यशरीरविपत्तिश्रवणविह्वलाश्च सर्वेपि इति कर्तव्यताविवेकविकलाश्चेन्नपुरवासिनः चातुर्वर्णकाः वाजिशकटसमुपारूढाः प्रभवः समागत्य संमन्त्र्य तत इतः सर्वदिग्विभागेभ्यश्चोपागतैः वैदिकविधिनिर्वहणकुशलैः आर्यैः दुष्करमपि यतिसमयसमुचितं यामुनार्यप्रक्रिययैवौर्ध्वदैहिकं परेद्युर्निर्वर्तयामासुः । तत्कालोचिताभिश्च दक्षिणाभिः सुवर्णशकलैश्च यथार्हमेव संमानिताः सर्वेपि समागताः । प्रतिष्ठापितश्च नृसिंहतीर्थपरिसरे पदव्याः पश्चिमे देशे अभिनवारब्धस्य महारामस्यानन्तरदक्षिणप्रदेशे स गुरूणां विमलश्चरममङ्गलविग्रहः ॥

अत्रान्तरे अनेनैव शोकभरेणाभिपीडित इवांशुमाली निजमण्डलविभेदनविगलितरुधिरपाटलराञ्चित इवातिरक्ततनुः परिभूतनि-

जमरीचिनिचयगुरुशरीराविपत्तिविह्वलः स्वयमपि स्नातुकाम इव प-श्चिमजलनिधिजठरे ममज्ज ॥

यद्यपि कृतज्ञेन जीवता प्रतिकर्तव्यमेव यथाशक्ति परेताय तथापि कथं नाम मर्षणीयोऽभिमतजनदशाविपर्ययः । कथमवलोकनीया पश्चिमा दशा । कथं नाम तत्तन्मङ्गलविधयो विधातव्याः । सर्वमिदमसहमान एवाहमेक एव तत्काले भूतपुरीमुपगतोऽस्मि । न वा चरमविग्रहसेवया परिपूत आत्मा । न वा विरचितः पश्चिमः प्रणामः । किमार्याः कुशलप्रश्नपुरःसरमालपिष्यन्ति मामवलोकयिष्यन्ति वापूर्वमर्थमिति पूर्वानुभूतसुखस्मरणविह्वलतया वा मूढतया वा नैर्घृण्येन वा, किं बहुना, उदरभरणचिन्तया दुरन्तया प्रियसुहृदिवाहमपि दवीयानिव संवृत्तः । केवलं सुकृतलेशसमुपनतेन नातिचिरसंदर्शनेनानवरतस्मर्यमाणेन चिरपरिचयप्ररूढेन संस्कारेण समक्षमिवानुभवंस्तत्समागमसुखमपनयामि कालमिति तत्रापरिहार्येऽर्थे विवेकवता सुहृदापि न शोचनीयम् ॥

विष्णवाख्ये वत्सरेऽस्मिन्मकरमुपगते राशिमह्नामधीशे-
पक्षे कृष्णे त्रयोदश्यभिधतिथियुते मूलभे भौमवारे ।
श्रीमद्वाधूलवंशोद्भवघनगुरुराड्लक्ष्मणार्यस्तभूमा
श्रीमान्श्रीशैलरामावरजगुरुवरः प्राप विष्णोः पदंतत् ॥

विषुशरदि मकरमेचकमूलभभौमत्रयोदशीतिथ्याम् ।
श्रीशैललक्ष्मणमुनिः प्रायात्स्वाचार्यचरणनलिने द्वे ॥ २ ॥

भाष्यं भाष्यकृतोऽप्यवेद्यमभवल्लोकार्यसूक्तिः परं
दुर्ज्ञेया ह्यधिकारिणेव विकलाः सर्वे प्रबन्धा भुवि ।

सूरीणामपि सूक्तयः स्वरसतो निर्वाहहीनाः परं
ज्योतिस्तन्त्रमतन्त्रमद्य सकला अक्ता गताः सत्कलाः ॥

वाधूलान्वयदोड्डयार्यकरुणासर्वस्वभूते गुरौ
श्रीमद्वेङ्कटलक्ष्मणाह्वयमुनौ वैराग्यवारांनिधौ ।
श्रीमद्भूतपुरीशसंनिधिमहाकैङ्कर्यनिर्वाहके
संप्राप्ते कमलासनस्य पुनरावृत्त्या विहीनं पदम् ॥

---

एवमस्य कवेः वाग्गुम्भनमन्यादृशमस्मिन्काव्ये श्रीकृष्णलीलानुवर्णनपरे रसिकजनसमास्वाद्यमभिवीक्ष्य मुद्रापयितुमुपक्रान्तमस्माभिरपूर्ववाग्विलासवशीकृतान्तरङ्गैः ॥

संपादकः ।

॥ श्रीः ॥

## शंभुरहस्ये

# कविकाव्यादिप्रशंसनम् ॥

---

कुमार उवाच—

कविः काव्यं च लोकेऽस्मिन्परमं श्रेयसां पदम् ।
कथितं भवता देव प्रष्टुं कौतूहलं हि मे ॥ १ ॥

कः कविः कीदृशश्चायं किं काव्यं कीदृशं च तत् ।
तयोः श्रेयस्करत्वं च कथं ब्रूहि दयानिधे ॥ २ ॥

इति पृष्टः स भगवांस्तेन प्राह स्मयन्निव ॥ ३ ॥

शंभुरुवाच—

साधु पृष्टं त्वया तात सुप्रसन्ना मतिस्तव ।
बुद्धिमानसि यत्काव्यमहिमश्रवणोद्यतः ॥ ४ ॥

श्रूयतामभिधास्यामि चिरादवहितो भव ।
नार्थवादं वदाम्येष कथंचिदपि मानद ॥ ५ ॥

गुणश्लाघ्यं सुवृत्ताढ्यमलंकारैरलंकृतम् ।
दोषहीनं ध्वनिमयं काव्यं यः कुरुते महत् ।
स एष जगतां वन्द्यः कविर्नाम महामतिः ॥ ६ ॥

यदा हि कवितां कर्तुमुद्युङ्क्तेऽयं विचक्षणः ।
तदाविष्टः सरस्वत्या तन्मयो भविता कविः ॥ ७ ॥

यद्यत्कविर्वदत्येष वचो गुणगणोज्वलम् ।
सरस्वत्या विलासोऽयं स स तात न संशयः ॥ ८ ॥

साक्षात्सरस्वती देवी कविरेष महामते ।
मर्त्यबुद्धिर्न कार्यास्मिन् यथाचार्ये तथा कवौ ॥ ९ ॥

कविः साक्षात्परं दैवं कविः साक्षात्परायणम् ।
कविरेव परा विद्या कविरेव परो गुरुः ॥ १० ॥

न राजन्यो न वैश्यश्च न च शूद्रः कविर्भवेत् ।
विप्रः शुचिः कविरिह श्रुतिरेव निदर्शनम् ॥ ११ ॥

आद्यः कविः स भगवान्कविर्ब्रह्मा पितामहः ।
कवीनामग्रगण्योऽसौ वाल्मीकिः स महामुनिः ॥ १२ ॥

कविर्व्यासो महातेजाः कविः स भृगुनन्दनः ।
श्रुतिस्मृतिमुखेनैव कवित्वेन श्रुता अमी ॥ १३ ॥

नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ।
नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ॥ १४ ॥

शान्तो दान्तो जितक्रोधस्तेजस्वी वाग्विदां वरः ।
वपुष्मान्देशकालज्ञो गुणदोषविचक्षणः ॥ १५ ॥

सुधामयैः सुवृत्ताढ्यैर्वचोभिर्जगतां मुदम् ।
यः करोति महाबुद्धिर्विजानीहीदृशं कविम् ॥ १६ ॥

एतस्य वाग्विलासो हि निर्दोषो गुणमेदुरः ।
सालंकारो ध्वनिमयश्छन्दोरूपशरीरभाक् ॥ १७ ॥

महापुरुषवृत्ताढ्यो यस्तत्काव्यं प्रचक्षते ।
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ॥ १८ ॥

उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ॥ १९ ॥

अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तगणोज्ज्वलैः ॥ २० ॥

सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् ।
काव्यं कल्पान्तरस्थायि कल्पतेऽनल्पभूतये ॥ २१ ॥

महाकाव्यमिदं तात यैः कैश्चिद्वर्णनैर्युतम् ।
सालंकृति गुणाढ्यं यदुपकाव्यं तदुच्यते ॥ २२ ॥

अदोषं गुणवत्काव्यमलंकारैरलंकृतम् ।
रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥ २३ ॥

स्मृति र्व्यतीतविषया मतिरागामिगोचरा ।
बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ २४ ॥

प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ।
द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविवर्त्म च ॥ २५ ॥

प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम् ।
न तच्छास्त्रं न तच्छिल्पं न सा विद्या न सा कला ॥

जायते यन्न काव्याङ्गमहो भारो महान्कवेः ।
कवीनां मानसं नौमि तरति प्रतिभाम्भसा ॥ २७ ॥

यत्पोतेन पयांसीव भुवनानि चतुर्दश ।
काव्यमेव महत्पुण्यं काव्यमेव महद्यशः ॥ २८ ॥

काव्यमेव परं श्रेयः काव्यादन्यन्न विद्यते ।
ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः ॥ २९ ॥

ये निबध्नन्ति काव्यानि ये च काव्येषु कीर्तिताः ।
दैवं यः स्तौति काव्येन भगवन्तं दयानिधिम् ॥ ३० ॥

किं नाम तस्य लोकेऽस्मिन् दुर्लभं स्यात्कदा नु वा ।
विद्यते भुवने काव्यान्नान्यच्छ्रेयस्करं परम् ॥ ३१ ॥

संप्राप्ताः श्रेयसां पारं पुरुषा यत्र कीर्तिताः ।
अहो भारतवर्षेऽस्मिन् दुर्लभं जन्म मानुषं ॥ ३२ ॥

विना प्राचीनसुकृतं कविता तत्र दुर्लभा ।
वर्षेऽस्मिन्भारते मर्त्या जातमात्रा भजन्ति किम् ॥ ३३ ॥

कवितां प्राक्तनं श्रेयो विना नान्यद्धि साधनम् ।
सुकृतानां परीपाकः कविता नात्र संशयः ॥ ३४ ॥

चिरादुपार्जितं पुण्यं विना शक्तिर्न जायते ।
शक्तिहीनाः कथं काव्यं तन्वते शत्रुसूदन ॥ ३५ ॥

कथंचिद्यत्नवन्तश्चेन्नृणां हासास्पदानि ते ।
न लोभान्न च मात्सर्यान्नैवान्यस्य जिगीषया ॥ ३६ ॥

न वित्तदानात्कामाद्वा कविता लभ्यते क्वचित् ।
न चाप्यनेकशास्त्रेषु श्रमाद्वापि निरन्तरम् ॥ ३७ ॥

कर्तुमेकोऽपि च श्लोकः सरसो नैव शक्यते ।
एकत्र सर्वपुण्यानि काव्यमेकत्र सद्गुणम् ॥ ३८ ॥

तथापि तानि काव्यस्य कलां नार्हन्ति षोडशीम् ।
यावत्समस्तवेदानां पठनात्सुकृतं भवेत् ॥ ३९ ॥

तावदेकेन पद्येन कृतेन लभते कविः ।
यावत्समस्तवेदान्तचिन्तनात्पुण्यमार्जयेत् ॥ ४० ॥

तावदेकेन पद्येन कृतेन लभते कविः ।
अधीत्याप्यखिलं शास्त्रं यः काव्यं नैव कल्पयेत् ॥ ४१ ॥

धिक्तस्य भाग्यहीनस्य मानुषं जन्म भूतले ।
धर्माणामुत्तमो धर्मः काव्यमेव न संशयः ॥ ४२ ॥

स धर्मो घटते यस्य स परे व्योम्नि खेलति ।
यथा श्लोकमयैः स्तोत्रैः प्रीयते भगवान् हरिः ॥ ४३ ॥

न तथा शास्त्रसाहस्रैरश्रान्तप्रस्तुतैरपि ।
श्लोकानेव सदा कुर्याच्छ्लोकैरेव हरिं स्तुयात् ॥ ४४ ॥

एवं चेदुत्तमश्लोकप्रियो भवति नान्यथा ।
श्लोककृद्यः पुमान् लोके हरिं भजति सन्ततम् ॥ ४५ ॥

अहं श्लोककृदित्येव स परे व्योम्नि मोदते ।
सर्वे वेदाः पुराणानि सेतिहासास्तथाखिलाः ॥ ४६ ॥

स्मृतयश्चापि विख्याताश्छन्दोरूपेण मानद ।
सर्वा श्लोकमयी वाणी भुवने पुण्यकृत्तमा ॥ ४७ ॥

अश्राव्यमेव सुश्लोकादन्यन्नो पुण्यसाधनम् ।
केवलं प्रस्तुतैर्वाक्यैरसारैर्न स्तुयान्नरः ॥ ४८ ॥

देवान्वा भूपतीन्वापि शृणुयान्नापि तां गिरम् ।
स्तुयाच्छ्लोकैर्हरिं नित्यं मां वापि शिखिवाहन ॥ ४९ ॥

इन्द्रादीनमरान्वापि भूपतीन्वा विचक्षणः ।
आयुरारोग्यमैश्वर्यं ज्ञानं वित्तं फलं बलम् ॥ ५० ॥

यद्यत्सुखकरं लोके तत्तत्प्राप्नोत्यभीप्सितम ।
येन केन प्रकारेण सुश्लोकान्परिकल्पयेत् ॥ ५१ ॥

काव्यं कुर्वन्बुधः श्लोकैः सर्वैः पूज्यो न संशयः ।
निर्दोषं सगुणं पद्यं सालंकारं विचक्षणः ॥ ५२ ॥

कुर्वन्नेकमपि श्रीमान् विज्ञेयः पुण्यकृत्तमः ।
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां मतिजीविनः ॥ ५३ ॥

मतिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ।
ब्राह्मणेष्वप्यधीयानास्तेषु सूक्ष्मधियो नराः ॥ ५४ ॥

तेषु च प्रतिभावन्तस्तेषु शास्त्रविचक्षणाः ।
तेषु काव्यकृतो लोके तेषां परतरो हरिः ॥ ५५ ॥

यत्साध्यं शतसाहस्रैस्तपस्तप्त्वापि वत्सरैः ।
काव्येन तदवाप्नोति देवदेवं स्तुवन्कविः ॥ ५६ ॥

हरिं स्तुवन् हि काव्येन मोक्षमाप्नोत्यसंशयम् ।
स्तुवन्निन्द्रादिदेवांश्च नलादींश्चापि भूपतीन् ॥ ५७ ॥

सर्वान् धर्मानवाप्नोति नात्र कार्या विचारणा ।
अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः ॥ ५८ ॥

सर्वदेवमयो राजा स्तव्यः कविवरैः सदा ।
यावदिन्द्रादिदेवानां स्तुत्या फलमवाप्नुयात् ॥ ५९ ॥

तावदेकस्य भूपस्य स्तोत्रेण लभते कविः ।
नाविष्णुः पृथिवीपालस्तस्य स्तोत्रेण मानद ॥ ६० ॥

प्रीणाति भगवान्साक्षात्संशयो नात्र कश्चन ।
सर्वदेवमयं साक्षाद्राजानं यो हि मानवः ॥ ६१ ॥

प्राकृतं मनुजं जानात्यन्यस्तस्मान्न मूर्खधीः ।
कविना सदृशः कोऽपि भूपानामुपकारकः ॥ ६२ ॥

न विद्यते चिरेण त्वं विचारय महामते ।
आयुष्यं कीर्तिमौज्ज्वल्यं संपत्तिं मङ्गलान्यपि ॥ ६३ ॥

मोक्षं वापि ददात्येव राज्ञे काव्येन काव्यकृत् ।
राज्यं प्राप्नोति यः श्रीमान् भुवने पुण्यकृत्तमः ॥ ६४ ॥

कवीनां संग्रहस्तस्य प्रथमो धर्म उच्यते ।
आत्मनामाङ्कितैर्दिव्यैः काव्यैस्तद्वदनोद्गतैः ॥ ६५ ॥

आनन्दोपार्जनं प्राहुर्द्वितीयं धर्ममुत्तमम् ।
तात तेषामप्रकोपस्तृतीयो धर्म उच्यते ॥ ६६ ॥

सोऽयं तुरीयो धर्मः स्यात्तन्मनोरथपूरणम् ।
कविना सदृशो राज्ञो राज्ञापि सदृशः कवेः ॥ ६७ ॥

सर्वत्र सर्वदा वत्स न परोऽस्त्युपकारकः ।
स माता स पिता राज्ञः स सखा स हि बान्धवः ॥ ६८

स गुरुर्दैवतं वापि निजनामाङ्ककाव्यकृत् ।
सर्वेषां पूजने यावान् भविता सुकृतोदयः ॥ ६९ ॥

तावान् भवति भूपस्य कवेरेकस्य पूजनात् ।
पितेव परिचर्यः स्याद्रक्षणीयः स पुत्रवत् ॥ ७० ॥

मातेव माननीयश्च लालनीयश्च मित्रवत् ।
आचार्य इव पूज्यः स्यात्सदा ध्येयश्च देववत् ॥ ७१ ॥

आत्मनामाङ्कितं काव्यं यः कविः परिकल्पयेत् ।
सुगुणाढ्यापि न श्राव्या शूद्राद्यैः कल्पिता कृतिः ॥ ७२ ॥

सुरूपाप्यपरिग्राह्या बुधैर्यवनकन्यका ।
न शूद्रकल्पितं ग्राह्यमपि काव्यं गुणैर्युतम् ॥ ७३ ॥

हविः शुनेव संस्पृष्टमपि सर्वरसान्वितम् ।
भाषान्तरकृतं काव्यं न श्राव्यं भुवि कैरपि ॥ ७४ ॥

क नु चिन्तामणिः श्रीमान् क च काचमणिर्लघुः ।
क नु गीर्वाणवाणी स्यात्कनु प्राकृतवागपि ॥ ७५ ॥

क नु दुग्धाम्बुधिः श्रीमान् क चाल्पो नीरसो ह्रदः ।
दोषदुष्टं न तच्छ्राव्यमपि गीर्वाणवाक्कृतम् ॥ ७६ ॥

शरीरं सुन्दरमपि न दृश्यं श्वित्रदूषितम् ।
सति संस्कृतकाव्येऽपि प्राकृते योऽनुरज्यति ॥ ७७ ॥

त्यक्त्वा दिव्यामृतं स्वादु स्वादयेत्स कटुष्णिकां
त्रिषु लोकेषु विख्यातं काव्यं संस्कृतवाङ्मयम् ॥ ७८ ॥

हित्वाद्यं प्राकृतैः काव्यैः कथं मर्त्यः प्रमार्जयेत् ।
दिव्यतेजोमयं भानुं जगतां चक्षुरुत्तमम् ॥ ७९ ॥

हित्वान्धतमसं को नु खद्योतेनैव वारयेत् ।
सालंकारैः सुमधुरैः श्लोकैः कविवरोदितैः ॥ ८० ॥

प्रीयते भगवानेव किमन्ये मनुजोत्तमाः ।
वाक्यैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥ ८१ ॥

नारुन्तुदः स्यादार्तो वा न परद्रोहकर्मधीः ।
ययास्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥ ८२ ॥

प्रियं वदति यो नित्यं नृणां कर्णरसायनम् ।
इह वान्यत्र वा तस्य न कदापि क्षतिर्भवेत् ॥ ८३ ॥

यः स्तवीत्यनपभ्रष्टैः सुशब्दैः शास्त्रशिक्षितैः ।
विधाय मधुरान् श्लोकान्नान्यस्तस्मात्सुहृत्तमः ॥ ८४ ॥

य एतदभ्यसूयन्ति काव्यं काव्या विचक्षणाः ।
न तान् संकीर्तयेत्काव्ये प्राणैः कण्ठगतैरपि ॥ ८५ ॥

स्वनाम कीर्तयेत्काव्ये कविः काव्यविचक्षणः ।
सदा प्रार्थयमानानां नामान्यपि च कीर्तयेत् ॥ ८६ ॥

आयुरारोग्यमैश्वर्यं ज्ञानं पुत्रं प्रियं तथा ।
सर्वं काव्यकृतो लोके लभन्ते काव्यकीर्तिताः ॥ ७७ ॥

तटाकं धननिक्षेपो ब्रह्मस्थापनमेव च ।
वनं देवालयः काव्यं सुतश्च स्वर्गदा नृणां ॥ ८८ ॥

मुक्तिदाः सप्तसंताना महापातकिनामपि ।
एतेष्वप्युत्तमां काव्यसंततिं विद्धि मानद ॥ ८९ ॥

कालेन हि खिलाः सर्वे काव्यमाकल्पमेधते ।
दिवमप्युपयातास्ते ह्याकल्पं कीर्तिविग्रहाः ॥ ९० ॥

वसन्त्येव जगत्यस्मिन् कवयः काव्यकीर्तिताः ।
गवां पश्चाद्द्विजस्यांघ्रिर्योगिनां हृत्कवेर्वचः ॥ ९१ ॥

परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनाम् ।
काव्येष्वङ्कितनामानः सेव्यन्ते दैवतैरपि ॥ ९२ ॥

महानदीप्रविष्टानि रथ्याम्बूनीव पावनाः ।
यथा गङ्गाम्बुनि स्नानाद्धूतपाप्मा भवेन्नरः ॥ ९३ ॥

निजनामाङ्कमात्रेण विपाप्मा भविता तथा ।
येषां काव्येषु कविभिर्लिख्यन्ते यादृशा गुणाः ॥ ९४ ॥

तत्तल्लोकेषु लिख्यन्ते तद्गुणास्तं सुरैरपि ।
काव्येष्वङ्कितनामानो ये नरा जगतीतले ॥ ९५ ॥

तेषां स्वल्पमपि श्रेयो भूयिष्ठं समयाद्भवेत् ।
अनल्पं यदि चाश्रेयः क्रमाद्भवति तत्कृतम् ॥ ९६ ॥

दत्ते महत्तरं पुण्यं काव्यं पारायणान्नृणाम् ।
कर्णानन्दकरं श्लाघ्यं हृद्यं मधुरमेव च ॥ ९७ ॥

सभासु विदुषां क्वापि न कस्याप्यवमानकृत ।
यस्तदेतदुपादत्ते तस्मात्पुण्यतमो न हि ॥ ९८ ॥

काव्येषु सुगुणत्वेन कीर्त्यतेऽसौ यदा यदा ।
तदा तदा नृपस्यास्य वर्धन्ते सुकृतान्यलम् ॥ ९९ ॥

यदा यदा हि काव्येषु दुर्भगत्वेन कीर्त्यते ।
तदा तदा महान्तोऽस्य वर्धन्ते पापराशयः ॥ १०० ॥

तस्मात्सर्वप्रयत्नेन काव्येषु मतिमान्नरः ।
पूजयित्वा कविं साधु निजनाम विलेखयेत् ॥ १०१ ॥

एतद्धि परमं धर्ममेतद्धि परमं यशः ।
एतदेव परं श्रेयो नात्र कार्या विचारणा ॥ १०२ ॥

भगवान् स हरिः साक्षादहं चापि पितामहः ।
इन्द्रादयः सुराः सर्वे हरिश्चन्द्रादयो नृपाः ॥ १०३ ॥

ऋषयः पितरः साध्या नद्यो जलधयस्तथा ।
सर्वेऽपि कविताभूम्ना ख्याता नान्येन केन चित् ॥ १०४ ॥

ईदृशं काव्यरचनाविचक्षणमतिं कविम् ।
देवा अप्यभिनन्दन्ति श्रेयोऽस्मै ददते क्षणात् ॥ १०५ ॥

पूजयेन्निजनामाङ्ककाव्यकल्पनदाक्षिणम् ।
कविं राजा नरोऽन्यो वा श्रेयस्कामो महौजसम् ॥ १०६ ॥

महोपकारको लोके कविरेव न संशयः ।
यस्य वाचं समाश्रित्य कीर्तिमन्तो नराश्चिरात् ॥ १०७ ॥

गुणोदग्रां कवेर्वाणीं विना प्रख्यातिकारणम् ।
नान्यत्पश्यामि लोकेऽस्मिन् ब्रह्मणोऽपि परात्मनः ॥ १०८ ॥

ख्यातिं स्वर्गफलामाहुः सर्वे धर्मविदो जनाः ।
तद्यत्नेन कवेर्वाचा पद्यमख्या नृपोत्तमः ॥ १०९ ॥

विपुलां ख्यातिमन्विच्छेदिष्टां ख्यात्या गतिं भजेत् ।
स्वशक्तिं समतिक्रम्य पूजयेत्कविमादरात् ॥ ११० ॥

रत्नैराभरणैर्वस्त्रैरन्यैरपि धरापतिः ।
साक्षात्सरस्वतीमूर्तिं कविं यः पूजयेन्नृपः ॥ १११ ॥

आशासते सुरास्तस्मै कल्याणं नात्र संशयः ।
उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ॥ ११२ ॥

सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ।
कवीन्द्रस्त्वयुतं मातॄन्निजनामाङ्ककाव्यकृत् ॥ ११३ ॥

अतिशेते यो ददाति यशः कायमनश्वरम् ।
यः कविर्निजनामाङ्कं काव्यं कल्पयते महत् ॥ ११४ ॥

तद्वंश्या अपि संमान्या निर्गुणा अपि मानद ।
अङ्कुशेनैव संरक्ष्या यावदात्मबलं नृभिः ॥ ११५ ॥

यथा यथा कवेर्वंश्या रक्ष्यन्ते मनुजाधिपैः ।
तथा तथा स्ववंशोऽपि वर्धते भुवि भूभृताम् ॥ ११६ ॥

स्वनामकलितश्लोकवक्तारं यो न तोषयेत् ।
तस्य सर्वं पुरापुण्यमायुषा सह नश्यति ॥ ११७ ॥

वंशोऽपि तस्य न चिरं वर्धते शत्रुसूदन ।
तस्माद्यत्नेन तं नित्यं पूजयेदीप्सितार्पणैः ॥ ११८ ॥

आर्तोऽपि भूपतिर्जातु कवीन्द्रान्न प्रकोपयेत् ।
महतां कोपनात्तेषां तस्य श्रीर्नाभिवर्धते ॥ ११९ ॥

ऋणत्रयेऽपाकृतेऽपि कवीनामनपाकृते ।
ऋणी साक्षादपि ब्रह्मा मुक्तबन्धो भवेत्कथम् ॥ १२० ॥

शृणुयादादरादात्मनामाङ्कितमुदारधीः ।
काव्यं कविवराख्यातमर्चयन् लभते यशः ॥ १२१ ॥

इदं रहस्यं परमं न चाशुश्रूषवे वदेत् ।
न काव्यकृतवैराय नास्तिकाय न जात्वपि ॥ १२२ ॥

इत्येतत्कविमाहात्म्यं संक्षेपेण प्रकीर्तितम् ।
एतेषां को गुणान्वक्तुं समर्थो भुवि मानवः ॥ १२३ ॥

कुमार नार्थवादोऽयं स्वल्पमेव प्रदर्शितम् ।
कथयाम्येव तत्सर्वं किमन्यच्छ्रोतुमिच्छसि ॥ १२४ ॥

इति श्रीशंभुरहस्ये कविकाव्यप्रशंसनं नाम
चतुष्षष्ट्युत्तरद्विशततमोऽध्यायः ॥

---

## अथ काव्योपक्रमविचारः ॥

---

कुमार उवाच—

कथितं भवता देव कविकाव्यप्रशंसनं ।
श्रुतं भूयोऽनुपृच्छामि संशयं छेत्तुमर्हसि ॥ १ ॥

काव्यस्योपक्रमे कालः को देशश्च सुखप्रदः ।
कथं चोपक्रमेदेतत् कथं वापि समापयेत् ॥ २ ॥

उपक्रमे च के वर्णाः सुखदाः के गणास्तथा ।
के शब्दाश्च महादेव विस्तराद्ब्रूहि मे विभो ॥ ३ ॥

शंभुरुवाच—

शृणु पुत्रक वक्ष्यामि काव्यस्योपक्रमो यथा ।
समाप्तिश्च विधानं च तत्सर्वं च वदामि ते ॥ ४ ॥

काव्यस्योपक्रमे श्रीमन् शुभदं ह्युत्तरायणम् ।
याम्यं त्वशुभदं प्रोक्तं कविकाव्येशयोरपि ॥ ५ ॥

मासाः शुभाश्चैत्रमाघवैशाखाः फाल्गुनस्तथा ।
श्रावणज्येष्ठमार्गोर्जाः शुभा याम्यायनेऽपि च ॥ ६ ॥

भाद्राषाढौ मीनचैत्रकर्कटश्रावणास्तथा ।
अधिमासश्च पौषश्च निन्द्याः काव्यविधौ सदा ॥ ७ ॥

शुक्लपक्षः शुभः प्रोक्तः कृष्णपक्षस्तु मध्यमः ।
जया भद्राश्च तिथयः पूर्णाश्चामां विना शुभाः ॥ ८ ॥

पक्षद्वये विघ्नकरी सप्तमी च त्रयोदशी ।
क्रूरवाराः परित्याज्याः सौम्यवाराः सुखावहाः ॥ ९ ॥

काव्यारम्भे धातृषट्कं वैष्णवत्रयमश्विनी ।
पूर्वोत्तरात्रयं मित्रं मूलं हस्तत्रयं शुभम् ॥ १० ॥

दुष्टयोगाः परित्याज्याः शुभयोगाः शुभावहाः ।
काव्योपक्रमणे ग्राह्यं करणं शुभमेव हि ॥ ११ ॥

दुर्मुहूर्तव्यतीपातावमादीन्वर्जयेत्सुधीः ।
स्वस्य काव्येश्वरस्यापि द्वादशाष्टमजन्मभम् ॥ १२ ॥

विसृज्य सुशुभे लग्ने कविः काव्यमुपक्रमेत् ।
पापास्त्रिषष्ठायगताः सौम्याः केन्द्रत्रिकोणगाः ॥ १३ ॥

यस्य तस्मिन् विलग्ने स्यात्काव्योपक्रमणाच्छुभम् ।
उपक्रमेच्चरे लग्ने स्थिरलग्ने समापयेत् ॥ १४ ॥

लग्नस्याष्टमशुद्धिः स्यादारम्भे नियमादिह ।
बुधस्य लग्नहोरांशवारदृष्ट्यादयः शुभाः ॥ १५ ॥

काव्योपक्रमणेऽत्यन्तं तच्च साङ्गं भवेज्जवात् ।
दैत्याचार्यस्य सौम्यस्याप्यस्ते नोपक्रमः क्वचित् ॥ १६ ॥

समाप्तिश्च महाबाहो काव्यस्यावेहि तत्त्वतः ।
एवं प्राह पुरा व्यासः काव्यकालस्य निर्णयम् ॥ १७ ॥

बृहस्पतिर्मनःशुद्धौ सर्वं कालं शुभं जगौ ।
दिव्यक्षेत्रे नदीतीरे देवदेवस्य संनिधौ ॥ १८ ॥

प्रागुत्तरमुखः श्रीमान् काव्योपक्रममाचरेत् ।
वर्णानां च फलं वच्मि शृणु पुत्रक सादरं ॥ १९ ॥

काव्यारम्भे प्रयोज्यानां यथार्हं मुनिसंमतम् ।
समीरहुतभुग्धात्रीजलव्योमगुणान्विताः ॥ २० ॥

पञ्च पञ्च विभागेन दश वर्गास्ततः परम् ।
शुभकान्तिमृतिभ्रान्तिभीतिदा भूतजाः क्रमात् ॥ २१ ॥

निषेधावाचकोऽकारश्चाकारश्चापि सौख्यदः ।
इभ्यामूभ्यां च सुक्षेममृलृवर्णैर्यशः क्षयः ॥ २२ ॥

एकारः कामदः प्रोक्तः ऐकारो वाक्प्रदायकः ।
ओकारो मोक्षदः प्रोक्तः औकारः श्रीप्रदायकः ॥ २३ ॥

कवर्गाद्याः चतुर्वर्णाः श्रीदाश्चान्त्यस्त्वकीर्तिदः ।
चधौ सुखप्रदो जस्तु मित्रदो झोऽशुभप्रदः ॥ २४ ॥

ञो भयं च ठठौ खेदं डः शुभं चाशुभं च ढः ।
णो भ्रमं तः सुखं दत्ते कलहं थो दधौ सुखम् ॥ २५ ॥

अनिषेधार्थको नस्तु मुदं सुखभये पफौ ।
बो मृतिं भो महाक्लेशं मो दुःखं यः श्रियं तथा ॥ २६ ॥

रो दाहं लो व्यथां वस्तु वागारोग्यायुरुत्तमम् ।
शः सुखं षोऽसुखं कुर्यात्सः सुखं संज्वरं हलौ ॥ २७ ॥

प्रयच्छति क्ष ऐश्वर्यं काव्यादौ निहिता अमी ।
शुभदोऽप्यशुभो वर्णः संयुक्तः क्षं विनाखिलः ॥ २८ ॥

वाय्वग्निभूचन्द्रदिवाकराश्च
क्रमेण वर्गाक्षरदेवताः स्युः ।
आवर्णवर्गादियषैत्समीरा
इदेद्द्वितीये दनला रसौ च ॥ २९ ॥

भौमा उवर्णो हल ओत्तृतीय-
श्चान्द्रा ऋवर्णो वल औच्चतुर्थः ।
सौरास्तकारोत्तमशास्तथैवं
पञ्चाशदर्णा ऋषिभिः सुगीताः ॥ ३० ॥

श्रियं विवाहं स्थैर्यं च लक्ष्मीं तेजः क्रमादमी ।
वर्णा दिशन्ति काव्यादौ प्रयुक्ताः कविनाथयोः ॥ ३१ ॥

इत्याह विबुधाचार्यो यथेष्टं च विचार्यताम् ।
एवं विमृश्य कविना काव्यारम्भे प्रयुज्यताम् ॥ ३२ ॥

कविनायककाव्यानां शुभो वर्णः शुभप्रदः ।
अक्षरे परिशुद्धे च नायको भूतिमृच्छति ॥ ३३ ॥

अन्यथा दोषबाहुल्यमुभयोः स्यान्न संशयः ।
न्यस्ताः काव्यमुखे वर्णास्तत्तद्दैवतमात्रया ॥ ३४ ॥

कर्तुः कारयितुः श्रोतुः कल्पयन्ति शुभाशुभम् ।
देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ॥ ३५ ॥

ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ।
श्रीकारः शुभदः प्रोक्तः श्रीकारः सर्वसौख्यदः ॥ ३६ ॥

श्रीकारः संपदं दत्ते श्रीकारोऽशुभनाशनः ।
श्रीकारः पुत्रपौत्रार्थदायी स्यान्नात्र संशयः ॥ ३७ ॥

काव्यारम्भे प्रयुक्तश्चेच्छ्रीकारो राज्यवृद्धिदः ।
एवं श्रीवाचकाः शब्दाः सर्वे सर्वशुभप्रदाः ॥ ३८ ॥

गणवर्णविचारोऽत्र न कर्तव्यः कदाचन[*] ।
सर्वश्रेयस्करे लक्ष्म्या नामधेये महत्तरे ॥ ३९ ॥

अशुभस्य कथा वापि का नाम त्वं विचारय ।
ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ ४० ॥

कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ।
अव्ययान्यव्ययां लक्ष्मीं प्रयुक्तानि वितन्वते ॥ ४१ ॥

दूर्वाक्षतफलाम्भोजमुखशब्दाश्च सौख्यदाः ।
अथातो गणशुद्धिं च प्रवक्ष्यामि यथा क्रमम् ॥ ४२ ॥

म्यरस्तजन्मसंज्ञास्तु गणा अष्ट स्मृता बुधैः ।
बुधग्रहो भूमिदैवो मगणस्त्रिगुरुः श्रियम् ॥ ४३ ॥

विद्युच्छ्रीस्तनुते नित्यं सगणेन युतोऽपि च ।
यगणोऽब्देवताशाली शुभ्रः शुक्रग्रहः स्मृतः ॥ ४४ ॥

सोऽयमादिलघुर्धान्यधनसंपत्प्रदो भवेत् ।
तगणेन युतः स्याच्चेद्विषमिश्रान्नवत्कवेः ॥ ४५ ॥

नेतुश्चाप्यशुभं दत्ते नात्र कार्या विचारणा ।
स्वर्णश्रीर्मध्यमलघू रगणो वह्निदैवतः ॥ ४६ ॥

कुजग्रहोऽशुभं दत्ते शुभं तु बगणोत्तरः ।
शनिग्रहो नीलवर्णः सगणो वायुदैवतः ॥ ४७ ॥

सुदूरगमनं दत्तेऽन्त्यगुरुः कविनाथयोः ।
रगणोत्तरतां प्राप्तो यदि क्रूराग्निभीतिदः ॥ ४८ ॥

तगणोन्त्यगुरुर्लक्ष्मीप्रदस्त्वाकाशदैवतः ।
गुरुग्रहोऽसितच्छायः केचित्तमशुभं विदुः ॥ ४९ ॥

जगणो मध्यमगुरू रोगदोऽर्कग्रहोऽरुणः ।
आदित्यदैवतः सोऽयं तगणेन युतः शुभः ॥ ५० ॥

यशःप्रदः स्याद्भगणः सितांशुग्रहदैवतः ।
स्फटिकाभो मुखगुरुः कृष्णयोगात्तु भीतिदः ॥ ५१ ॥

सर्वार्थान्नगणो दद्यात्त्रिलघुर्यज्ञदैवतः ।
हरितालसमच्छायो गणानामुत्तमोत्तमः ॥ ५२ ॥

अस्य तु ग्रहहीनत्वात्कश्चिच्छत्रगणो न हि ।
देवता शुभदा यस्य तस्य स्यात्सौम्यता सदा ॥ ५३ ॥

क्रूरा च देवता यस्य तस्य क्रौर्यं गणस्य हि ।
गणकाव्येशयोर्मैत्रीं विचार्योपक्रमेत्कृतिम् ॥ ५४ ॥

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ।
पीतौ बुधसुराचार्यौ कृष्णः स्याद्धि शनैश्चरः ॥ ५५ ॥

न ग्रहो न च नक्षत्रं न राशिर्न च देवता ।
नानर्हाक्षरचिन्तापि प्रयोगे नगणस्य तु ॥ ५६ ॥

नगणादौ प्रयुक्तस्तु दुष्टवर्णः शुभो भवेत् ।
अयः काञ्चनतामेति स्पर्शाद्धि स्पर्शवेधिनः ॥ ५७ ॥

गणानां तारका ज्येष्ठा पूर्वाषाढा च कृत्तिका ।
स्वाती पुष्योत्तरे चैव मृगमूर्धा च रोहिणी ॥ ५८ ॥

व्यस्तजभ्नसज्ञानां सर्वेषां च यथाक्रमम् ।
वृश्चिकश्च धनुर्मेषौ तुलाकर्कटकौ हरिः ॥ ५९ ॥

वृषभश्चेति विज्ञेया गणानां राशयः क्रमात् ।
नक्षत्रराशियोगस्तु विवाहे यादृशो भवेत् ॥ ६० ॥

कविकाव्येशकाव्यानां तादृशः शुभकृद्भवेत् ।
मङ्गलार्थाभिधाने वा देवनामाङ्कनेऽपि वा ॥ ६१ ॥

गणो न दूष्यो वर्णश्च देवताधिष्ठिताऽभवत् ॥ ६२ ॥

इति श्रीशंभुरहस्ये काव्योपक्रमविचारो नाम
पञ्चषष्ट्युत्तरद्विशततमोऽध्यायः ॥

---

## काव्यादानप्रशंसा ॥

---

शंभुरुवाच—

एवं विचार्य सुशुभे समये शुभवासरे ।
सुमुहूर्ते शुभगणं शुभवर्णं शुभोत्तरम् ॥ १ ॥

आदौ प्रयुज्य स्वाभीष्टदैवतं विनुयात्कविः ।
हरिं श्रियं च भूमिं च ध्यायेदादौ यथाविधि ॥ २ ॥

सर्वविघ्नोपशान्त्यर्थं विष्वक्सेनं गणाधिपम् ।
परिपूज्य यथान्यायं पद्यारम्भं समाचरेत् ॥ ३ ॥

नत्वा च देवताचार्यान् पद्यैरादौ ततः परम् ।
स्ववंशवर्णनं कुर्यात्कविरिष्टानुरूपतः ॥ ४ ॥

सत्कविस्तवनं कुर्यात् कुर्यात्कुकविनिन्दनम् ।
कीर्तयेद्ग्रन्थनामाथ कथारम्भं समाचरेत् ॥ ५ ॥

सर्गाश्वासोल्लासगुच्छस्तबकाद्यान् पदे पदे ।
विच्छेदान् कल्पयेत्काव्ये पञ्च सप्त नवापि वा ॥ ६ ॥

दश द्वादश वा दीर्घान् यावदिष्टमथापि वा ।
काव्यं यथाक्रमं कृत्वा मङ्गलान्तं समापयेत् ॥ ७ ॥

शुभलग्ने शुभे वारे शुभेऽह्नि शुभालिप्सया ।
उपक्रमसमाप्त्योश्च पूर्वाह्णः स्याच्छुभावहः ॥ ८ ॥

सायाह्नो मध्यमः प्रोक्तो नापराह्णः कदाचन ।
काव्यारम्भसमाप्त्योश्च लग्नाद्धोरा विशिष्यते ॥ ९ ॥

सौम्यहोराः शुभाः प्रोक्ताः बुधहोरा ह्युपक्रमे ।
वेगेन ग्रन्थरचना हेतुरित्यङ्गिरा जगौ ॥ १० ॥

उद्दिश्य स्वेष्टदैवं चेत्स्वयं कल्पितवान् कृतिम् ।
तदा शुभदिने श्रीमान् ब्राह्मणान् भोजयेत्कविः ॥ ११ ॥

संनिधौ देवदेवस्य पठित्वा सकलां कृतिम् ।
पूजयित्वा च विदुषस्तदाशीः प्रतिगृह्य च ॥ १२ ॥

दक्षिणाभिश्च संतोष्य विरचय्य महोत्सवम् ।
अर्चयेद्देवपादाब्जे प्रबन्धं कविसत्तमः ॥ १३ ॥

यदि कुर्याच्च राजाज्ञां पुरस्कृत्य महाकविः ।
तस्य नाम्नाङ्कितं काव्यं तदाचार्यं विधिः स्मृतः ॥ १४ ॥

राजा वा राजमात्रो वा धनिको वा विचक्षणः ।
यः कविं कारयेत्काव्यं स तु संहृष्टमानसः ॥ १५ ॥

आहूय सुकविं श्लक्ष्णं शान्तं दान्तं महामतिम् ।
पुराणकाव्यवेत्तारं छन्दःशास्त्रविचक्षणम् ॥ १६ ॥

अलंकारविदं धीरं पूजयित्वा यथाविधि ।
स्वाभीष्टग्रन्थरचनां कुर्विति प्रार्थयेच्च तम् ॥ १७ ॥

ताम्बूलकुसुमादीनि दक्षिणां च प्रदापयेत् ।
तेन चारभ्य सल्लग्ने शुभग्रन्थे समापिते ॥ १८ ॥

अविलम्बेन राजायं ग्रन्थसंग्रहमाचरेत् ।
ग्रहीतुं न विलम्बेत काव्ये तु कविना कृते ॥ १९ ॥

अविलम्बः श्रियो मूलमविलम्बः परं सुखम् ।
आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ॥ २० ॥

क्षिप्रमक्रियमाणस्य कालः पिबति संपदः ।
स्वपुरालंकृतिं सम्यक् कारयित्वा नृपोत्तमः ॥ २१ ॥

सभामपि परिष्कृत्य यथार्हासनशालिनीम् ।
आहूय विदुषस्तत्र काव्यलक्षणशिक्षितान् ॥ २२ ॥

विमत्सरान् सहृदयान् गुणैकग्रहणोन्मुखान् ।
दयालून् सुमुखान् युक्तान् संनिषाद्यासनेषु तान् ॥ २३ ॥

स्वयं पूर्वमुखो राजा ह्युत्तराभिमुखोऽपि वा ।
तथामुखं कविं तत्र निषाद्य परमासने ॥ २४ ॥

पूजयित्वाक्षतैर्माल्यैर्वस्त्रैराभरणैरपि ।
प्राञ्जलिः सभिकैः सार्धं शृणुयादवधानतः ॥ २५ ॥

नान्यत्र कर्णौ चक्षुर्वा कुर्यात्कविमुखं विना ।
गुरौ शिष्यस्य या वृत्तिस्तां वृत्तिं संश्रयेन्नृपः ॥ २६ ॥

एवं यथाविधि श्रुत्वा नित्यं सभ्यैः सहाधिपः ।
कृतेः समाप्तिदिवसे कारयेत महोत्सवम् ॥ २७ ॥

कवेस्तु मङ्गलस्नानं कारयित्वा यथाक्रमम् ।
स्वयं च मङ्गलस्नातो वस्त्रमाल्यादिभूषितः ॥ २८ ॥

विद्वद्भिः सहितः सर्वैस्तूर्यघोषपुरःसरम् ।
कवीन्द्रभवनं गत्वा नत्वाचार्यमिव स्वयम् ॥ २९ ॥

प्रार्थयित्वाथ तं रम्यशिबिकागजघोटकान् ।
आरोप्य सार्धं ग्रन्थेन भेरीनादपुरःसरम ॥ ३० ॥

पुरं प्रदक्षिणीकृत्य सभां प्राप्याखिलैः सह ।
तत्रोत्तुङ्गासने रम्ये चोपवेश्य महाकविम् ॥ ३१ ॥

श्रुत्वा ग्रन्थं समग्रं तु तत्पादाववनिज्य च ।
गन्धैर्माल्यैश्च धूपैश्च दीपैश्चापि यथाक्रमम् ॥ ३१ ॥

पूजयित्वाग्रतः स्थित्वा ग्रन्थनाथो महाकवेः ।
मुक्ताहाराङ्गुलीयादि दिव्याभरणमुत्तमम् ॥ ३३ ॥

वासांसि च विचित्राणि सुवर्णमणिदक्षिणाः ।
ताम्बूलं च समर्प्यास्य ग्रामान् दद्यादमत्सरः ॥ ३४ ॥

यावती यस्य शक्तिः स्यात् तावद्द्यादुदारधीः ।
न च लोभं प्रकुर्वीत दातुं सुकवये क्वचित् ॥ ३५ ॥

रामो रामायणं श्रुत्वा स्वपुत्राभ्यामुदारधीः ।
द्वात्रिंशत्कोटिसंख्यातं सुवर्णं रत्नसंयुतम् ॥ ३६ ॥

पुरा वाल्मीकये प्रादात् शिष्यद्वारेति नः श्रुतम् ।
श्रीवैशंपायनाच्छ्रुत्वा भारताख्यानमुत्तमम् ॥ ३७ ॥

ग्रामाननेकान् रत्नानि प्रदाय जनमेजयः ।
स्वर्णाभिषेकं कृतवानास्थाने मुनिमेदुरे ॥ ३८ ॥

तेन तुष्टोऽभवद्व्यासः कवीनामुत्तमः कविः ।
एवमन्ये नृपाः पूर्वं पुण्यश्लोका महाकवीन् ॥ ३९ ॥

अतिशक्ति स्वनामाङ्ककाव्यकर्तॄनतोषयन् ।
स्वोत्सवं तं विजानीयात् राजा काव्यमहोत्सवम् ॥ ४० ॥

अनश्वरो यशःकायो राज्ञां ग्रन्थ उदाहृतः ।
स्वशक्त्यधिकमेतस्य जीविकां परिकल्पयेत् ॥ ४१ ॥

महोपकारकर्तारं कविं यत्नेन पूजयेत् ।
ब्राह्मणान् भोजयेत्पश्चात् पुरो वाभीष्टसिद्धये ॥ ४२ ॥

दक्षिणामाल्यताम्बूलैरर्चयेत्तान् यथाविधि ।
आशिषो वाचयित्वा तु तान्सर्वान् प्रणमेत्ततः ॥ ४३ ॥

साष्टाङ्गप्रणतिं कुर्यान्निर्लज्जः कविसंनिधौ ।
न च शूद्रकृतं काव्यमाददीत नृपोत्तमः ॥ ४४ ॥

यस्मादयं न पूजार्हः सभायां विद्वदन्तिके ।
यथा विवाहोत्सवः स्यात् तथा काव्योत्सवं चरेत् ॥ ४५ ॥

अश्वमेधसहस्राणि वाजपेयशतानि च ।
निजनामाङ्ककाव्यस्य कलां नार्हन्ति षोडशीम् ॥ ४६ ॥

सर्वसंततयो यस्मात् काव्यसंतानतो भुवि ।
ख्यातिं लभन्ते तस्माच्च काव्यात्किमधिकं भवेत् ॥ ४७ ॥

ये पुराणेतिहासेषु प्रसिद्धास्तान् विना नृपाः ।
कति नासन् युगे पुण्या विना ग्रन्थान् क तेऽधुना ॥ ४८ ॥

नामापि तेषां नाश्रावि तच्चरित्रं तु दूरतः ।
कोटियज्ञान् प्रकुर्याद्वा मेरुं वाप्युद्धरेन्नृपः ॥ ४९ ॥

निजनामाङ्ककाव्येन विना न ख्यातिमर्हति ।
काव्येषु निजनामाङ्कहीना ये भुवि नायकाः ॥ ५० ॥

तत्कालमपि तद्देशं तेषां किंचिन्नशो भवेत् ।
ये पुनर्नव्यकाव्येषु कीर्तिताः कविभिर्नृपाः ॥ ५१ ॥

तेषामाचन्द्रतारार्कं यशः सर्वत्र भासते ।
श्रीमानपि महात्मापि धीमानपि धरापतिः ॥ ५२ ॥

न कीर्त्यते सुकाव्ये यो धिक् तज्जन्म धरातले ।
त्रिर्ब्रवीमि न संदेहो विना काव्यं कविप्रभू ॥ ५३ ॥

विख्यातिं न लभेयातां प्राप्नुयातां न सद्गतिम् ।
अतः सर्वप्रयत्नेन श्रेयस्कामो नरोत्तमः ॥ ५४ ॥

कारयित्वोत्तमं काव्यं संपूज्य च महाकविम् ।
आदद्यात्तन्महानर्घं धन्यः स्यान्नात्र संशयः ॥ ५५ ॥

इत्येतद्धि मयाख्यातं काव्यादानस्य वैभवम् ।
कच्चिच्छ्रुतं सावधानं किमन्यच्छ्रोतुमिच्छसि ॥ ५६ ॥

इति श्रीशंभुरहस्ये काव्यादानप्रशंसा नाम
षट्षष्ट्युत्तरद्विशततमोऽध्यायः ॥

# प्राकृतादिभाषाप्रशंसा ॥

---

कुमार उवाच—

श्रुतं काव्यस्य माहात्म्यं त्वत्तोऽखिलजगद्गुरो ।
अत्र मां संशयः कश्चिद्बाधते तं नुद प्रभो ॥ १ ॥

भाषान्तरकृतं काव्यं न श्राव्यमवदद्भवान् ।
अनिन्दत्प्राकृतीं भाषां प्राशंसत्सांस्कृतीमपि ॥ २ ॥

व्यामिश्रकाणां जीवातुर्भारत्या बालभाषितम् ।
प्राकृती ख्यायते भाषा सा कथं निन्दनास्पदम् ॥ ३ ॥

यद्येषापि विनिन्द्या स्याद्विदुषां हृदयंगमा ।
व्यामिश्रकाणां काव्यानां मन्ये सत्तैव दुर्लभा ॥ ४ ॥

यद्येषा गर्हितैव स्यान्नादद्याद्राघवस्त्विमां ।
वसिष्ठविश्वामित्राभ्यां यः शास्त्रेषु सुशिक्षितः ॥ ५ ॥

श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ।
इति प्राचेतसेनैष ह्यादिकाव्ये प्रशस्यते ॥ ६ ॥

यदि गर्ह्यैव सा भाषा तदभिज्ञानवैभवम् ।
रामस्य न प्रशंसेत्स वाल्मीकिर्भगवान् कविः ॥ ७ ॥

यमेष भगवान् काव्ये न विगर्ह्यकथारुचिः ।
इत्याह स प्रशंसेत्किं तस्य व्यामिश्रकज्ञताम् ॥ ८ ॥

तदिमं संशयाम्भोधिं तद्वचःश्रवणोर्मिलम् ।
यथा तरेयं सर्वज्ञ तथा कुरु कृपां मयि ॥ ९ ॥

शंभुरुवाच—

श्रेयान् वत्सैष ते प्रश्नो यः कवीनां रसायनम ।
यद्विवक्षुरहं तात तदेवापृष्टवानसि ॥ १० ॥

न मया प्राकृती भाषा निन्दिता साधुसंमता ।
या वाग्देवीमुखाम्भोजनिःसृतं मुग्धभाषितम् ॥ ११ ॥

वचः प्रियं भगवतः प्राकृतं संस्कृतादपि ।
प्रौढोक्तेरपि हृद्यं हि शिशूनां कलभाषितम् ॥ १२ ॥

को विनिन्देदिमां भाषां भारतीमुग्धभाषितम् ।
यस्याः प्रचेतसः पुत्रो व्याकर्ता भगवानृषिः ॥ १३ ॥

गार्ग्यगालवशाकल्यपाणिन्याद्या महर्षयः ।
शब्दराशेः संस्कृतस्य व्याकर्तारो महत्तमाः ॥ १४ ॥

तथैव प्राकृतादीनां षड्भाषाणां महामुनिः ।
आदिकाव्यकृदाचार्यो व्याकर्ता लोकविश्रुतः ॥ १५ ॥

यथैव रामचरितं संस्कृतं तेन निर्मितम् ।
तथैव प्राकृतेनापि निर्मितं हि सतां मुदे ॥ १६ ॥

यावत्संस्कृतभाषायाः प्राशस्त्यं भुवि विद्यते ।
तावत्प्राकृतभाषाया अपि प्राशस्त्यमिष्यते ॥ १७ ॥

शाकल्यपाणिन्यादीनां वाल्मीकेश्च यथा मुनेः ।
न तारतम्यं तद्वत्स्यात् तद्व्याकरणयोरपि ॥ १८ ॥

पाणिन्याद्यैः शिक्षितत्वात्सांस्कृती स्याद्यथोत्तमा ।
प्राचेतसव्याकृतत्वात्प्राकृत्यपि तथोत्तमा ॥ १९ ॥

यन्मया प्राकृतं गर्ह्यमुक्तं तत्तु न निन्दितुम् ।
किं तु सर्वबुधश्लाघ्यं संस्कृतं तत्प्रशंसितुम् ॥ २० ॥

न तावता प्राकृती सा भाषा दूष्या कदाचन ।
वाल्मीकेर्वचसां देव्या रामादीनां च संमता ॥ २१ ॥

अनार्षमान्ध्रकार्णाटघौर्जराद्यं हि भाषितम् ।
अपभ्रंशं विजानीयात् प्राकृतं तु न तादृशम् ॥ २२ ॥

श्रुतौ तु न म्लेच्छितवा इत्येतदपि यद्वचः ।
तदनार्षवचांस्येव निषेधेन्नार्षमप्यहो ॥ २३ ॥

प्राकृतं चार्षमेवेदं यद्धि वाल्मीकिशिक्षितम् ।
तदनार्षं वदेद्यो वै प्राकृतः स्यात्स एव हि ॥ २४ ॥

अपभ्रंशत्वमेतस्य यत्र क्वाप्युच्यते यदि ।
तत्संस्कृतप्रशंसायै केवलं न तु वस्तुतः ॥ २५ ॥

तत्प्राज्ञाः प्राकृतीं भाषां काव्ये व्यामिश्रके मुहुः ।
प्रयुञ्जते सतां प्रीत्यै संस्कृतैस्तुल्यकक्ष्यया ॥ २६ ॥

एकत्रातुल्यकक्ष्यत्वे प्रबन्धे स्यात्प्रवेशनम् ।
न संस्कृतप्राकृतयोर्यथैव द्विजशूद्रयोः ॥ २७ ॥

तस्मात्संस्कृततुल्यैव प्राकृती चापि भारती ।
मान्यते शास्त्रतत्त्वज्ञैः किमतत्त्वज्ञभाषितैः ॥ २८ ॥

मुग्धगम्भीरमधुरं संस्कृतादपि कोमलम् ।
केन नाद्रियते काव्यबन्धाय प्राकृतं वचः ॥ २९ ॥

नानाव्याकरणज्ञोऽपि काव्यतत्त्वार्थवेद्यपि ।
व्यामिश्रकेषु काव्येषु मुह्येदप्राकृतः स चेत् ॥ ३० ॥

अप्राकृतं रूपकं चेन्निर्गन्धकुसुमोपमम् ।
भ्रमरैरिव विद्वद्भिरास्वाद्यं नैव जात्वपि ॥ ३१ ॥

न तच्छास्त्रं तच्छिल्पं न सा विद्या न सा कला ।
नासौ योगो न तज्ज्ञानं नाटके यन्न रस्यति ॥ ३२ ॥

तस्मात्काव्यं चिकीर्षूणां बुभुत्सूनां च धीमताम् ।
अवश्यं प्राकृतं ग्राह्यं यथैव किल संस्कृतम् ॥ ३३ ॥

एवमेव विजानीहि द्राविडं चापि भाषितम् ।
व्याकर्ता स हि सर्वज्ञो यस्यागस्त्यो महामुनिः ॥ ३४ ॥

नात्यात्मानम् । अहं त्वधिगत्यैवंविधं समयमुपनीय प्रथममदर्शनं वत्सान्, ततश्च गोपकुमारान्, ज्ञास्यामि चिकीर्षितं कृष्णस्य। किमनेन प्रतिपत्स्यत इति निश्चित्य निर्नाथान् स्वच्छन्दप्रचारान् वत्सान्नीत्वा मायामयं गह्वरं स्वयमन्तरिक्षगत एव विलोकयन्नतिष्ठत् ।

ततः ते गोपकुमाराः भुञ्जाना एव स्मृत्वा वत्सगणान् ससंभ्रममिदमूचुः । 'अहो, दामोदर, महानयं प्रमादोऽस्मद्बुद्धीनाम् । यत्सजग्धिकेलीपरिमुषितमनसो न गणयाम गतं वत्सानाम् । ते परित्यक्ताः अस्माभिः प्रयाताः कं देशं । का नाम भवेदवस्था तेषामनाथानाम् । अलमलमनयोदरंभरितयास्माकम् । उत्तिष्ठतागच्छत पश्यामो वत्सान्' इति वदन्तो विहाय तां गोष्ठीं ससंभ्रममुत्थितेषु गोपकुमारेषु भगवानपि विमृश्य सरभसमुत्थाय कक्षपुटावसक्तवेणुशृङ्गः कटितटदरविस्रस्तपीतवसनः वामकरतलविनिहितौदनकबलः आदायेतरेण दण्डं धीरतरमुवाच— 'अयि भोः सुहृदः निषीदत निर्वृताः भुञ्जीतावशिष्टं। मा भूदन्तरायो वो जग्धेः; न हीदं प्रियं मम यदपास्यार्धजग्धमोदनं गच्छथ गवेषितुं वत्सान् । सर्वथा पोषयति परितोषं पुनःसंघटितापि विघटिता सजग्धिगोष्ठी । भुञ्जीत (?) तावद्भिस्सब्धमभिमतरसास्वादजनितसुखा मध्यमं भागमन्नस्य । अयमेव हि सुवेच्यगुणागुणाप्यायकश्चात्मनो गुणवान् भागः भुभुक्षातिशयाविज्ञेयरसादादिमात्पर्याप्तिविरसादन्तिमाच्च भागात् । अहमेक एवानयामि दूरगतान्यपि वो वत्सबृन्दानीति ।

तदाकर्ण्य वचनं कृष्णस्य प्रमुदिता अपि ते अपारयन्तस्तादृशि व्यतिकरे सोढुं विरहं भगवतः युगपादिदमूचुः । सखे दामोदर, न सन्दिह्मो वयमण्वपि शक्तौ तव। नास्ति सुखौपयिकं त्वदृते किमपि नः।

जानीमः साधु दुर्लभामिमाममृतान्धसामपि त्वया सह सहजग्धिकेलीम् । कोऽन्यो विना त्वामभिमतो रसोऽस्माकम्, यदास्वादात्प्राप्स्यामः सुखम् । अपरिच्छेद्यैकानन्दरसे हि त्वय्यसन्निहिते हि आददिमहेऽन्नेष्वन्येषु वा कः सरसः आप्यायकोंऽशः को वा विरसोंऽशः, किं कुर्मो वयं त्वद्गुणनिघ्नवृत्तयः न कदापि प्रभवामातिलङ्घितुं त्वच्छासनम्, किमनुलपितेन; जानासि त्वमेव तत्सर्वमपि यन्मनसो यद्वृत्तयो यद्रूपाश्च वयम् । तदायाहि द्रुतम् । याह्यानय वत्सान् सत्यमिदमवगच्छ तावदपि दक्षिणकराद्धृतकबलानपगतेतरवृत्तीनेव नः, यावद्भूषयः पुनरपीमां परिषदम्' इत्यनुयुक्तैस्तैरपक्रम्य तस्मात्प्रदेशात् परिभ्रमन्नुपान्तवनवाटीषु निपुणं विचिन्वन् वत्सान् दूरापयानसंभावनया मुहुराह्वयन्नुच्चैः तत्तन्नामभिर्मुहुरापूरयन् शृङ्गं मुहुर्दूरं धावन्नितस्ततः कृतविविधयत्नोऽपि यावन्न लेभे प्रवृत्तिं वत्सानां तावदेव सावशेषया क्षुधा दूरपरिभ्रमणोपजनितेन श्रमेणोपचीयमानातपजनितेन तापेन वत्सगणानुविद्धया चिन्तया च व्यथितहृदयो निबिडशाखामण्डलापास्तदिवसकरकरप्रवेशमुपगम्य मूलदेशं कस्यचित्तमालपादपस्य तत्र च क्रान्तहरिततृणराजिमृदुतरस्पर्शे धरणीतल एव निषसाद ।

तावदेव विधाताप्युपनीय गोपकुमारानपि तदेव मायाकुहरं, मन्यमानः कृतकृत्यमात्मानं स्वं लोकमगच्छत् ।

अथ भगवानपि क्षणेनापगतश्रमो वत्सगणक्षेमैकान्तवृत्तिना मनसा चिन्तयामास । 'अहो महानयं सन्दर्भो मामप्याकुलयति । गवेषयन्नपि सर्वतोऽत्र न पश्यामि वत्सान्; यदि तान्विनाशयेयुः हिंस्राः कथं न दृश्यन्तां खुरपुच्छादयस्तदवयवखण्डाः यदि दूरमनु-

घाव्य गताः कथं न लक्ष्येत पदपङ्क्तिस्तेषामस्मिन् वनोद्देशे । कथं वा न निवर्तेरन् झटिति काननान्तरव्यापिना शृङ्गनिनदेन मम ; यद्यपहरेयुर्निरवशेषं मायाविनो दनुजाः कोऽर्थो वत्सैस्तेषाम् । मदर्थः खलु सर्वोऽपि समुद्योगो दनुजानाम्' इत्यन्यदाकलयन्नविश्रान्ततर्कसन्धानदुःस्थहृदयः पुनरपि विममर्श । किमनया वृथा कल्पनया एकाकिनो मम । ततः प्राप्य पुनस्तदेव पुलिनं संमन्त्र्य च तैः प्रस्थापयामि तानेव मार्गितानि वनानि स्वयमपि च प्रयते' इति निश्चित्य त्वरितगतिः पुनस्तदेव स्थानमाससाद । तत्र सर्वतः प्रसारितदृष्टिरपश्यन् गोपकुमारान् विस्मयस्तम्भितस्तूष्णीमतिष्ठत् ॥

अथ क्षणापगमे च धैर्येण संस्तभ्यात्मानमात्मना विचारयामास । कस्येयं बलवती मामपि मोहयति माया । नैते विचलेयुरेकमपि पदं गोपकुमाराः मत्प्रत्यागमनपर्यन्तमस्मात्प्रदेशात् । प्रतिज्ञाता च विशेषतस्तैः सर्वधा अप्रवृत्तिरात्मकार्येषु । 'हन्त, चित्रमिदं यत्तादृशानपि न पश्याम्यत्र सुहृदः । यत्र विहायागममन्यतः' इति विमृशन्नेवान्ततो विज्ञाय तद्वैधात्रं सर्वमपि स्मितप्रभारञ्जितवदन आत्मनाभाणीत् । अयि पितामहाशक्नुवन्नपि स्वयं विमोक्तुं मदीयं मायाबन्धं, यतसे बालिश इव मामेव मोहयितुम् । भवतु द्रक्ष्यसि पुनरन्यं प्रकारं मायायास्तदा च किं विदध्याः, किमध्यवस्येः इति वदन्नेवाप्रतिरोधेनात्मसंकल्पेन तत्क्षणमेव तद्वयसस्तच्चेष्टितान् तद्रूपांस्तदाकारांस्तदनुभावांस्तद्व्याहारांस्तत्संख्याकान्— किं बहुना— तानेव बालकान् वत्सांश्च समुत्पाद्य तैःसह विहृत्य यमुनाटवीष्वपरदिशावधूटीवदनमण्डलसिन्दूरतिलकायमाने तरणिमण्डले शनैः प्रतिनिवृत्य वनात् तैः सह व्रजं विवेश । तदा सर्वेऽपि कुहनाबालका घोषमुपगम्याविज्ञातभेदाभिरा-

त्मजननीभिरुपलाल्यमानाः सुखमनयन्त तां प्रथमां रात्रिम् । एवमेव प्रतिदिवसमपि प्रातरुत्थाय निष्क्रम्य व्रजात्तैर्वत्सैस्तैरेव गोपबालकैः परिवृतश्चरन्वनान्यविज्ञातगतिरमरैर्मुनिभिरन्यैश्च संवत्सरमरमत बृन्दावने ।

अथ विधाता मानुषेषु वत्सरात्मकेन तेनैव क्षणेन जिगमिषुः स्वं भुवनं व्योम्नि क्रममाणः ऊर्ध्वान् लोकानम्बरचरैर्विमानयायिभिरन्यैश्चासंमानितः केवलमात्मप्रजाविहतिविशेषपरिधूनेन मनसा व्रीडाभरोद्वहनमन्दीभूतोद्गतिः शनैर्गच्छन् संचिन्तयामास । हन्त! अपूर्णेनानेनैकेन क्षणेनात्मलोकादमरैरुपास्यमानः प्राप्य बृन्दावनं ततः प्रतिनिवृत्तोऽस्मि । तस्य चैतावतैव कालेन महिमा गौरवमधिकार इति सर्वमिदं विपर्यस्तम्। तथा हि— ये मामवतरन्तमम्बरतलादवनीं प्रत्युदगच्छन् भयविनयगौरवभरघटिताञ्जलयो भक्तिप्रह्वाः, त एवेमे वीक्ष्य मामुद्गच्छन्तं कृतमहापातकमिव दूरमुपसर्पन्ति वियच्चराः सुरासुरयक्षगन्धर्वाः वसवः सिद्धाः साध्याः अन्ये च । ये च स्वैरचारिणो दिवि व्योमयानैर्वीक्ष्य मामागतं यदृच्छयापि भक्तिविनमितमौलयः स्तुवन्तः सामभिः शंसन्तः ऋग्भिः पठन्तो यजूंषि अनुसस्रुराप्रत्यनुज्ञम् । त इमेऽन्तिकगता अपि अपूज्यमिवावन्द्यमिवासम्भावनीयमिवानुपसर्पणीयमिवासंस्कृतमिवान्यमिव भावयन्तो झटित्यपसर्पन्ति दिव्या महर्षयः ।

ये च विज्ञाय मां कार्यहेतोर्निष्क्रान्तं सत्यभुवनात् नमन्तोऽन्वागच्छन्त मां, त इमे संमुखागतमपि अनादरपिशुनैरनाविष्कृतगौरवैरनावेदितसंभ्रमैरव्यक्तस्मयैरप्रकटितभक्तिभिरनुपजातविकृतिभिरीक्षणैर्वीक्षमाणा न चलन्ति स्थानात्तिष्ठन्तः । न परावर्तन्ते यान्तः । निवर्तन्ते

चागच्छन्तो लोकपालाः। अहो! महदिदमद्भुतं यदहमभवमनेनैव क्षणेन दिव्योऽदिव्यश्च वन्द्योऽवन्द्यः मान्योऽमान्यः। किं बहुना, विधाताप्यविधाता च। किमत्र प्रतिकरोम्यविज्ञातनिमित्ते वस्तुनि? सर्वदा ज्ञातेऽपि दूरापेता प्रतिकारकथा, अलमनयानर्थकयात्यायतया चिन्तया। भवतु पश्यामि प्राप्य स्थितिं स्वलोकस्य। यदि पुनरियमनुबध्नीयात् तत्रापि मामवस्था, ततोऽवधारयामि करणीयमिति त्वरितगतिरुदगच्छत्।

अथ तेनैव क्षणेन गत्वात्मलोकं तत्र च शाखानगरेषु पुरोपवनेषु कूटेषु गोपुरेषु संवरणेषु चत्वरेषु प्रतोलीष्वन्येषु चावकाशेषु स्वच्छन्दविहारिभिरशङ्कैरमरैरनभिनन्दितागमनः क्रमेणोपचीयमानविस्मयव्रीडान्यथाक्रान्तहृदयः प्रविश्य निजमालयं तत्राप्यप्रणतः प्रतिहारिभिरमानितः पौरैरनुज्झितमार्गावकाशो जनैरवारितप्रवेशः केनापि, प्रविश्य सभामद्राक्षीदपरमात्मसदृशमासीनमम्बुरुहकर्णिकारमये विष्टरे उपास्यमानमाकुलितकरकमलैर्दिव्यैर्मुनिभिराराध्यमानमन्तिकोपविष्टं विमलतनुसुषुमालहरीसमालिप्तपरिषदाभोगामास्फालयन्तीं मनोहरसुकुमाराङ्गुलिव्यापारसमञ्चिताभ्यामारक्ततलाभ्यां हस्ताभ्यामात्मप्रभासंक्रान्तिद्विगुणितधवलिमपरभागां करतलयुगलप्रभासम्पर्कसमासादितारुणिमप्रकर्षतया विद्रुममयप्रवालामिव विभाव्यमानां चतुस्त्रिंशत्स्वरस्थानभूषितां दन्तमयीमिव ब्राह्मीं वीणां समनुगतग्राममूर्छनासुखदरमुकुलितनयनकोणामविज्ञेयमधुरिमभेदतया साधुजनहृदयवृत्त्येव समञ्चितविवेकया विदग्धकविवाण्येव सुविहितगमकया योगिजनसमाधिनिष्ठयेव स्थानप्रचारव्यसनिन्या विरहोत्कण्ठितयेव प्रियरागावलम्बितया जलनिधिवेलावनराज्येव उत्तालया संयमिवृत्त्येवाव्यग्र-

तानाकलितया सवनक्रियेव ग्रहसंहितया स्मृत्येव श्रुत्यनुगतया यतिचर्ययेव न्यासशोभितया ग्रीष्मसमयलक्ष्म्येव जातिसुभगया मुनिजनमनीषयेवाविरहितप्रसादया सत्काव्यार्थभङ्ग्येव सुव्यक्तया उत्तमनायिकयेव गुणपूर्णया निर्वृतयेव प्रसन्नस्वरया भूतपतिकन्ययेव सुकुमारलक्षणया आढ्ययेव सुरत्नभूषितया मृद्वीकयेव मधुरया गीत्या तमेवोपवर्णयन्तीं भारतीं तस्याश्च नातिदूरोपविष्टं मधुरमहतीनिक्वाणानुगतेन गीतेन तामेवानुगायन्तं नारदमपि च तस्यैवाभिनवविधातुः पुरतः समुचितललितमनोहरसमधिकपात्रगुणभूषिता विलसितमणिगणप्रत्युप्तविविधभूषणप्रभावितानविद्योतितसुकुमारावयवरामणीयकविस्मापितानिमिषत्परिषन्मण्डलाः प्रचलितरत्नकुण्डलगभस्तिस्तबकप्रतिफलनसमुल्लसदमलकपोलतलाः गुरुतरकुचभरदरविनमितनुलतिकाः दिव्यवसनपरिपोषितशोभाप्रकर्षसमुत्तप्तकनकलतिकादेशीयकमनीयावयवाः घननितम्बपरिक्वणत्काञ्चीदामवेष्टनावष्टब्धतनुमध्याः विकसितजलजदलविशालनयनाः हृदयहारिकलमधुरसरसगम्भीराग्राम्यपेशलालापाः कृतश्रमा नृत्तेषु कोविदा वाद्येषु प्रवीणा गीतेषु निष्णाताः श्रुतिस्वरग्राममूर्छनाक्रमेषु विदग्धास्तालभेदेषु चतुरास्तालाङ्गस्वरजातिकल्पनाप्रकारेषु दत्तावधानाः श्रुतिलयभेदेषु परिवेष्टिताः प्रधानगायकचतुष्टययुजा समञ्चितेनाष्टभिरुपगायकैः समन्वितेन चतुर्भिस्तालसनाथकैस्तावद्भिर्मार्दङ्गिकैःप्रत्येकमपि तत्सङ्ख्याकैर्नखपवनशरीरजनादप्रकाशनव्यग्रैर्विदग्धपुरुषैः समुदञ्चितश्रुतिसहकारदायिभिश्च समुपपन्नगभीरसन्निवेशविशेषितपरिपोषितपरभागेनोत्तमोत्तमेन बृन्देन तादृशव्यतिकरगीयमानगाथार्थाभिव्यक्तरसभावाङ्गाङ्गिभावविज्ञानसमुन्मिषितमानसोल्लासकर्णेजपरमणी-

यविविधवदननयनाद्यवयवव्यापाराः समुल्लसिततरुणसहकारपल्लवकोमलिमहरणनिपुणचरणविन्याससमनुगतलयविशेषाः अभिनीयमानसात्विकानुभावसंचारिनिवहाभिव्यञ्जितस्थायिभावाः प्रकाशयन्तीराङ्गिकैर्व्यापारैरुदयं सन्धिं शान्तिं शबलताञ्चान्तराणां भावानां प्रकटयन्तीर्भावानुपनयन्तीरनुभवसमां दशां समुचितैर्धुतविधुतादिभिश्चतुर्विंशतिभेदैः शिरसां समस्निग्धादिभिश्चतुश्चत्वारिंशद्भिः प्रकारैर्दृष्टीनां सहजादिभिः षड्भिर्भ्रूभेदैर्नतादिभिः षड्विधैर्नासिकाप्रकारैः पञ्चविधैश्च स्वच्छादिभिरुच्छ्वासैः एकविधेन निश्वासेन निवर्तनादिभिः षड्विधैरधरव्यापारैः काम्पितनिकुञ्चितादिभिः कपोलभेदैः समाञ्चितादिभिर्नवभिर्ग्रीवाभिराभुग्नादिभिः पञ्चभिरुरोभेदैः तावद्भिरेव विवर्तितप्रसृतादिभिः पार्श्वप्रकारैस्तत्संख्यैर्विवृतरेचितादिभिरष्टभिः कटिभेदैरूर्द्ध्वाधोमुखादिभिः षोडशभिर्बाहुप्रकारैः समुचितप्राणसंपात्तिसमुपनतगुणगरिमभिः सप्तविंशतिविधैः पताकादिभिरसंयुतैर्हस्तैः पुष्पपुटादिभिः षोडशभिः संयुतहस्तभेदैरुद्वृत्ततलमुखादिभिश्चतुर्विंशातिभिःपादभेदैर्वैष्णवादिभिः पौरुषैः षड्भिःस्थानकैः सप्तभिरायतावहित्थाश्वक्रान्तादिभिःस्त्रैणैःस्थानकैः स्वस्तिकादिभिः त्रयोविंशद्भिर्देशीयैः स्थानकभेदैः द्वात्रिंशद्भिर्लसमानतनुलतावलनरमणीयानां प्रेक्षकजननिवहहृदयभ्रामणधुरीणानां भेदैर्भ्रमरीणामवस्था आलम्बनानामुन्मेषं रसानाम्, रूपं स्थायिनाम्, स्फूर्तिं भावानाम्, गुणदोषौ वस्तूनां चोपहसद्भिरिव प्रवर्ग्यसहकृतैः क्रतुभिरिव सुरगणसंभावनार्थैर्मोक्षैरिवानन्दैकरसैः ब्रह्मनिदिध्यासनप्रकारैरिव विसारितलोकैः सुरगणैरिव ध्रुवाञ्चितैः पद्यैरिव समचरणविन्यासैर्निर्गमैरिवाङ्गसहकारशोभितैरागमैरिवालम्बितश्रुतिभिर्योगैरिव लयोपगतैः प्रणामाञ्जलिभिरिव संयुतहस्तप्रयोज्यैर्वासन्तिकवनवाटैरिव

भ्रमरीसंगतैः सज्जनव्यापारैरिवानिगीतैः वर्षागमसमयैरिव घननिदन-मेदुरैः कीचकवनैरिव सुषिररवसंगतैः नरकासुरनासीरैरिव मुरजनिर्ह्रा-दभरितैरवनीशावरोधैरिवोज्वलाङ्गहारैः प्रामाणिकव्यवहारैरिवाभिनय-प्रचुरैः अध्वरमण्डलैरिव शालान्तरालकलितोपरवैर्मखविधानैरिव सुद-क्षिणानुमतप्रकर्षैर्दिव्यैर्नृत्तैः प्रेक्षकात्मस्वभ्यासपटिमसहकृतेषु स्वप्रका-शानन्दरूपेषु तत्तद्रसभेदोपपादनचातुर्या आलिखितामिवोत्कीर्णामिव प्रत्युप्तामिव संघटितामिव कीलितामिव निखातामिव सर्वामपि तां परिषदं कुर्वतीर्देवता इव रागस्वराणामूर्वशीप्रमुखाः स्ववेश्याः, तासां च परितः तुम्बुरुप्रमुखान् प्रख्यातगीतातोद्यविद्याचातुर्यरूपौदार्या-नुत्तमाभिजनगुणशीलधुर्यान् गन्धर्वपतीन्; किं च तस्यामेव बहुरूप-मणिगणदीप्तिनिचयभास्वरायामतिशयितरविशशिहुतवहत्विषि स्वयं प्र-भायामविज्ञेयपरिणामसंस्थानायामचिन्त्यरूपायामनुक्षणभिद्यमानरूप-गुणतयाऽनिर्देश्यप्रकारायामस्तम्भविधृतायामनुक्षणस्पर्शायां सुख-मय्यामपगतक्षुत्पिपासाश्रमायामपनीतश्रमग्लानिदुःखशोकायामपाकृत-जरामरणरोगभयायां सभायां महार्हासनोपविष्टान् भुवननिर्माणकर्म-णान् दक्षप्रचेतःपुलस्त्यपुलहक्रतुमरीचिकश्यपभृग्वङ्गिरःप्रमुखान् प्र-जापतीन् वसिष्ठागस्त्यवालखिल्याथर्वाङ्गिरःप्रभृतीन् ब्रह्मर्षींश्चापरान् नक्षत्रपरिवेष्टितममृतकिरणग्रहनिकरावृतं च गभस्तिमालिनं दिक्पा-लकांश्च स्वस्वगणपरिवेष्टितान् सनत्कुमारप्रमुखान् योगाचार्यान् पितृ-गणान् वसुगणान् रुद्रानादित्यान् विश्वेदेवान् साध्यान्— अपि च मूर्त-मष्टाङ्गमायुर्वेदमवाप्तप्रतीकांश्चतुरोऽपि साङ्गान् वेदानुपगतवपूंष्यखि-लानीन्द्रियाणि गुणांश्चोच्चावचान् तथैव शरीरभृतो नानारूपव्यञ्जनान् यज्ञान् मन्त्रान् पुरुषार्थान् तथैवातिमनोहररूपाविभ्रमरमणीयदिव्य-

शरीरा विष्णुपदीप्रधाना महानदीः सागरान् शैलान्, अपि च दया-
(सनिष्यन्दिभिरष्टभिरपि विलोचनैर्विलोकयता सर्वतोऽपि सभां
विनयमधुरव्याहारेण स्वागताभाषणतत्परेण कुशलानुयोगप्रवणेन सां-
त्वयता यथार्हमुपागतान् योजयता चानेनापनुदता सन्देहान् अपाकु-
र्वताप्रतिपत्तिम् उपपादयता धृतिम्, सफलयता तत्तदाशंसितानि रञ्ज-
यता मनांसि उत्पादयता उत्साहम्, अधितिष्ठता स्वीयमेवाम्बुरुहमय-
मासनं तेनान्येन विधिना पूजितान् पूज्यमानांश्चागतानागच्छतः प्रवि-
ष्टान् प्रविशतः आसीनानुपविशत उत्थितानुत्तिष्ठतो निवृत्तान्निवर्तमानान्
गतान् गच्छतश्चोस्थानगतान् सर्वानपि सुरासुरगन्धर्वयक्षकिंनरोरग-
पतगपतीन् । अथ सर्वतः परिभ्रमन्नपि तस्यां वीक्षमाणः सपितामहैः
समहर्षिभिः सभासदैरपूर्व इवासंस्तुत इवान्य इवोद्भूतविस्मयो मनस्य-
करोत् । अहो विपर्यस्ता स्थितिः सत्यलोकस्य । यथानिष्क्रान्तोऽस्या
येन तेनैवं पुनः प्राविशं सभामिमां क्षणेन । एतावतैव पश्याम्यधि-
तिष्ठन्तं मदीयमासनं मत्सदृशं मामिवान्यम् । न जाने स किं नाव-
लोकयति मां पश्यन्नपि किं न गृह्णाति स्वरूपेण किं वावेत्त्यन्यम्; येन
स विलोक्य मां दूरादेव नोदतिष्ठदासनान्नोपससर्प प्रश्रितो नापससर्प
विष्टरादन्यतः न समभावयत् स्वागतेन न वाऽपृच्छत् कस्त्वमिति ।

आस्तामिदम् इयं सर्वज्ञाप्यधिदेवतापि विद्यानां चिरोदूढप्रणयनि-
र्भरापि भारती अभिनवेव नागतमभिननन्द माम्, अपरिचितेव न स्व-
रूपमपश्यत्, अविज्ञातगुणशीलेव नोपचचारोपचारैः, अनधिगतानु-
बन्धेव नासूचदियङ्गितैः प्रणयम्, केवलं तु कच्छपीवादनसुखपरवश-
हृदया तिष्ठति तटस्थेव । किं बहुना, मत्परिचरणैकवृत्तिरपि मदायत्तो-
ऽपि मद्व्यपेक्षोऽपि मदेकावलम्बोऽपि न संभावयति मां सर्वोऽप्यत्र

दासदासीगणः । किमियमविज्ञातक्रमा मोहयति मामपि कापि माया । किं प्रमोहो बुद्धेः, किं स्वप्नोपगतो विप्रलम्भः, अथवा कथं मोहयेदन्या मोहयन्तं मां जगदेव मां माया कथं वा मुह्येत बुद्धिर्मम विधातुः कथं स्वप्नोऽस्वप्नस्य । महानयमपकर्षो मत्तेजसः । यत्प्रवृत्तो मोहयितुमन्यं स्वयमेवामज्जमगाधे मोहकूपे । सर्वथानीशोऽस्मि परिज्ञातुमत्र तत्त्वम् । केभ्यः कथयेयमिममश्रुतमदृष्टमचिन्तितमसदृशमपूर्वं व्यतिकरम्? श्रुत्वा च ते किं प्रतियन्तु । अथवापास्य लज्जां काममपि निवेदयेम विवेचितस्थानास्थानभेदेन व्यथातिशयपरिमुषितस्वास्थ्येन मनसाभिनवोपनतं पराभवमात्मनोऽन्येभ्यः । कथं नु न गणयेयुर्युक्तरूपं त एव मदीयं दुःखं येभ्योऽह्ययं हृदयमर्मकृन्तनः पराभवः । सत्यमवैम्यनेन मत्तोऽपि बलवत्तरमस्ति किंचित् भूतं तेनैवापहृतमहिमासीति पुनरप्यचिन्तयत् । आस्तामिदम्, जानामि प्राप्य बृन्दावनम् । स किमपश्यंस्तत्र बालकान्वत्सांश्चाहमिवाटति विचिन्वंस्तानेव मोहितधीः मन्मायया कृष्णः । किं पलायितः काप्यप्रज्ञातं बलवदभिभूतो ह्रिया अपारयन् प्रवेष्टुं घोषं विना गोपकुमारान् वत्सांश्च । अथ घोषेऽपि नष्टेषु सकृष्णेषु कुमारेषु वत्सेषु च तानपश्यन्त्यः किं विलपन्ति गोप्यः । किं वा क्रन्दन्ति गावः, अपि च तदपि यत्प्रतिविदध्यान्महत्यस्मिन् व्यतिकरे स बालः कृष्ण इत्याकलयन् तत्क्षणमेवात्मभुवनान्निववृते । अथ प्राप्य बृन्दावनं तत्र विहरन्तं सर्वैरपि बालकैश्चारयन्तं तानेव वत्सान् कृष्णं ददर्श । तेनाचिन्त्येनानन्यसुलभेनाद्भुतेनाक्रान्तहृदयो महतीं चिन्तामुपययौ । हन्त! सर्वमिदमन्यथा वर्तते यद्विचिकित्सितम्, नकोऽप्यलं ज्ञातुं महतेऽन्यो निवेशितं मया मायाकुहरे वत्सबालकगणम् । इह तु

खेलन्ति चरन्ति च त एव । अपि ससर्जेमांस्तत्सदृशान् स एवापरो वेधाः । यमपश्यमधितिष्ठन्तं मदीयमासनम् । तर्हि कुतो न ज्ञायतां वयसा रूपेण लक्षणैश्च भेदः पुनःसृष्टेष्वेतेषु । नाहमपि प्रभवाम्यनाकलितभेदं सृष्टं पुनःस्रष्टुम् । अथ यद्युपनीतास्त एव तस्मान्मायाकुहरात्तेनान्येन वा । ननु प्रतिहन्येताप्रतिहता शक्तिर्मदीया । अहो जिह्वेमि ! प्रलपन्नेवं स्मृत्वा चिरविनष्टामपि शक्तिम् । कथं बिभीयात् खल्वाटो मुण्डनात् । भवतु तदपि पश्यामि यत्र ते निवेशिता इत्युपगम्य कुहरं तत्र च दृष्ट्वा स्वपत इव विचेतनांस्तान्निवेशितपूर्वानतिशयितविस्मयः पुनरपि महतीं चिन्तामवाप । हा ! हा ! किमिदमचिन्त्यमप्रतर्क्यमविश्वसनीयं यत्स्वपन्तीह निवेशितपूर्वाः सर्वेऽपि ते वत्सा बालकाश्च । के नाम ते ये विहरन्ति स्वैरं चरन्ति च वनस्थलीषु । निपुणमपि विमृशन्न लभे निश्चयमत्र । यद्यद्धा न्यवेशयं मायाकुहरे तान्, कथं ते चरेयुर्बहिः । अपि कच्चित्प्रथमदर्शनजातसंस्कारात् स्वनिलयोपलब्धेन परिभवेन च युगपदाक्रान्तहृदयोऽपश्यमवतरन्नेवाम्बरादाकीर्णमिव तैरेव बालकैर्वत्सैश्च बृन्दावनम् । अवस्थापयन्ति खलु दृढनिरूढाः संस्काराः असतोप्यर्थान् गोचरे । अपि च पश्यन्ति भयपराभवविषादसुप्तमोहोन्मादादिभिरभिभूतमनसः सतोप्यर्थान् भावनाबलादग्रतः । भवतु तद्यच्च यादृक्च अद्य पुनरपि पश्यामि तानेव विहरत इति किंचिदन्तरमुपगम्यापश्यत् पूर्ववदेव तान् विहरमाणान् । अथ पुनरप्यचिन्तयत् । अहो अनेनैव न्यायेनान्यत्र निवेशेप्यप्रत्ययकलिलं हृदयम् । भवतु निपुणं पश्यामि तैरेवाष्टभिरपि विलोचनैस्तदेव कुहरमिति त्वरितगतिरुपसृत्य स्वपत एव तानपश्यत् ।

एवमविच्छिन्नपूर्वपूर्वमृषात्वकल्पनासन्तानदन्तुरहृदयश्चिरमायासयन् गतागतैरात्मानं क्वाप्यनुपशान्तसन्देहतया अपारयन्नेकमपि निर्णेतुमर्थं परिद्यूनहृदयोऽकाण्डोपनम्रेण विलयेन चिरोदूढस्यात्ममहिम्नः महतीमात्यन्तिकीं चिन्तामकरोत् । अहो! सर्वतोऽप्यप्रत्ययबहुलः आत्मैव मे स्वयमपि न विश्वसिति । मन्ये मत्तोऽपि बलवत्तरस्य कस्यापीयं जगन्मोहिनी शक्तिः ययाहमस्मि गरीयस्या प्रबुद्धोऽपि सुप्तः जानन्नपि विकलकरणः अपूर्णपरार्थोऽपि प्रच्युतः स्थानात् अवरोपित ऐश्वर्यात् विभ्रंशितोऽधिकाराद्वियोजितः शक्त्या, जीवन्नपि मृत एव । सर्वथा नेतः प्रतिनिवृत्य प्राप्नुयां स्वं लोकं स्थानं पराभवानां कथं लभ्येत सुखौपयिकीस्थितिर्दैवोपहतैश्वर्येण मया (घरेषु?) लोकेषु निवृत्ता अर्थाः अवसन्नानि कार्याणि प्रतिहतं जन्मप्रयोजनम् । तदस्मिन् बृन्दावने समासक्तगात्रो दारुणं न किंचित्पश्यन् न किंचिदपि शृण्वन् न किंचिदपि जल्पन् न किंचिदपि स्मरन् निरिङ्गो निःसुखो निर्मनाः केवलं तु काष्ठभूतोऽपनयामि भूयसो वर्षपूगानित्याकलयन् प्रपन्नः परां कोटिं निर्वेदस्यान्तिकवर्तिनः कदम्बतरोर्मूलभागमाश्रित्य निष्पन्दतनुरतिष्ठत् ।

अथ न चिरादेव घनतरगभीरधाराधरस्तानितमांसलः समुचितमार्जनाविशेषपोषितमृदङ्गनिर्ह्रादद्विगुणितः हृदयहारिदिव्यातोद्यनिनदः शुश्रुवे ।

ततः कमलभूरपि किमिदमिति झटित्युन्मील्य लोचनान्यमृतधवलैर्निरन्तरनिपात्यमानदिव्यकुसुमसन्दोहसंवादिसुधारसशीकरासारैः शारदैरम्बुधरपटलैरवच्छादितमन्तरिक्षं प्रत्यग्रोदयरागराञ्जितान् धरणीमवतीर्णान् दिनकरमणिबिम्बान् सकलकलापरिपूर्णान्यसंख्येयानि स-

मुन्मिषितज्योत्स्नाजालविसराञ्चितान्यमृतकिरणमण्डलान्यखिलहरिन्मण्डलविसारिभिरमरपतिशरसहस्रैराकीर्णमुपचितस्फुरणैरुल्लसितरूपैरुडुगणैरुपपाद्यमानप्रकाशमनुपक्षीणरूपेण संध्यारागेण चाभिव्याप्तं ददर्शान्तरं रोदस्योः । तेनासंभावितेन प्रत्युत संभावनादूरेण व्यतिकरेणातितरां विस्मितोऽचिन्तयत् । अहो! महदिदं विस्मयस्थानं यद्विपर्यस्ता स्थितिः शाश्वती लोकानाम् । तथा हि— चरन्त्येतेऽपहाय द्यामवतीर्णा धरणीतलमम्बरमणिपोतकाः । एतानि च विलसन्ति विष्वगभिपूर्णान्यैन्दवानि मण्डलानि, एतानि सर्वतः समुद्योतितदिगन्तराणि बलन्ते वलरिपुचापानि, एताश्च स्फुरन्ति अनपसारितद्युतयो नाकाशेऽपि तारकाः इमाश्च सहजचापलविरहदर्शनीयनिजरूपाः प्रकामदर्शनसुभगाः सौदामन्यः । किमयं दिवसः, किमियं रजनी, किं संध्या, किं वा वर्षाः, किं शरदित्येतत्सर्वमपि न वेद्मि, अपि चान्यदिदं संविधानं जगतामन्यः क्रमोऽन्यद्रूपमन्यः प्रकारोऽन्या स्थितिरन्यः परिणामः । किं च द्वादशतनुरेको रविः शुक्लकृष्णयोर्वृद्धिक्षयभागे को निशाकरस्तयोश्च नैककालिकः प्रकाशः प्रभावत्यः तारका निशासु । मुहूर्तमिते संध्ये अचिरद्युतयश्चम्पाः ? जलदागमैकान्तदर्शनानीन्द्रधनूंषि । एवमनियतेऽस्मिन्मदीये विधाने लोकानां वीक्ष्यानियततां विषयाणां विपर्यासं नियमबन्धानामन्यथाभावं संविभागानाम्, व्यत्यस्ततां स्थितीनां चानभिज्ञातनिमित्तमनाकलितप्रयोजनमनवबुद्धपरिणामं मुह्यति मनो मम स्रष्टुरपि किं पुनरन्येषाम् । हन्तामुना विपर्यस्तलोकव्यापारेण विमलमतिः क्रमादुत्तरोत्तराधिकैर्बलवत्तमैर्मायाविलसितैरपहृतशक्तिः किमत्र कुर्यामस्मिंश्च निपुणं विमृशन्नपि न किंचिदपि प्रत्येमि न किंचिदपि निश्चिनोमि,

केवलं तु पुरःप्रसारितदृशा साक्षात्कुर्वता चादृष्टश्रुतपूर्वान् विषयान् मया सम्पाद्यते महानुद्वेग एव मनसः । न पुनः सुखं तत्र पश्यामि किंचिदप्यभिनवमप्यनालोकितमपूर्वमपि रमणीयमपि वस्त्विति तूष्णीमतिष्ठत् ।

ततः क्षणापगमे विधाता स्वभुवननिर्गमात्प्रभृति अनुकलदृष्टाभिनवविविधविचित्रविषयव्याकुलहृदयतयाद्यापि कोऽन्य उपलभ्येत मया प्रकार इति शनैरपश्यत् । तदानीं चोज्वलानर्घमणिमयमकुटस्फुटतरप्रभापटलजटिलोत्तमाङ्गान् रत्नकटककान्तिकवचितप्रकोष्ठानतिमनोहराङ्गुलीयकपरिशोभिताङ्गुलीन् दिव्यमणिकुण्डलाभीशुस्तबकमण्डितगण्डमण्डलान् केयूरशिखरावसक्तैस्तनुपवनान्दोलिताञ्चलैरुत्तप्तकार्तस्वरकपिशैरुत्तरीयैरुपशोभमानान् कण्ठावलम्बिकौस्तुभरत्नद्युतिवितानव्याप्तरोधोन्तरान् विपुलमांसलवक्षस्थलव्यालम्बिस्थूलमुक्ताफलदामलसमानवर्ष्मणः समञ्चितसुदर्शनकौमोदकीखड्गकमनीयकरचतुष्टयान् कण्ठव्यालम्बिवनमालिकानिर्भरपरिमललोभमिलदलिपटलपरिवृतपरिसरान् मधुरतरदरहसितज्योत्स्नाङ्कुरपिपासोन्मुखैराबद्धामन्दमण्डलैर्वृन्दावनचकोरैरनुसृतविधुमण्डलान् कलमधुरशिञ्जितमञ्जुलतरमणिनूपुरनिकरवाचालितैर्हंसकैरलंकृतचरणान्, किं च प्रत्येकमपि सनकादिभिर्योगिभिर्नारदेन दिव्यमुनिना विधिहरिहयशमनमुखैर्लोकपालैरागृहीतप्रतीकाभिर्विभूतिभिर्मूर्तिमद्भिस्तत्त्वैश्च परिवृतान् अपि च पुरो घटिताञ्जलिना सुपर्णेन भक्तिभरविनमितमस्तकस्तोमेन समस्तसरीसृपकुलसार्वभौमेनान्यैश्च पारिषदैरुपास्यमानानभिजातजातरूपसुषुमासोदरसुन्दरतनुलतिकया काञ्चनकमलाञ्चितकरकमलया सकलभुवनजनन्या श्रिया दलितेन्दीवरनिवहनिकाशदेहत्विषा भग

वत्या च भूतधारिण्या परिशोभितपार्श्वद्वयान् अत्युदाराकल्परूपगुण-सन्निवेशानतिशयिततेजस्त्रयप्रकाशानपरिमेयानसंख्येयानखिलभुवनमङ्गलावहान् भगवद्विग्रहानेव ददर्श न वत्सपालान् वत्सान् वा । तेन सर्वातिशायिनाद्भुतेन समाक्रान्तमनास्तत्कालोचितां धृतिमवलम्ब्य चिन्तयामास ।

अहो महानयं भ्रमो मद्बुद्धेः यत्कम्बलेऽपि भल्लूकतां जानन् तद्भीत इव पाण्डुरपि कपिशं पश्यन् काम्मिलार्दित इव च अतदपि तदेवागणयम् । तथा हि, अहमद्य सकलदिगन्तरप्रसृतकान्तिस्फुरणानि सुदर्शनानि विद्युति द्योतितगगनान्तरान् कौस्तुभमणींश्चाज्ञासिषमवनीमवतीर्णानम्बरमणिबिम्बानमृतफेनधवलांश्च शङ्खानगणयं मृगाङ्कमण्डलान्यखिलहरिदन्तरपुञ्जीभूतानि बहुविधदिव्यभूषणमाणीकिरणबृन्दान्यभावयमाखण्डलधनूंषि, हृदयहारिहारलताप्रोतानि स्थूलानि मुक्ताफलान्यपश्यमृक्षाणि मन्दमरुदान्दोलितानि कनकवसनोत्तरीयाञ्चलानि आकलयमचिरप्रभाः । कमनीयकेयूरप्रत्युप्तपद्मरागरत्नकान्तीरशङ्कयं संध्यारागम् । आस्तामियं गुणोत्कर्षसमुपनता भ्रान्तिः सर्वजनीना हन्तैतच्चिन्तयत एव मम मुह्यति मनः । यत्र हतः कृत्स्नोऽपि विचिकित्साविमर्शोऽवधारणातर्को युक्तिरभिसन्धिरूहो मतिः कल्पनेत्येतेषामवकाशः ॥

यन्नाहमेक एव विधिर्नैक एवेन्द्रो वह्निर्यमो निर्ऋतिर्वरुणो वायुर्धनद ईशानो वा एवमेवोपपन्नप्रत्यये दृश्यमाने प्रतिव्यक्तिबाहुल्येन मरुत्सु लोकपालेषु योगिषु महर्षिष्वन्येषु च को विषीदतु कः शङ्कताम् , को लज्जतु, को बिभेतु को वा मुह्यतु । अतः प्रबलेऽस्मिन्ननपहार्ये विप्रलम्भे वृथाऽहमायासयमात्मानमेतावत्सु व्यतिकरेषु कदा-

चिद्विस्मयेन कदाचिल्लज्जया कदाचिद्भयेन कदाचिद्दुःखेन कदाचिद्दैन्येन कदाचिन्निर्वेदेनान्यैश्च तत्तत्समयसुलभैर्भावैः । लोको ह्यविज्ञेयकारणैरनवबुद्धरूपैरदत्तविमर्शावकाशैरपाकृतोहप्रवृत्तिभिरकाण्डावपातगुरुभिरपरिहार्यैः प्रबलविधिविहितैराकुलितहृदयो वस्तुभिरप्रभवन्नपि मुह्यति जडमतिः । तन्नाहमितः किञ्चिदपि प्रत्येमि कुर्यां वा । स एव विदधातु सर्वमपि तद्यत्तस्मै रोचते, यः प्रभवति कर्तुमकर्तुमन्यथा कर्तुं बहुलीकर्तुं विश्वमिदम् । य एवोपानिनाय मामप्येतादृशीमवस्थाम् । अथ यदि किञ्चिदात्मक्षेमौपायिकं यतेयमात्मनाध्यारोपितैकैश्वर्याभिमानेन सर्वथायोजयमनर्थेन महतात्मानं दुर्मोचदुःखसन्ततिर्जालावबद्धावयव इव पत्नी । अतः तूर्ष्णीं स्थितिरेव परमं सुखमित्यवधार्य, उपरतकरणव्यापार एवातिष्ठत् ।

अथ भगवानपि विज्ञायाब्जजन्मनस्तादृशीमवस्था सञ्जातकारुण्यस्तत्साक्षात्कृतपूर्वेणैव रूपेणाविरास ।

अत्रान्तरे निर्भरविकसिततरुकुसुमसौरभभरितेऽपि तस्मिन् वनोद्देशे भगवद्दिव्यमङ्गलाङ्गसंपर्कसंपन्नसौभाग्यतया अप्राकृतपूर्वामोदप्राग्भारमेदुरः विकिरन्नमृतशीकरान् शीतलयन् संतप्तानाप्याययन् प्राणिनः सुखकरमृदुतरशिशिरस्पर्शः पस्पर्श मन्दमन्दं गन्धवाहः ।

अथ धातापि तेनाननुभूतपूर्वेण करकमलपरामर्शेनेव भगवतः मारुतस्पर्शेन समुपजातचेतन इवाप्यायितकरणोऽनावेद्यमविज्ञेयरूपमात्मनाप्यनुभवन् किमपि सुखमुन्मील्य लोचनान्यपगतबालकगणमपनीतवत्सबृन्दं बृन्दावनमपश्यत् । तेन किञ्चिदिव जातविस्मयः सर्वतोऽपि दूरप्रसारितदृष्टिरपि यावन्न किंचिदपि ददर्श तावदेव नातिदूर एवात्मनः पुरस्तादागच्छन्तमम्बुरुहोदरारुणकरतलनि-

हितौदनकबलम्, विनष्टवत्सबालकान्वेषणमिषादिव पर्यटन्तम् अभिनवरसालकिसलयसोदराभ्यामखिलभुवनाक्रमणप्रक्रमाभ्यामतिविततदुरितनिवहनिरवशेषीकरणनिपुणाभ्यामशेषयोगिजनहृदयकर्णिकान्तरसततविधृताभ्यामरिशङ्खकलशकार्मुककुलिशकेतनकुशेशयझषरेखाविराजिताभ्यामतिमृदुलाभ्यां चरणाभ्यामरण्यानीम्, मण्डयन्तमखिललोकवन्दनीयाभिरङ्घ्रिमुद्राभिर्बृन्दावनधरामण्डलम्, अविरलस्वेदकणिकाञ्चितेनोडुगणपरिगतपर्यन्तेनामृतकिरणमण्डलेनेवाननबिम्बेन समुल्लसितप्रसादसुभगेन चन्द्रिकाप्रसरेणेव मधुरेण च दरहसितेनोपपादयन्तं सफलतां लोकलोचनानाम्, चिरव्यायामप्रखिन्नवत्सान्तरलग्नाग्रया पिञ्छमालिकयोपशोभमानम्, कक्षपुटावसज्जितशृङ्गम् विस्रस्यमानाधरवसनव्यापृतदक्षिणहस्तम्, लम्बमानालकलतासंहतिदरसंवृतनिटिलतलम्, क्वचिदारुह्योन्नतान् भूमिभागान्विलोकयन्तमिव दूरगतान्, क्वचिद्विभावयन्तमिवाधःप्रसृतैर्दृष्टिपातैः पदाङ्कान्वत्सबालानाम्, क्वचिदाकर्णयन्तमिव वाशितानि वत्सानाम्, व्यायामेऽप्यनासादितमनोव्यथतया निर्विकारैकरूपमुग्धपुण्डरीकं संमुखपरिवर्तमानं कृष्णं ददर्श । ततो दृष्टमात्र एव तस्मिन् भगवति परस्मिन् वासुदेवे, विगलितमोहबन्धः, प्रकृतिमुपगतेन मनसा विजानन् सर्वमपि तन्मायाविलसितम्, तेन कृतापराधं मन्यमानो नीराजयन्ननर्घरत्नगणप्रभापटलजटिलैश्चतुर्भिरपि मकुटैश्चरणयुगलं भगवतः दृढघटिताञ्जलिरुन्मस्तकभक्तिप्रकर्षावनमितमौलिस्तादृगतिमनोहरभगवत्सौन्दर्यविलोकनसमञ्चद्विस्मयस्तिमितैरानन्दप्रकर्षोन्मिषिताश्रुधारासन्तानैरष्टभिरपीक्षणैर्विलोकयन्नपर्याप्तदर्शनस्पृहमखिलभुवनमोहनमनवधिकमङ्गलनिदानमनुक्षणोल्लसितलावण्यपरभागममानुषसुलभमभिरामं रूपं

भगवतः, क्षणममर्षणीयनिजापराधस्मरणभीतेन क्षणं तद्विफलीभावह्रीतेन क्षणमप्रकाश्यात्मपराभवनिर्विण्णेन क्षणं तन्महिमापरिज्ञानकलितसाहसस्मृतिविहस्तेन क्षणं तत्सविधोपसर्पणानर्हताप्रतिसन्धानपराधृत्तेन क्षणं तत्प्रसादनोपायानुपलम्भपरिद्यूनेन क्षणमव्याजतद्दयानुध्यानप्रोत्साहितेन क्षणमात्यन्तिकप्रपदनोपायावष्टम्भसमवस्थापितेन च बहुरूपेण मनसा कम्पिततनुर्निरुद्योगो निरपेक्षोऽपि च सशङ्को दीनो धीरो निर्विशङ्कप्रवृत्तिर्गृणन् पौरुषं सूक्तं प्रणम्य भूयो भूयः कुहनाकिशोरवपुषं गोपवेषवपुषमादिपुरुषं गद्गदिकोपरुद्धकण्ठध्वनिः सप्रश्रयं विज्ञापयामास ।

भगवन्नचिन्त्याद्भुतानन्तशक्तिमहिमा संकल्पयसि दर्शयस्यवसि हरसि विश्वमेतदखिलमात्मनैव । किंचास्मिंश्चरन्नप्यन्तःप्रविष्टो न लिप्यसे प्राकृतैर्गुणदोषैः, तं त्वामसक्तं भूतेष्वविज्ञेयं मनोभिरमलमानन्दमयमपरिमेयमनन्तमेकमपारयन्तो वेत्तुमपि त्वदेकान्तनिजरूपगुणवृत्तयः सुरासुरनरतिर्यञ्चः सर्वेऽपि त्वन्मायावेशविवशहृदयास्तादृश्यपि त्वय्याबध्नन्त्यात्मगुणानुगुणान् भावान्—

तथा हि, केचिद्विलयमाशंसमाना ज्योतिषि परस्मिन् ध्यायन्तस्त्वामेवानवरतप्रसृतानन्दाश्रुकणनिचिततनवो रमन्ते त्वय्येव । केचन चिरविधृततपसो दुश्चराभिर्व्रतचर्याभिस्त्वामेवोपासते । केचन दृढविहितश्रद्धाभक्तिनिर्भरास्त्वामेवार्चयन्ति विविधैःसमग्रैः सप्ततन्तुभिः । केचिदनुकलोपचीयमानदोषाध्मातमनसस्त्वामेव विद्विषन्ति । केचन त्वय्येव समाबद्धदुर्वारवैरदूषितास्तुभ्यमभिद्रुह्यन्तो नाशयन्त्यन्यान् स्वयं च नश्यन्ति । केचन दधाना अध्यारोपितानुबन्धपरिपोषितप्रेमभरितानि मनांसि त्वामेव मानयन्त्युपलालयन्ति पूजयन्ति

र्पयन्ति खिद्यन्ति रमयन्ति स्वयमपि प्रीयन्ते । केचन मन्यमाना मन्यतमं त्वां जनैषूद्वहन्ति तटस्थताम् । केचन बलविक्रमैश्वर्यशक्तिसाहसौदार्येषु त्वामेवाधिकं मन्यमानास्त्वत्तो बिभ्यति । केचन भीता अलिभ्यः परेभ्यो वृण्वते भयेषु त्वामेव शरणम्—एवं संभाव्यमानो भवान् विविधाभिसन्धिबन्धुरचेतसा लोकेन योजयति तमात्यन्तिकेन श्रेयसा । न ह्यस्ति कश्चित्प्रियः सुहृद्बन्धुर्द्विषद्वा तव सर्वात्मनः । भगवंस्तथापि दुर्मोचनिजमायातन्तुसंदानितेन मदादिना कीटान्तेन संक्रीडसे प्राणिनिवहेन । लोको ह्यविद्याविलसनमहत्या रजस्तमःप्रसरवितत्याहंमत्याभिभूतहृदयो न जानाति त्वां परमं तत्त्वम् । पश्य ममैव प्रमादं बुद्धेः यदहमखिलभुवनसर्गादिमसमयसमुल्लसितादासादितजनिरपि तवैव नाभिपुण्डरीकादध्यापितो वेदाननुशिष्टो निर्माणाय लोकानामपाकृतोपप्लवोऽपि समयेष्ववस्थापिताधिकारोऽपि त्वयैव पुनः पुनस्त्वदायत्तवर्तनोऽप्यविगणय्य त्वन्महिमानमविचिन्त्य त्वद्पदानं विस्मृत्यात्मानमभिमन्यमानः केवलमप्रतिरोधमिवाखिलजगदुपजीव्यमिवासमाभ्यधिकमिवात्मैश्वर्यम्, किं बहुना मन्यमानस्त्वामेव विकार्यमवश्यं प्राकृतमिव कमपि बालकम् । अहो, किं ब्रवीमि न प्रसरति वाण्येव मे; यदुतातीतेहि क्षणे घोराजगरवदनकुहरनिमग्नमवलोक्य त्वां विषीदतो विबुधगणान्याहृश्या निर्धारिततत्त्वस्थित्या मत्या प्रत्याश्वासयम् । तां च विनाश्य तेनैव क्षणेनाज्ञ इव त्वामेव मोहयितुमारब्धवान् । अस्तु वेदमभिधेयं तुभ्यमन्यस्मै वा । कथं नाम प्रकाशयेयमिदं तत्र यादृशीमर्हणाम् । अभिभवति बलवती मां त्रपा । तथापि नास्त्यविदितं नाम किंचित्साक्षिणोऽन्तश्चरस्य कारयितुस्तव जगति भूतं भवद्भविष्यदान्तरं बाह्यं वा । आस्तामिदम् ।

मर्षयामर्षणीयमपि मदीयमागः । अप्रतिहतसंकल्पस्वतन्त्रो विभुरीशोऽपि जगतां न तेऽस्ति दुश्शकं नाम किंचिदपि । अहमपि विनिपातितस्त्वयैवासिन्नपारे मायाकूपारे क्वचिद्भ्रमन् क्वचिन्निमग्नन् क्वचिदुन्मज्जन् अवशो नीयेय । तन्मज्जय संमारय वा । ईशोऽसि । तद्विधेहि यत्तेऽभिमतम् । प्रपन्नोऽस्मि त्वामेव शरणम् — इति ॥

ततो भगवानपि विज्ञायात्मापराधोपज्ञामार्तिं विधातुस्तत्क्षणोज्जृंभितं प्रसादमिव सूचयता स्मितज्योत्स्नावर्षिणा मुखेन्दुना आश्वासयन्निवावस्थापयन्निवाह्लादयन्निव तमवादीत् । अब्जयोने, सत्यमात्थ, दुस्तरेयं माया विना मत्प्रसादम्, अहमपि तत्परवशैस्तदनुगुणविकृतचेष्टैः प्राणिभिर्नैकधा संभाव्येय । मा मंस्थाः कदाप्यनेन व्यतिकरेण सापराधमात्मानम् । परितुष्टोऽस्मि भृशमनेन, यत्प्रवृत्तोऽसि मोहयितुं मामपि, कस्तवापराधः प्रवृत्तस्य रूपानुरूपे कर्मणि मन्यमानस्य च मां प्राकृतमेव बालकम्, अयं हि बलवान् संकल्पो मम यत्प्रकाशयन्नपि मदैकान्तिभ्य आत्मानमवच्छादयामि सर्वतोऽपि प्रतिष्ठापनाय धर्माणामनुग्रहाय साधूनां निग्रहाय चासताम् ॥

किंच, सुलभोऽहमस्मि न दानेन न तपसा नेष्टापूर्ताभ्याम् । केवलं तु सुगमः प्रियश्चोपगतस्य मामेव शरणं न्यस्तात्मनो मयि निर्विकारहृदयस्य । अपि च स एव वेत्ति मां तं च न कदापि मोहयेयम्, तेन च प्रियेय, तस्मै प्रकाशयेय तत्त्वमात्मनः, तस्माच्च नेदीयानस्मि, तस्य च बन्धुस्तस्मिन्नेवारमे, योऽनवरतमप्यावेशितहृदयो मय्येवमनुपलालयन् मत्तोऽन्यन्मनीषया मद्गुणानुध्यानेनैव विनोदयन्नात्मानमनुपजातविकृतिर्मत्संकल्पैकान्तोदयेष्वात्मसुखदुःखेषून्मूल्य लोभमपास्येषणामपसार्य काममुत्सार्य मात्सर्यं निरस्याभिमानमपाकृत्य

विचिकित्सां सर्वत्र सर्वदा सर्वेभ्योऽपि निर्वृतिमेवावलम्ब्य परमखेदय-न्नात्मानं प्रपन्नो मामेवानुवर्तते मत्प्रीत्या एव मदाज्ञाम् । अब्जासन, त्वमप्यसि वेत्ता सकलश्रुतीनां विवेक्ता परावराणां कर्ता लोकानां व्यवहर्ता धर्माणां प्रपन्नो मां संपन्न ऐश्वर्येण पूज्यः सुरासुरनरतिर्यग्ग्रामस्य इज्यः सर्वक्रतुभिर्मान्यो महतां धन्यश्चात्मना । किं ते सत्यमद्य निवेदनीयमनुशिष्टपूर्वस्यानुशासनीयं वा । तन्निवर्तस्वात्मभुवनाय, वर्तस्व निजे पदे, प्रवर्तस्व मैवं विधेषु कर्मसु, निर्वर्तय निजमधिकारम्, निवर्तयानर्थकेभ्यो हृदयं विस्मर मा कदापि निजैश्वर्यविलुप्तधीर्मदनुशासनम् अपि चाद्योऽसि यतो जातोऽसि यदर्थमवस्थापितोऽसि महनीये पदे लम्भितस्तदधिकारमहमपि प्रार्थितस्त्वया साधयामि योगक्षेमौपयिकं सुराणां वसुमत्याश्च तन्महत्कार्यमिति ॥

अथ परमेष्ठ्यपि सुधाधारासोदरीभिः सूक्तिभिर्भगवतः प्रक्षालित इव प्रत्युज्जीवित इव पवित्रीकृत इवापमृष्टकलङ्क इव शमितरजःप्रसर इव विघटिततमोबन्ध इव प्रकृतिमुपगतेन प्रणष्टमोहेन विधूतविशयेन सुस्थिरेण मनसा स्तुवन्निजमुखनिवहनिःसृतैश्चतुर्भिरपि वेदैर्भगवन्तं प्रणम्य तत्क्षणमेवोपनीय सुप्तोत्थितान्वत्सबालकान् समर्प्य भगवते तेन चानुज्ञातः स्वं लोकमुदगच्छत् ॥

ततः सर्वेऽपि ते गोपकुमारा वीक्ष्य कृष्णं प्रेमप्रकर्षोत्फुल्लनयनाः ससंभ्रममुपसृत्य युगपदिदमूचुः— सखे, दामोदर, सर्वेऽपि वयमासीनाः पुलिने प्रतीक्षमाणस्तवैव प्रत्यागमनमनश्नन्त करतलनिहितान्यपि कबलानि पश्यन्तस्त्वत्पदवीं त्वदायत्तमनसोऽतिष्ठाम । तदात्वे च प्रचलयमुनातरङ्गसङ्गतेन शिशिरशीकरनिकरवाहिना मन्दतरस्पन्दनेन पवनेन समाह्लाद्यमानाः तत्कालसुलभया

निर्व्यापारासिकोपनतया च निद्रया चापहृतचेतना नाज्ञासिष्म प्रवृत्तिं तव । कियद्दूरमगा गवेषयन्वत्सान् । कं कमचरः प्रदेशम्? कुत इमान् प्रत्यानयः? कियानतिचक्राम कालोऽन्तरा गमनागमनयोस्तव । परं त्वनुमिमीमोऽनेनानाश्वानेनात्मकरकबलेनाल्पमेवातीतं कालम् । तदागच्छ तदेव पुलिनम् । तत्रैव सुखमासीना भक्षयामो जग्धावशिष्टम् । क्षुधिताः स्मः भृशं प्राप्ताश्च संगमं दिवसस्येति ॥

अथ भगवानप्येवं निगदद्भिस्तैराकृष्टो बलादवलम्ब्यांसौ भुजावुत्तरीयाञ्चलं च तैः सह बुभुजे तदातृप्ति प्रातरोदनम् । अपि च पर्याप्तभोजनेषु पीतोदकेषु च तेषु स्वयमपि पीत्वा पयो यामुनं तैः सह तस्मान्निववृते ॥

एवं शनैः शनैरागच्छन्तश्चारयतो रमणीयेषु वनोद्देशेषु वत्सान् खेलन्तश्च सकृष्णाः सर्वेऽपि ते गोपकुमारा मध्येऽध्वनो गैरिकरसारुणं दलितमिव द्विधा शैलखण्डं महाप्रमाणं प्रत्यग्रक्षतजारुणमजगरभोगशकलं युगपद्विस्मयत्रासभग्नमन्दगतयः ससंभ्रममुपसृत्य कृष्णमूचुः । दामोदर पश्य पश्य नः पुरस्ताद्द्विधाकृतमाजगरमतिभीषणं भोगम्; मन्यामहे यमुनातटगतेष्वस्मासूपागतो दारुणोऽयं निगरितुमेव समृद्धं व्रजं सरीसृपः दलितो बलादस्मदनिष्टविघटनपटुना भूतेन केनापि । एहि, विलोक्य, ब्रूहि च प्रवृत्तिमस्य, यदि जानीष इति ॥

ततो भगवानपि विज्ञाय संभ्रमं तेषां सर्वमपि तद्यथावृत्तं निवेदयामास ॥

बालकास्तु तदाकर्ण्य विस्मितमनसो मन्यमानाश्च कृष्णमेव परमं दैवतं मुहुरुपगूहन्तो मुहुःप्रणमन्तो मुहुःप्रार्थयन्तो मुहुरभिष्टु-

वन्तो मुहुःप्रसादयन्तो मुहुरनुनयन्तो मुहुःप्रशंसन्तो मुहुरुपजिघ्रन्तो वदनकरतलं भगवतः विलम्बितगतयश्च तत्र शनैः प्राप्य घोषं तत्र सर्वमपि तदद्भुतमपदानं दृष्टं श्रुतं चात्मभिर्दामोदरस्याकथयन्त गोपेभ्यः ॥

अथ निशम्य तमुदन्तमुज्जृम्भितसंभ्रमास्ते सत्वरमाधाव्य तं प्रदेशम्, तत्र दृष्ट्वा तमाजगरभोगशकलमाशङ्कमानाश्चानतिदूरनिपतितेन तेनानिष्टं व्रजस्य छित्वा कुठारैस्तदवपात्य गर्तेषु पांसुभिरवच्छादयामासुः । अथ सर्वेऽपि ते प्राप्य घोषं चिन्तयन्तस्तदेवाहर्निशमपि संभृतसंभ्रमैश्चेताभिः प्रस्तुवन्तः गणयन्तश्च दामोदरममानुषमतिमहद्भूतं तदनुषक्ताभिरेव कथाभिश्चरन्तस्तिष्ठन्त आसीनाः शयाना भुञ्जानाः सर्वास्वप्यवस्थासु सर्वकालं सस्त्रीबालस्थविराः सप्रत्ययाः सगौरवाः सभक्तयः सस्नेहाः साभिमानाः सविस्रम्भाः सधैर्याः सप्रमोदाश्च कृष्णेऽत्यवाहयन्त महान्तं कालम् ॥

इति श्रीमद्वेङ्कटाचलार्धीशकृपापरीवाहसमुपलब्धाभिनन्दनीय-
वाग्विलासेन श्रीमद्रामानुजयतिसार्वभौमसिद्धान्तमर्मज्ञेन
श्रीकण्ठ श्रीशैलयज्वना विरचिते
**श्रीकृष्णाभ्युदयकाव्ये पूर्वभागः समाप्तः ॥**

